# KṚDANTARŪPAMĀLĀ

## A CONCORDANCE OF VERBAL DERIVATIVES

By

Sastraratnakara, Kulapati

**PANDIT S. RAMASUBBA SASTRI**

Samskrit Education Society Teaching Centre,

Pettai

With a Preface by Dr. V. Raghavan & General Preface by
Dr. C.P. Ramaswami Aiyar

**VOLUME TWO**

RELEASED BY
HIS HOLINESS

JAGADGURU SRI CHANDRASEKHARENDRA
SARASWATI SANKARACHARYA SWAMIGAL
*of Kanchi Kamakoti Pitha*

Published by

Sri G. SITHARAMAN, Secretary

THE SAMSKRIT EDUCATION SOCIETY, CHENNAI

148/150, Old 98/99, Luz Church Road, Mylapore, Chennai-4

2005

# कृदन्तरूपमाला

मद्रपुरी-संस्कृतविद्यासमितेः कलाशालायां प्रधानाध्यापकैः
शास्त्ररत्नाकरादिविरुदालङ्कृतैः पण्डितवर्यैः
श्रीमद्भिः श. रामसुब्रह्मण्यशास्त्रिभिः

सन्दब्धा

श्रीमतां डा० वे. राघवार्याणां
श्रीमतां डा० वे. प. रामस्वाम्यार्याणां च
आमुखाभ्यां सहिता

द्वितीयभागात्मिका

श्रीकाञ्चीकामकोटिपीठाधीश्वरजगद्गुरुश्रीशंकराचार्यैः
श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणैः
सानुग्रहं प्रकाशिता

मद्रपुरीसंस्कृतविद्यासमितिसचिवैः
श्री. ति. वे. विश्वनाथार्यैः
( 14, पूर्वमाडवीथी, मद्रास्-4 )
प्रकाशिता

१९६६

Price Rs. 100/-

## GENERAL PREFACE

The Samskrit Education Society is one of the latest efforts made by lovers of Sanskrit in Madras to check the erosion or elimination of Sanskrit which is imminent in the different sectors of its studies in this part of the country, notwithstanding that South India has been a stronghold of this language in the past amongst all those who prize intellectual stimulation and spiritual inspiration. The Society was started with the blessings of H. H. Sri Chandrasekharendra Sarasvati, Sankaracharya of Kanchi Kamakoti Peetha, on the occasion of the Golden Jubilee of his accession to the Peetha. I have had the pleasure and privilege of being connected with its management from the inception.

In spite of the difficulties of the present situation and the many causes demanding the help and patronage of the philanthropists, we may assert that during the short period of our existence, we have made fairly steady progress, although it is not spectacular. In Pettai, near Madras, we have a large area of land where our buildings are coming up and a Sanskrit advanced study centre is functioning. We have been concentrating in training young Pandits already qualified in one Sastra to become equipped in another Sastra. We have started a few research projects and publication schemes: a *Concordance of Verbal Derivatives*, a *New Model Sanskrit Grammar* and a *Dictionary of Indeclinables*. Another undertaking of ours is the book on *The Teaching of Sanskrit*. This and the *Concordance of Verbal Derivatives*-Part I I had the pleasure of releasing to the public last year.

The maintenance and promotion of Sanskrit study in the schools face two difficulties today, one stemming from the language formulae of the Government which is explicitly unfavourable to Sanskrit and secondly, the lack of improved methods of making its learning easy and popular. The Society may well congratulate itself in having addressed itself to the latter problem and brought out these books written by able and experienced scholars like Pt. S. Ramasubba Sastrigal and Prof. K. Rama Varma Raja. On behalf of the Society, I must also express my appreciation of the services rendered to the Society by Dr. V. Raghavan who has been in general charge of these and other research projects and publications of the Society. What he and others have been

doing in this part of the country, in the midst of all sorts of difficulties, must evoke the admiration of Sanskritists all over the country.

These and other research projects and the teaching work of the Society have been receiving assistance from the Central Sanskrit Board which deserves all praise for its efforts to rehabilitate in the country Sanskrit, the bedrock of Indian culture.

I wish all success to Sri T. V. Viswanatha Aiyar, Secretary of the Society, who has been building up the resources of the Society and managing its affairs so well. I am quite sure that the Sanskrit Education Society will ere long emerge as an active advanced Centre of a University type for Sanskrit in the South.

C. P. RAMASWAMI AIYAR
*President, The Sanskrit*
*Education Society, Madras*

## PREFACE

The Samskrit Education Society, Madras, has great pleasure in placing in the hands of scholars and students of Sanskrit the second volume of their publication *Kṛdantarūpamālā*. The first volume of this work was released about a year ago by Dr. C. P. Ramaswami Aiyar, the President of the Society. It is a rare piece of good fortune to the Society, which owes its very inception to the blessings of the Acharya of Kanchi Kamakoti Pitha, that His Holiness will be sanctifying the grounds, premises and the new block of buildings of the Society by his *vijaya-yātrā* there and also, on that occasion, releasing the second volume of this large undertaking of the Society.

It is gratifying to note that this project, the Concordance of Verbal Derivatives, has been welcomed by the scholarly world; the reviews as well as the demand for the copies have been very encouraging. However, a feeling of sadness has unavoidably come into the work of the Society by reason of the unexpected demise of Sastraratnakara Kulapati Pandit S. Ramasubba Sastrigal who was the first Head of the Department of Teaching and Higher Studies at the Society. He was a distinguished traditional Pandit and the foremost scholar in *Vyākaraṇa* in the South and the availability of his services was one of the primary reasons for the Society undertaking this major long-term project. On the occasion of the release of the second volume of the work, the Society would like to place on record its deep sorrow and the sense of loss sustained by the Society in the passing away of this eminent *Paṇḍita*.

Fortunately Sri Ramasubba Sastrigal had not only compiled the greater part of the work but had also, during his stay at the Society's teaching centre, trained two younger scholars, Sri V. S. Srivatsankacharya and Sri T. K. Pranatartiharan. Both of them had already qualified themselves in *Nyāya* before they came to the Society; under Sri Ramasubba Sastrigal, they qualified themselves in *Vyākaraṇa*, in accordance with the Society's scheme to train young Pandits equipped in one *Śāstra* to become proficient in a second *Śāstra*. Both of them were, from the beginning, assisting Sri Ramasubba Sastrigal in the preparation of this Concordance and after the demise of Sri Sastrigal, have been continuing the work.

**The plan of the work and the details of information furnished in the Concordance are set forth fully in the English Preface and Sanskrit Introduction to the first volume. In the present volume another two hundred and fifty roots have been dealt with.**

**The passing away of Sri Ramasubba Sastrigal has increased the sense of responsibility of those in the Society like the undersigned. As in the case of the first volume, Pandit Sri A. M. Srinivasachariar has been of great assistance in the checking of the material and the proofs.**

**It now remains for those connected with the Society to offer their respects to His Holiness and to pray that with the blessings of His Holiness not only will this work be successfully completed but the Samskrit Education Society itself, sanctified by the presence of His Holiness, develop rapidly into an institution of higher learning and advance studies in Sanskrit.**

**V. RAGHAVAN**

## उपोद्घातः

मद्रपुरीयसंस्कृतविद्यासमित्या कृदन्तरूपमाला नाम निबन्धो यो महान् संपाद्य प्रकाशयितुमूरीकृतः, तस्य प्रथमो भागः गते वत्सरे प्रकटितः, द्वितीयो भागश्चाद्य सज्जः संस्कृतविदुषां संस्कृतच्छात्राणां च पुरत उपह्रियते। महदिदं भागधेयमस्यास्समितेः, यद् द्वितीयोऽयं भागः श्रीकाञ्चीकामकोटिपीठाधीश्वरैः श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीचरणैः जगद्गुरुश्रीशङ्कराचार्यैः स्वकरकमलैरनुगृह्य प्रकाशं नीयते। समितिरेवैषा तेषां प्रेक्षयैव प्रसादेनैव च प्रतिष्ठिता; तस्याः संस्कृतकार्यक्रमश्च तथैव तेषामनुग्रहबलेनैव स्वीयमुत्तरोत्तरं विकासमाशंसमानः प्रचलति।

संमोदोऽयमद्य समितेः किञ्चिदिव शोकानुविद्धः। यदत्र समुपक्रान्तस्य पाठनादिकार्यस्य आध्यक्ष्ये ये नियुक्ताः शास्त्ररत्नाकर-कुलपति-बिरुदाङ्किताः पण्डितवर्याः श. रामसुब्बाशास्त्रिणः ते नचिरात् कीर्तिशेषा अभवन्निति। ते हि दक्षिणभारते न केवलं प्रमुखाः पण्डिता आसन्, परंतु व्याकरणशास्त्रे प्रथमे विद्वांसश्च व्यराजन्। तेषामनितरसाधारणीं व्याकरणे प्रतिष्ठामालम्ब्यैव समित्यानया कृदन्तरूपमालारूपः कार्यभारः स्वीकृतः। अस्य ग्रन्थस्य अर्धाधिको भागः तैरेव सङ्कलितः। यौ तदन्तिक एवाधीतव्याकरणौ श्री-श्रीवत्साङ्काचार्य-प्रणतार्तिहरनामानौ तरुणपण्डितौ कार्येऽस्मिन् आदित एव तेषां साह्ये व्यापृतौ, ताभ्यां ग्रन्थोऽयमाचार्यदर्शितमार्गेण क्रियमाणः यथाक्रमं परिपूरयिष्यते। 'कृदन्तरूपमाला'-ग्रन्थस्य रचनाप्रकारः पूर्वं प्रकाशितस्य प्रथमभागस्य उपोद्घाते स्पष्टीकृत इति नाद्य तद्विषये किमपि वक्तव्यमपेक्ष्यते।

श्रीरामसुब्बाशास्त्रिणां तिरोभावेन कार्येऽस्मिन् अधिको भारोऽस्मादृशेषु निपतितः। रूपफक्किका-उदाहरण-सूचिकादिपरीक्षायां मुद्रापत्रशोधने चास्माकं सहायभूतेभ्यः पण्डित- ब्र. सु. श्रीनिवासाचार्येभ्यः धन्यवादाः समर्प्यन्ते। अन्ततः इदमेवावशिष्यते प्रार्थयितुम्—येषां प्रत्यक्षशङ्कराणामाचार्याणामनुग्रहबलेन समितिरियं, तन्निर्वाहकाश्च संस्कृतसेवायामस्यां प्रवृत्ताः, त एव यथा न केवलं ग्रन्थ एषः, परंतु समितेरन्येऽप्यध्यापनप्रकाशनादिकार्यकलापाश्च परिपूर्तिं समृद्धिं च प्राप्स्यन्ति तथा अनुगृह्णन्त्विति।

वे. राघवः

(251) " कृप दौर्बल्ये " (X-चुरादिः-1870. अक. सेट्. उभ.) अदन्तः ।

' कल्पते शपि सामर्थ्ये, कल्पयत्यवकल्कने ।
अदन्तस्य कृपेर्णौ तु दौर्बल्ये कृपयेदिति ॥ ' (श्लो. 135) इति देवः ।

| | |
|---|---|
| [1]कृपकः[A]-पिका, | [2]चिकृपयिषकः-षिका ; |
| कृपयिता-त्री, | चिकृपयिषिता-त्री ; |
| कृपयन्-न्ती, | चिकृपयिषन्-न्ती ; |
| कृपयिष्यन्-न्ती-ती, | चिकृपयिषिष्यन्-न्ती-ती ; |
| कृपयमाणः, | चिकृपयिषमाणः ; |
| कृपयिष्यमाणः, | चिकृपयिषिष्यमाणः ; |
| कृप्- कृपौ- कृपः ; | — |
| कृपितम्-तः, | चिकृपयिषितः-तवान् ; |
| कृपः, | चिकृपयिषुः ; |
| कृपयितव्यम्, | चिकृपयिषितव्यम् ; |
| कृपणीयम्, | चिकृपयिषणीयम् ; |
| कृप्यम्, | चिकृपयिष्यम् ; |
| ईषत्कृपः-दुष्कृपः-सुकृपः ; | — |
| कृप्यमाणः, | चिकृपयिष्यमाणः ; |
| कृपः, | चिकृपयिषः ; |
| कृपयितुम्, | चिकृपयिषितुम् ; |
| कृपणा, | चिकृपयिषा ; |
| कृपणम्, | चिकृपयिषणम् ; |
| कृपयित्वा, | चिकृपयिषित्वा ; |
| [3]प्रकृपय्य, | प्रचिकृपयिष्य ; |

1. अदन्तत्वेनातो लोपस्य स्थानिवद्भावात् लघूपधगुणो न ।
2. ण्यन्तात् सनि णेरयादेशः । अनेकाच्त्वात् यङ् न ।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
A. 'चहकमहितं नन्दं बद्ध्वाऽस्य सारयतो धनं
हरत कृपकस्यारेस्तातं हत श्रथयत्तमम् ॥' धा. का. 3-54.

| | |
|---|---|
| कृपम् २, कृपयित्वा २, | चिकृपयिषम् २ ; चिकृपयिषित्वा २. |

## (252) "कृपू सामर्थ्ये" (I-भ्वादिः-762-अक. वेट्. आत्म.) वृतादिः।

सामर्थ्यम्=शक्तिः, योग्यता वा ।

'कल्पते शपि सामर्थ्ये, कल्पयत्यवकल्कने ।
अदन्तस्य कृपेर्णौ तु दौर्बल्ये कृपयेदिति ॥' (श्लो. 135) इति देवः ।

[1]कल्पकः-ल्पिका, कल्पकः-ल्पिका, [2]चिक्लृप्सकः-प्सिका, [3]चलीक्लृपकः-पिका;
[4]कल्पिता-कल्प्ता-त्री, कल्पयिता-त्री, चिक्लृप्सिता-त्री, चलीक्लृपिता-त्री ;
— कल्पयन्-न्ती, [5]चिक्लृप्सन्-न्ती ; —
[6]कल्प्स्यन्-न्ती-ती, कल्पयिष्यन्-न्ती-ती, चिक्लृप्सिष्यन्-न्ती-ती ; —
कल्पमानः, कल्पयमानः, [7]चिकल्पिषमाणः-चिक्लृप्समानः, चलीक्लृप्यमानः ;
कल्पिष्यमाणः / कल्प्स्यमानः, कल्पयिष्यमाणः, चिकल्पिषिष्यमाणः / चिक्लृप्सिष्यमाणः, चलीक्लृपिष्यमाणः ;
सुक्लृप्-सुक्लृपौ-सुक्लृपः ; — — —

---

1. 'कृपो रो लः' (8-2-18) इति लत्वम् ।
2. ऊदिल्लक्षणमिड्विकल्पं बाधित्वा, 'तासि च क्लृपः' (7-2-60) इति नित्यमिण्णिषेधः । 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वान्न गुणः । यद्यपि धातुरूपप्रकाशिकायां अस्माद् धातोः सन्नन्तात् तव्यदादिषु 'चिकल्पिषितव्यम् चिक्लृप्सितव्यम्' इति वैकल्पिकेड्घटितानि रूपाणि प्रदर्शितानि; तथापि 'तासि च क्लृपः' (7-2-60) इत्यत्र 'परस्मैपदेषु' इत्यनुवर्तमानस्य पदस्य 'तङानयोरभावे' इत्यर्थकतया नित्यमिण्णिषेधेन भाव्यम् । 'स्वरतिसूति—' (7-2-44) इत्यादिना प्राप्तं वैकल्पिकेडागमं 'तासि च क्लृपः' (7-2-60) इति निषेधः बाधत एवेति, इडभावघटितरूपमेव साधु—इति प्रतिभाति । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
3. 'रीगृदुपधस्य च' (7-4-90) इति अभ्यासस्य रीगागमः । उभयत्र लत्वम् ।
4. 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति ऊदित्त्वादिड्विकल्पः ।
5. 'लुटि च क्लृपः' (1-3-93) इति परस्मैपदविकल्पः ।
6. 'लुटि च क्लृपः' (1-3-93) इति स्यप्रत्यये विवक्षिते परस्मैपदविकल्पः ।
7. 'तासि च क्लृपः' (7-2-60) इत्यत्र 'परस्मैपदेषु' इत्यस्य, 'तङानयोरभावे' इत्यर्थकत्वात्, अत्र 'स्वरतिसूति—' (7-2-44) इत्यादिना इड्विकल्पः । एवं सन्नन्तात् यङ्यपि ज्ञेयम् ।

[1]क्लृप्तम्[A]-क्लृप्तः-क्लृप्तवान्, कल्पितः, चिक्लृप्सितः, चलीक्लृपितः-तवान्;
[2]क्लृपः, [3]कल्पनः, कल्पः, चिक्लृप्सुः, चलीक्लृपः;
कल्पितव्यम्-क्लृप्तव्यम्, कल्पयितव्यम्, चिक्लृप्सितव्यम्, चलीक्लृपितव्यम्;
कल्पनीयम्, कल्पनीयम्, चिक्लृप्सनीयम्, चलीक्लृपनीयम्;
[4]कल्प्यम्, कल्प्यम्, चिक्लृप्स्यम्, चलीक्लृप्यम्;
ईषत्कल्पः-दुष्कल्पः-सुकल्पः; — — —
क्लृप्यमानः, कल्प्यमानः, चिक्लृप्स्यमानः-चिकल्पिष्यमाणः, चलीक्लृप्यमानः;
कल्पः विकल्पः, कल्पः, चिक्लृप्सः, चलीक्लृपः;
कल्पितुम्-कल्प्तुम्, कल्पयितुम्, चिक्लृप्सितुम्, चलीक्लृपितुम्;
क्लृप्तिः, कल्पना, चिक्लृप्सा, चलीक्लृपा;
कल्पनम्, कल्पनम्, चिक्लृप्सनम्, चलीक्लृपनम्;
[5]कल्पित्वा-क्लृप्त्वा, कल्पयित्वा, चिक्लृप्सित्वा, चलीक्लृपित्वा;
प्रक्लृप्य, प्रकल्प्य, प्रचिक्लृप्स्य, प्रचलीक्लृप्य;
कल्पम् २, कल्पित्वा-क्लृप्त्वा २, } कल्पम् २, कल्पयित्वा, २, } चिक्लृप्सम् २, चिक्लृप्सित्वा २, } चलीक्लृपम् २; चलीक्लृपित्वा २; }
[6]क्लृपणः.

## (253) "कृवि हिंसाकरणयोश्च" (I-भ्वादिः-598. सक. सेट्. पर.)

चकारात् गतावपि ।

---

1. ऊदित्त्वादिटो वैकल्पिकत्वेन, 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधः ।
2. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः ।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति तच्छीलादिषु कर्तृषु युच् ।
4. 'ऋदुपधाच्चाक्लृपि—' (3-1-110) इति पर्युदासात् ण्यत्प्रत्यय एव ।
5. इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः ।
6. बाहुलकादौणादिके क्युन्प्रत्ययेऽनादेशे रूपम् । कित्त्वान्न गुणः । किञ्चिदपि यो न ददाति स एवमुच्यते ।

A. 'अशर्धनैर्गोपकुलैस्सहासौ ययौ कृपास्यन्दसुक्लृप्तमोदैः ॥' धा-का. 2-3.

[1]कृण्वकः, [2]कृण्वकः-ण्विका, चिकृण्विषकः-षिका, [3]चरीकृण्वकः-ण्विका ;

कृण्विता-त्री, कृण्वयिता-त्री, चिकृण्विषिता-त्री, चरीकृण्विता-त्री ;

[4]कृण्वन्[A]-न्ती, कृण्वयन्-न्ती, चिकृण्विषन्-न्ती ; —

कृण्विष्यन्-न्ती-ती, कृण्वयिष्यन्-न्ती-ती, चिकृण्विषिष्यन्-न्ती-ती ; —

कृण्वयमानः, कृण्वयिष्यमाणः, चरीकृण्व्यमानः, चरीकृण्विष्यमाणः ;

[5]कृणूः-कृण्वौ-कृण्वः ; — — —

कृण्वितम्-तः, कृण्वितः, चिकृण्विषितः, चरीकृण्वितः-तवान् ;

कृण्वः, कृण्वः, चिकृण्विषुः, चरीकृण्वः ;

कृण्वितव्यम्, कृण्वयितव्यम्, चिकृण्विषितव्यम्, चरीकृण्वितव्यम् ;

कृण्वनीयम्, कृण्वनीयम्, चिकृण्विषणीयम्, चरीकृण्वनीयम् ;

कृण्व्यम्, कृण्व्यम्, चिकृण्विष्यम्, चरीकृण्व्यम् ;

ईषत्कृण्वः-दुष्कृण्वः-सुकृण्वः ; — —

कृण्व्यमानः, कृण्व्यमानः, चिकृण्विष्यमाणः, चरीकृण्व्यमानः ;

कृण्वः, कृण्वः, [6]चिकृण्विषः, चरीकृण्वः ;

कृण्वितुम्, कृण्वयितुम्, चिकृण्विषितुम्, चरीकृण्वितुम् ;

[6]कृण्वा, कृण्वना, चिकृण्विषा, चरीकृण्वा ;

कृण्वनम्, कृण्वनम्, चिकृण्विषणम्, चरीकृण्वनम् ;

कृण्वित्वा, कृण्वयित्वा, चिकृण्विषित्वा, चरीकृण्वित्वा ;

प्रकृण्व्य, प्रकृण्व्य, प्रचिकृण्विष्य, सञ्चरीकृण्व्य ;

कृण्वम् २, कृण्वित्वा २, } कृण्वम् २, कृण्वयित्वा २, } चिकृण्विषम् २, चिकृण्विषित्वा २, } चरीकृण्वम् २; चरीकृण्वित्वा २. }

---

1. 'इदितो नुम् धातोः' (7-1-58) इति नुम्। 'ऋवर्णान्नस्य—' (वा. 8-4-1) इति णत्वम्।
2. 'णेरनिटि' (6-4-51) इति णिलोपः।
3. 'रीगृत्वत इति वाच्यम्' (वा. 7-4-90) इति अभ्यासस्य रीगागमः।
4. 'धिन्विकृण्व्योरच' (3-1-80) इत्युप्रत्ययसन्नियोगेन प्रकृतेरकारादेशः। 'अतो लोपः' (6-4-48) इति लोपः। यण्।
5. क्विपि, वकारस्य 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति ऊठ्।
6. 'गुरोश्च हलः' (3-3-103) इत्यप्रत्ययः।

A. 'कृण्वन्तमाश्चर्यगतीरमूतिदं जगन्त्यवन्तं त्रिदशोपधावितम् ॥' धा. का. 1-76.

## (254) "कृश तनूकरणे" (IV-दिवादिः-1227. अक. सेट्. पर.)

कर्शकः-र्शिका, कर्शकः-र्शिका, चिकर्शिषकः-षिका, [1]चरीकृशकः-शिका ;
[2]कर्शिता-त्री, कर्शयिता-त्री, चिकर्शिषिता-त्री, चरीकृशिता-त्री ;
[3]कृश्यन्-न्ती, कर्शयन्-न्ती, चिकर्शिषन्-न्ती ; —
कर्शिष्यन्-न्ती-ती, कर्शयिष्यन्-न्ती ती, चिकर्शिषिष्यन्-न्ती-ती ; —
[4]व्यतिकृश्यमानः, कर्शयमानः, — चरीकृश्यमानः ;
व्यतिकर्शिष्यमाणः, कर्शयिष्यमाणः, — चरीकृशिष्यमाणः ;
[5]कृट्-कृड्-कृशौ-कृशः ; — [चरीकृशितः-तवान् ;
[6]कृशः,[A] प्रकृशितः, [7]कृशितवान्, [8]परिकृशः, कर्शितः, चिकर्शिषितः,
कृशः, कर्शः, चिकर्शिषुः, चरीकृशः ;
कर्शितव्यम्, कर्शयितव्यम्, चिकर्शिषितव्यम्, चरीकृशितव्यम् ;
कर्शनीयम्, कर्शनीयम्, चिकर्शिषणीयम्, चरीकृशनीयम् ;
[9]कृश्यम्, कर्श्यम्, चिकर्शिष्यम्, चरीकृश्यम् ;
ईषत्कर्शः-दुष्कर्शः-सुकर्शः ; — —
कृश्यमानः, कर्श्यमानः, चिकर्शिष्यमाणः, चरीकृश्यमानः ;

---

1. 'रीगृदुपधस्य च' (7-4-90) इत्यभ्यासस्य रीक्। अल्लोपस्य स्थानिवद्भावात् लघूपधगुणो न। एवं यङन्ते सर्वत्र ज्ञेयम्।
2. 'पुगन्तलघूपधस्य च' (7-3-86) इति गुणः।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन्। श्यनः 'सार्वधातुकमपित्' (1-2-4) इति ङिद्भावात् अङ्गस्य गुणो न।
4. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
5. 'व्रश्चभ्रस्ज—' (8-2-36) इत्यादिना षत्वम्। जश्त्वम्। चर्त्वविकल्पः।
6. 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (8-2-55) इति अनुपसृष्टाद्धातोः निष्ठातकारस्य लोपः, इडभावश्च निपातितः। सोपसर्गात् तु प्रकृशित इत्येव।
7. 'अनुपसर्गात्—' (8-2-55) इत्येतत् क्तवतौ नेष्यते। तेन एवं रूपम्।
8. कृशधात्वर्थक्रियानिरूपितोपसर्गत्वाभावात् परेः, परिगतः कृशं—परिकृशः इति प्रादिसमासः। तेन, 'अनुपसर्गात्—' (8-2-55) इति निषेधो न शङ्क्यः। परेः कृशधात्वर्थक्रियानिरूपितोपसर्गत्वं नास्तीत्यर्थः।
9. 'ऋदुपधात्—' (3-1-110) इति क्यप्।

A. 'मुस्तामोष्यमसः किटिस्त्वमसमो लुठयन् खलानोकसः
मुश्यद्भ्रंशनवर्शकाकृशदयस्तृष्णाहरो हृष्य मे॥' धा. का. 2-66.

कर्शः, कर्शः, चिकर्शिषः, चरीकृशः ;
कर्शितुम्, कर्शयितुम्, चिकर्शिषितुम्, चरीकृशितुम् ;
कृष्टिः, कर्शना, चिकर्शिषा, चरीकृशा ;
कर्शनम्, कर्शनम्, चिकर्शिषणम्, चरीकृशनम् ;
[1]कृशित्वा-कर्शित्वा, कर्शयित्वा, चिकर्शिषित्वा, चरीकृशित्वा ;
परिकृश्य, प्रकर्श्य, प्रचिकर्शिष्य, सञ्चरीकृश्य ;

कर्शम् २, कृशित्वा २, कर्शित्वा २, } कर्शम् २, कर्शयित्वा २. } चिकर्शिषम् २, चिकर्शिषित्वा २, } चरीकृशम् २; चरीकृशित्वा २. }

## (255) "कृष विलेखने" (I-भ्वादिः-990. सक. अनि. पर.)

विलेखनम्=आकर्षणम्। हलोत्किरणमिति क्षीरस्वामी।

'कर्षत्याकर्षणे, शे तु कृषते कृषतीत्युभे।' (श्लो. 178) इति देवः।

कर्षकः-र्षिका, कर्षकः-र्षिका, [2]चिकृक्षकः-क्षिका, चरीकृषकः-षिका ;
[3]क्रष्टा-कर्ष्टा-ष्ट्री, कर्षयिता-त्री, चिकृक्षिता-त्री, चरीकृषिता-त्री ;
कर्षन्-न्ती, कर्षयन्-न्ती, चिकृक्षन्-न्ती ; —
क्रक्ष्यन्-कर्क्ष्यन्-न्ती-ती, कर्षयिष्यन्-न्ती-ती, चिकृक्षिष्यन्-न्ती-ती ;
[4]व्यतिकर्षमाणः, कर्षयमाणः, — चरीकृष्यमाणः ;
व्यतिक्रक्ष्यमाणः व्यतिकर्क्ष्यमाणः, कर्षयिष्यमाणः, — चरीकृषिष्यमाणः ;
कृट्-कृड्-कृषौ-कृषः ; — —
कृष्टः-ष्टम्-ष्टवान्, कर्षितः, चिकृक्षितः, चरीकृषितः-तवान् ;

---

1. 'तृषिमृषिकृशेः काश्यपस्य' (1-2-25) इति क्त्वायाः किस्त्वं वा। 'न क्त्वा सेट्' (1-2-18) इत्यस्यापवादः।

2. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम्। 'षढोः कः सि' (8-2-41) इति कः। सनः कित्त्वात्, अमागमविधायके 'अकिति' इत्युक्तेः अमागमो न। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

3. 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (6-1-59) इत्यङ्गस्यामागमः। यण्।

4. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।

[1]कृषः-कर्षः, [2]अमन्दकर्षी,[A] कर्षः, [3]सङ्कर्षणः, चिकृक्षुः, चरीकृषः ;
क्रष्टव्यम्-कर्ष्टव्यम्, कर्षयितव्यम्, चिकृक्षितव्यम्, चरीकृषितव्यम् ;
कर्षणीयम्, कर्षणीयम्, चिकृक्षणीयम्, चरीकृषणीयम् ;
[4]कृष्यम्, कर्ष्यम्, चिकृक्ष्यम्, चरीकृष्यम् ;
ईषत्कर्षः-दुष्कर्षः-सुकर्षः ; — —
कृष्यमाणः, कर्ष्यमाणः, चिकृक्ष्यमाणः, चरीकृष्यमाणः ;
कर्षः, निष्कर्षः, कर्षः, चिकृक्षः, चरीकृषः ;
क्रष्टुम्-कर्ष्टुम्, कर्षयितुम्, चिकृक्षितुम्, चरीकृषितुम् ;
कृष्टिः, [5]कृषिः, कर्षणा, चिकृक्षा, चरीकृषा ;
कर्षणम्, कर्षणम्, चिकृक्षणम्, चरीकृषणम् ;
कृष्ट्वा, कर्षयित्वा, चिकृक्षित्वा, चरीकृषित्वा ;
विकृष्य-आकृष्य, सङ्कर्ष्य, सञ्चिकृक्ष्य, सञ्चरीकृष्य ;
[6]पाण्युपकर्षं-पाणावुपकर्षं-पाणिनोपकर्षं (धानाः संगृह्णाति) ;
[7]द्व्यङ्गुलोत्कर्षं [इक्षुखण्डं छिनत्ति], द्व्यङ्गुलेनोत्कर्षं[वा]द्व्यङ्गुले उत्कर्षं,
कर्षम् २, कृष्ट्वा २, } कर्षम् २, कर्षयित्वा २, } चिकृक्षम् २, चिकृक्षित्वा २, } चरीकृषम् २ ; चरीकृषित्वा २. }
[8]कृष्णः,[B]

---

1. पचादिषु (3-1-134) पाठात् 'कर्षः' इति क्षीरतरङ्गिणी । इगुपधलक्षणे (3-1-135) कप्रत्यये 'कृषः' इति माधवधातुवृत्तौ ।
2. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः ।
3. नन्द्यादिपाठात् (3-1-134) ण्यन्तात् कर्तरि ल्युः ।
4. 'ऋदुपधात्—' (3-1-110) इति क्यप् ।
5. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावे इक् प्रत्ययः ।
6. 'सप्तम्यां चोपपीडरुधकर्षः' (3-4-49) इति णमुल् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः ।
7. 'प्रमाणे च' (3-4-51) इति णमुल् । पूर्ववत् समासविकल्पः ।
8. औणादिकः [द.उ. 5-37] नक् प्रत्ययः । 'रषाभ्यां नो णः समानपदे' (8-4-1) इति णत्वम् । भक्तानामार्तिं कर्षतीति कृष्णः इति व्युत्पत्तिः ।

A. 'तान् लक्ष्मणः सन्नतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी ॥' भ-का. 2-31.
B. 'कृत्वा स कृत्यं दशनांशुगौरं कृष्णं ययौ दैत्यनिदाघमेघम् ॥' धा. का. 2-40.

## (256) " कृष विलेखने " (VI-तुदादिः-1286. सक. अनि. उभ.)

' कर्षत्याकर्षणे, शे तु कृषते कृषतीत्युभे ।' (श्लो. 174) इति देवः ।

कर्षकः-र्षिका, कर्षकः-र्षिका, चिकृक्षकः-क्षिका, चरीकृषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककृषधातुवत् (255) ज्ञेयानि । [1]कृषन्[A]-न्ती-ती, [2]क्रक्ष्यन्-कर्क्ष्यन्-न्ती-ती, कृषमाणः, इति रूपाणीति विशेषः । ' सप्तम्यां चोपपीडरुधकर्षः ' (3-4-49) इति णमुलस्य धातोर्न ; तत्र सूत्रे शपा निर्देशात् इति न्यासकारधातुवृत्तिकारादयः । क्षीरस्वामी तु उभयोरपि ग्रहणं मन्यते ।

## (257) " कॄ विक्षेपे " (VI-तुदादिः-1409. सक. सेट्. पर. किरादिः ।)

' कृणन् कृणीते हिंसायाम्, विक्षेपे किरतीति शे ॥ ' (श्लो. 39) इति देवः ।
[3]कारकः-रिका, कारकः-रिका, [4]चिकरिषकः-षिका, [5]चेकिरकः-रिका ; [6]करिता-करीता-त्री, कारयिता-त्री, चिकरिषिता-त्री, चेकिरिता-त्री ;

---

1. ' तुदादिभ्यः शः ' (3-1-77) इति शः विकरणप्रत्ययः । शस्य ङिद्वद्भावात् अङ्गस्य गुणो न । स्त्रियाम्, ' आच्छीनद्योर्नुम् ' (7-1-80) इति नुम् विकल्पेन ।
2. ' अनुदात्तस्य च ऋदुपधस्यान्यतरस्याम् ' (6-1-59) इति अकिति झलादौ प्रत्यये अमागमः सर्वत्र विकल्पेन ।
3. ' इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन ' (वा. 7-1-102) इति वचनात् इत्त्वं बाधित्वा वृद्धिः । ' उरण् रपरः ' (1-1-51) इति रपरत्वम् ।
4. ' इट् सनि वा ' (7-2-41) इति प्राप्तं वैकल्पिकमिटं बाधित्वा, ' किरश्च पञ्चभ्यः ' (7-2-75) इति नित्यमिट् । ' अत्रेटो दीर्घो नेष्टः ' (वा. 7-2-75) इति दीर्घो न । भागवृत्तिकारस्तु दीर्घविकल्पं सन्नन्तेऽपि ब्रूते—इति माधवधातुवृत्तिः । तदानीं ' चिकरीषकः—' इत्यादीनि रूपाण्यपि सर्वत्र सन्नन्ते ज्ञेयानि ।
5. ' ऋत इद्धातोः ' (7-1-100) इतीत्त्वम् । रपरत्वम् । द्वित्वम् । ' गुणो यङ्लुकोः ' (7-4-82) इत्यभ्यासे गुणः । ' यस्य हलः ' (6-4-49) इति यकारलोपः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
6. ' वॄतो वा ' (7-2-38) इति दीर्घविकल्पः । एवं तव्यदादिष्वपि बोध्यम् ।

A. ' तुदन् कुचरितान् शुभे प्रणुदमान इष्टं दिशन्
प्रमृष्टपललान् क्षिपन् अरिमर्नि कृषन् माधवः । ' धा. का. 2-72.

[1]किरन्-न्ती-ती, [2]उपस्किरन् (श्वापदः), [3]प्रतिस्किरन् (श्वापदः), कारयन्-
[न्ती, चिकरिषन्-न्ती ; —
करिष्यन्-करीष्यन्-न्ती-तीं, कारयिष्यन्-न्ती-ती, चिकरिषिष्यन्-न्ती-ती ;
[4]व्यतिकिरमाणः, [5]अपस्किरमाणः (वृषभो हृष्टः), अपस्किरमाणः (कुक्कुटो भक्षार्थी), अपस्किरमाणः (श्वा आश्रयार्थी), कारयमाणः, चेकीर्यमाणः,
[ [6]अपचेस्कीर्यमाणः ;
अपस्करिष्यमाणः-अपस्करीष्यमाणः, कारयिष्यमाणः, चेकिरिष्यमाणः ;
[7]कीः-किरौ-किरः ; — — —
[8]कीर्णम्-कीर्णः-कीर्णवान्, कारितः, चिकरिषितः, चेकिरितः-तवान् ;
[9]किरः, [10]विष्किरः-विकिरः, [11]विकिरम्, उत्किरः, कारः, [A]चिकरिषुः,
[चेकिरः ;

---

1. 'तुदादिभ्यः—' (3-1-77) इति शः विकरणप्रत्ययः। इत्वं, रपरत्वम्। 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः।
2. 'किरतौ लवने' (6-1-140) इति उपपूर्वकात् सुट्।
3. 'हिंसायां प्रतेश्च' (6-1-141) इति प्रतिपूर्वकात् सुट्।
4. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
5. 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्' (वा. 1-3-21) इति शानच्। 'अपाच्चतुष्पाच्छकुनिष्वालेखने' (6-1-142) इति सुट्। सुडपि 'हर्षजीविकाकुलायकरणेष्विति वाच्यम्' (वा. 6-1-142) इति वचनात् उक्तेष्वर्थेष्वेव। यथासंख्यम् उदाहरणेषु अर्थभेदोऽनुसन्धेयः। 'अवाच्चतुष्पात्—' (6-1-142) इति दाक्षिणात्यपाठ इति धातुरूपप्रकाशिकायां श्रीकण्ठशास्त्रिणः।
6. 'सुट् कात् पूर्वः' (6-1-135), 'अडभ्यासव्यवायेऽपि' (6-1-136) इत्यनुवर्तमाने, 'अपाच्चतुष्पात्—' (6-1-142) इति सुट् कात् पूर्वः।
7. इत्वे, रपरत्वे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे रुत्वविसर्गौ।
8. 'श्र्युकः किति' (7-2-11) इतीण्णिषिध्यते। इत्वे रपरत्वे च 'हलि च' (8-2-77) इति दीर्घे, 'रदाभ्यां निष्ठातो नः—' (8-2-42) इति निष्ठानत्वम्। 'रषाभ्यां नो णः—' (8-4-1) इति णत्वम्।
9. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः। किरः=वराहः। 'कोलः पोत्री किरः किटिः।' इत्यमरः।
10. 'विष्किरः शकुनिर्विकिरो वा' (6-1-150) इति विकल्पेन सुट् शकुनौ वाच्ये। यदा सुट्, तदानीं, 'परिनिविभ्यः—' (8-3-70) इति षत्वम्।
11. 'विष्किरः शकुनौ वा' (6-1-150) इति सूत्रपाठमालम्ब्य महाभाष्ये, वाग्रहणस्य निपातनेन सम्बन्धकथनात्, 'विकिरान्नं च वैष्णवम्।', 'विकिरं वैश्वदेविकम्' इत्यादिप्रयोगा अपि साधव इति ज्ञेयम्। स्पष्टमिदं सि. कौमुद्याम्।

A. 'वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः ॥' भ.का. 9-54:

करितव्यम्-करीतव्यम्, कारयितव्यम्, चिकरिषितव्यम्, चेकिरितव्यम्;
करणीयम्, कारणीयम्, चिकरिषणीयम्, चेकिरणीयम्;
[1]कार्यम्, कार्यम्, चिकरिष्यम्, चेकीर्यम्;
ईषत्करः-दुष्करः-सुकरः; — — —
कीर्यमाणः, [A]व्यतिकीर्यमाणः, कार्यमाणः, चिकरिष्यमाणः, चेकीर्यमाणः;
[2]करः, [3]अवस्करः (वर्चस्कम्)-अवकरः, [4]अपस्करः [रथाङ्गम्]
अपकरः, [5]आकरः[B], [6]उत्कारः[C]-निकारो [वा धान्यस्य], उत्करः-
निकरश्च [पुष्पस्य], कारः, चिकरिषः, चेकिरः;

---

1. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत्।
2. 'ऋदोरप्' (3-3-57) इत्यप् भावे।
3. 'वर्चस्केऽवस्करः' (6-1-148) इति सुट् वर्चस्केऽभिधेये। **वर्चस्कम्**= भाण्डात् काष्ठादिना आकृष्टम् अन्नमलम्। तत्सम्बन्धात् देशोऽपि तथोच्यते। अन्यत्र **अवकर** इत्येव। **अवकरः**=सम्मार्जन्या क्षिप्ता धूलिः। 'सम्मार्जनी शोधनी स्यात्, सङ्करोऽवकरस्तथा। क्षिप्ते—' **इत्यमरः**।
4. '**अपस्करो** रथाङ्गम्' (6-1-149) इति सुट्। **रथाङ्गम्**=रथावयवः, न तु चक्रम्।
5. आकीर्यन्ते धातवोऽत्रेति—**आकरः**=खनिः। 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति संज्ञायामधिकरणे घः।
6. 'कॄ धान्ये' (3-3-30) इति, भावे कर्तृभिन्ने कारके च घञ्—धान्ये वाच्ये। '**उत्कारश्च निकारश्च** द्वौ धान्योत्क्षेपणार्थकौ।' **इत्यमरः**। '**निकारः** स्यात् परिभवे, धान्यस्योत्क्षेपणेऽपि च' इति **धरणिकोशः**। धान्यभिन्नविषयके त्वर्थे **उत्करः, निकरः** इत्येव।

A. 'सरित्प्रवाहैर्व्यतिकीर्यमाणैः सङ्कल्पयोनेरिव शिल्पभेदैः।
पश्य प्रिये त्वं परिवृत्य किञ्चिद् दिव्योपमान् जानपदान् विशेषान्॥'
**यादवाभ्युदये** 18-74.

B. 'देहत्रश्चनतुण्डाग्रं तं विलोक्याशुभा**करम्**।
पापगोचरमात्मानमशोचन् वानरा मुहुः॥' भ.का. 7-80.

C. 'सदोद्गारसुगन्धीनां फलानामलमाशिताः।
**उत्कारे**षु च धान्यानामनभीष्टपरिग्रहाः॥' भ.का. 7-38.

करितुम्-करीतुम्, कारयितुम्, चिकरिषितुम्, चेकिरितुम्;
[1]कीर्णिः, कारणा, चिकरिषा, चेकिरा;
करणम्, कारणम्, चिकरिषणम्, चेकिरणम्;
[2]कीर्त्वा, कारयित्वा, चिकरिषित्वा, चेकिरित्वा;
विकीर्य, विकार्य, विचिकरिष्य, विचेकीर्य;

कारम् २, [3]उपस्कारं कीर्त्वा २, [मद्रका लुनन्ति] } कारम् २, कारयित्वा २, } चिकरिषम् २, चिकरिषित्वा २, } चेकिरम् २; चेकिरित्वा २; }

[4]किरीटम्, [5]किरणः, [6]कर्णः, [7]करुणा, [8]करभः, [9]करीरम्, [10]करीषम्.

## (258) "कॄञ् हिंसायाम्" (IX-क्र्यादिः-1485. सक. सेट्. उभ.) प्वादिः, ल्वादिश्च ।

'कृणन् कृणीते हिंसायाम्, विक्षेपे किरतीति शे ।' (श्लो. 39) इति देवः ।

---

1. 'ऋल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नकारः ।
2. 'श्र्युकः क्किति' (7-2-11) इतीण्णिषेधः ।
3. 'किरतौ लवने' (6-1-140) इति किरतिसामान्ये विहितोऽपि सुट् 'णमुलत्र वक्तव्यः' इति काशिकावचनात् णमुल्येव, इति पक्षमवलम्ब्यात्र णमुलन्तं रूपं लिखितम् ।
4. औणादिके [द. उ.5-3] कीटन् प्रत्यये रूपम् । किरीटम्=मुकुटम् ।
5. औणादिके [द. उ. 5-26] क्युप्रत्ययेऽनादेशः । किरणः=रश्मिः ।
6. औणादिकः [द. उ. 5-42] नप्रत्ययान्तः । कर्णः=श्रोत्रम् ।
7. 'कॄवृतॄदारिभ्य उनन्' [द. उ. 5-52] इत्युननप्रत्ययः । करुणः=शोचनीयः । करुणा=कृपा ।
8. औणादिके [द. उ. 7-18] अभच् प्रत्यये रूपम् । करभः=त्रिवर्ष उष्ट्रः । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः ।
9. औणादिके [द. उ. 8-72] ईरन् प्रत्यये रूपम् । करीरम्=वृक्षः ।
10. 'कॄतॄभ्यामीषन्' [द. उ. 9-9] इति ईषन् प्रत्ययः । करीषम्=गोमयविकारः ।

[1]कारकः-रिका, कारकः-रिका, [2]चिकरीषकः-चिकरिषकः-[3]चिकीर्षकः-र्षिका,
[ [4]चेकिरकः-रिका ;

[5]करीता-करिता-त्री, कारयिता-त्री, चिकरीषिता-चिकरिषिता-चिकीर्षिता-त्री,
[चेकिरिता-त्री ;

[6]कॄणन्-ती, कारयन्-न्ती, चिकरीषन्-चिकरिषन्-चिकीर्षन्-न्ती ; —

करीष्यन्-करिष्यन्-न्ती-ती, कारयिष्यन्-न्ती-ती, चिकरीषिष्यन्-चिकरि-
[षिष्यन्-चिकीर्षिष्यन्-न्ती-ती ; —

कॄणानः, कारयमाणः, चिकरीषमाणः-चिकरिषमाणः-चिकीर्षमाणः, चेकीर्य-
[माणः ;

करीष्यमाणः-करिष्यमाणः, कारयिष्यमाणः, चिकरीषिष्यमाणः-चिकरिषिष्य-
[माणः-चिकीर्षिष्यमाणः, चेकिरिष्यमाणः ;

[7]कीः-किरौ-किरः ; — — — —

[8]कीर्णम्-कीर्णः-कीर्णवान् , कारितः, चिकरीषितः-चिकरिषितः-चिकीर्षितः,
[चेकिरितः-तवान् ;

---

1. 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा. 7-1-102) इति वचनात् इत्वं बाधित्वा, 'अचो ञ्णिति' (7-2-115) इति वृद्धिः ।
2. 'इट् सनि वा' (7-2-41) इति सन इड्विकल्पः । इट्पक्षे 'वॄतो वा' (7-2-38) इति दीर्घविकल्पः । एवं सर्वत्र इट्पक्षे सनि ज्ञेयम् ।
3. इडभावपक्षे, 'इको झल्' (1-2-9) इति सनः कित्वे, 'ॠत इद्धातोः' (7-1-100) इति इत्वे रपरत्वे च, 'हलि च' (8-2-77) इति दीर्घः । एवं इडभावपक्षे सनि सर्वत्र ज्ञेयम् ।
4. इत्वरपरत्वद्वित्वेषु कृतेषु 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासे गुणः । 'यस्य हलः' (6-4-49) इति यकारलोपः । एवं सर्वत्र यङन्ते ज्ञेयम् ।
5. 'वॄतो वा' (7-2-38) इति इटो दीर्घविकल्पः । एवं तव्यदादिषु च ज्ञेयम् ।
6. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः । 'प्वादीनां ह्रस्वः' (7-3-80) इति शिति परे ह्रस्वः । 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः । 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-1) इति णत्वम् । एवं 'कॄणानः' इत्यत्रापि ज्ञेयम् ।
7. इत्वे रपरत्वे च 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः ।
8. 'श्र्युकः किति' (7-2-11) इतीण्णिषेधः । इत्वे रपरत्वे च 'ल्वादिभ्यः' (8-2-44) इति निष्ठानत्वम् । 'रषाभ्याम्—' (8-4-1) इति णत्वम् ।

[1]किरः, कारः, चिकरीषुः-चिकरिषुः-चिकीर्षुः, [2]चेकिरः ;
करीतव्यम्-करितव्यम्, कारयितव्यम्, चिकरीषितव्यम्-चिकरिषितव्यम्-[चिकीर्षितव्यम्, चेकिरितव्यम् ;
करणीयम्, कारणीयम्, चिकरीषणीयम् - चिकरिषणीयम्-चिकीर्षणीयम्, चेकिरणीयम् ;
[3]कार्यम्, कार्यम्, चिकरीष्यम्-चिकरिष्यम्-चिकीर्ष्यम्, चेकीर्यम् ;
ईषत्करः-दुष्करः-सुकरः ; —— —— —— ——
[4]करः, कारः, चिकरीषः-चिकरिषः-चिकीर्षः, चेकिरः ;
[A]करीतुम्-करितुम्, कारयितुम्, चिकरीषितुम्-चिकरिषितुम्-चिकीर्षितुम्, [चेकिरितुम् ;
[5]कीर्णिः, [6]कारा, कारणा, चिकरीषा-चिकरिषा-चिकीर्षा, चेकिरा ;
करणम्, कारणम्, चिकरीषणम्-चिकरिषणम्-चिकीर्षणम्, चेकिरणम् ;
कीर्त्वा, कारयित्वा, चिकरीषित्वा-चिकरिषित्वा-चिकीर्षित्वा, चेकिरित्वा ;
विकीर्य, विकार्य, विचिकरीष्य-विचिकरिष्य-विचिकीर्ष्य, विचेकीर्य ;

कारम् २, } कारम् २, } चिकरीषम् २, चिकरिषम् २,
कीर्त्वा २, } कारयित्वा २, } चिकरीषित्वा २, चिकरिषित्वा २,
चिकीर्षम् २, } चेकिरम् २; }
चिकीर्षित्वा २, } चेकिरित्वा २. }

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः।

2. यङन्तात् पचाद्यचि (3-1-134), 'यङोऽचि च' (2-4-74) इति लुक्।

3. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत्।

4. 'ॠदोरप्' (3-3-57) इति भावेऽप्।

5. 'ॠल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नकारः। णत्वम्।

6. 'कारा बन्धने' (गणसूत्रम् 3-3-104) इति भिदादिषु पाठात् अङ्। निपातनात् वृद्धिः। ण्यन्ताद्वा अङ्।

A. 'द्वारं पुनन् पदतलेन स लूनवैरी स्तीर्णाननं मदजलेन करीतुकामम्।
नागं ददर्श पटचूर्णमुखं धुनानं कर्णौ श्रृण्वन्तमखिलानभिपूर्ततरोषम्॥' धा. का. 3-6.

(258–A) " कॄ हिंसायाम् " (XI-क्र्यादिः-1496.सक. सेट्. पर.)

प्वादिः, ल्वादिश्च ।

कारकः-रिका, कारकः-रिका, चिकरीषकः-चिकरिषकः-चिकीर्षकः-र्षिका, चेकिरकः-रिका ; कृणन्-ती, इत्यादीनि सर्वाण्यपि रूपाणि पूर्वोक्तकॄ (258) धातुवत् ज्ञेयानि । एकस्मिन्नेव विकरणे पुनः पाठः, कर्तृगामिन्यपि क्रियाफले परस्मैपदार्थः ।

(259) " कृत संशब्दने " (X-चुरादिः-1654. सक. सेट्. उभ. )

संशब्दनम्=उद्घोषः ।

' कृणत्ति कृन्ततीत्येते वेष्टने च्छेदने क्रमात् ।
कीर्तयेदिति संशब्दे—' (श्लो. 94) इति देवः ।

[1]कीर्तकः-र्तिका, [2]कीर्तकः-र्तिका, [3]चिकीर्तयिषकः-षिका, [4]चेकीर्तकः-र्तिका ;
कीर्तयिता-त्री, कीर्तिता-त्री, चिकीर्तयिषिता-त्री, चेकीर्तिता-त्री ;
कीर्तयन्-न्ती, [5]कीर्तन्-न्ती, चिकीर्तयिषन्-न्ती ; —
कीर्तयिष्यन्-न्ती-ती, कीर्तिष्यन्-न्ती-ती, चिकीर्तयिषिष्यन्-न्ती-ती ;
कीर्तयमानः, — चिकीर्तयिषमाणः, चेकीर्त्यमानः ;
कीर्तयिष्यमाणः, — चिकीर्तयिषिष्यमाणः, चेकीर्तिष्यमाणः ;
कीर्त्-कीर्तौ-कीर्तः ; — — —
[6]कीर्तितम्-तः, कीर्तितः, चिकीर्तयिषितः, चेकीर्तितः-तवान् ;
कीर्तः, [7]कृतः, चिकीर्तयिषुः, चेकीर्तः ;
कीर्तयितव्यम्, कीर्तितव्यम्, चिकीर्तयिषितव्यम्, चेकीर्तितव्यम् ;

---

1. ' उपधायाश्च ' (7-1-101) इति इत्त्वम्, रपरत्वम्, ' उपधायाञ्च ' (8-2-8) इति दीर्घः ।
2. 'ऋदुपधाच्च—' (3-1-110) इत्यत्र एतद्व्यावर्तकेन तपरकरणेन—णिचोऽत्र वैकल्पिकत्वं बोध्यते । अतश्शुद्धधातोरपि रूपाणि प्रदर्शितानि ।
3. ण्यन्तात् सनि रूपम् । णिजभावपक्षे शुद्धात् सनि तु ' चिकीर्तिषकः-षिक, ' इत्यादीनि रूपाणि ऊह्यानि ।
4. णिजभावपक्षे शुद्धधातोरेकाच्त्वात् हलादित्वाच्च यङन्तरूपाण्यपि लिखितानि ।
5. ' शेषात् कर्तरि परस्मैपदम् ' (1-3-78) इति परस्मैपदमेव । नात्मनेपदम् ।
6. ' निष्ठायां सेटि ' (6-4-52) इति णेर्लोपः ।
7. णिजभावपक्षे ' इगुपधज्ञा—' (3-1-135) इति कर्तरि कः । तेन लघूपधगुणो न ।

[1]कीर्तनीयम् , कीर्तनीयम् , चिकीर्तयिषणीयम् , चेकीर्तनीयम् ;
कीर्त्यम् , कीर्त्यम् , चिकीर्तयिष्यम् , चेकीर्त्यम् ;
ईषत्कीर्तः-दुष्कीर्तः-सुकीर्तः ; — — —
कीर्त्यमानः, कीर्त्यमानः, चिकीर्तयिष्यमाणः, चेकीर्त्यमानः ;
[2]कीर्तः, कीर्तः, चिकीर्तयिषः, चेकीर्तः ;
कीर्तयितुम् , कीर्तितुम् , चिकीर्तयिषितुम् , चेकीर्तितुम् ;
[3]कीर्तिः- [4]कीर्तना, [A]कीर्त्तिः, चिकीर्तयिषा, चेकीर्ता ;
कीर्तनम् , कीर्तनम् , चिकीर्तयिषणम् , चेकीर्तनम् ;
कीर्तयित्वा, कीर्तित्वा, चिकीर्तयिषित्वा, चेकीर्तित्वा ;
सङ्कीर्त्य, सङ्कीर्त्य, सञ्चिकीर्तयिष्य, सञ्चेकीर्त्य ;
कीर्तम् २, कीर्तयित्वा २, } कीर्तम् २, कीर्तित्वा २, } चिकीर्तयिषम् २, चिकीर्तयिषित्वा २, } चेकीर्तम् २; चेकीर्तित्वा २. }

## (260) “केत श्रावणे निमन्त्रणे च”

(X-चुरादिः-1892. सक. सेट्. उभ.) अदन्तः ।

‘कूट’ इत्यस्य पाठान्तरमिदम् ।

श्रावणम्=समयोद्घोषणम् । निमन्त्रणम्=आज्ञा ।

केतकः-तिका, चिकेतयिषकः-षिका ;
केतयिता-त्री, चिकेतयिषिता-त्री ;
[B]केतयन्-न्ती, चिकेतयिषन्-न्ती ;
केतयिष्यन्-न्ती-ती, चिकेतयिषिष्यन्-न्ती-ती ;
केतयमानः, चिकेतयिषमाणः ;

---

1. ‘णेरनिटि’ (6-4-51) इति णिलोपः ।
2. ण्यन्तात् ‘एरच्’ (3-3-56) इत्यच् ।
3. ‘ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च’ (3-3-97) इति युजपवादः क्तिन् निपात्यते ।
4. बाहुलकात् युजपि—इति कालापाः, इति माधवीयधातुवृत्तिः ।

A. ‘जूतिमिच्छथ चेत्तूर्णं कीर्तिं वा पातुमात्मनः ।
करोमि वो बहिर्यूतीन् पिधध्वं पाणिभिर्दृशः ॥’ भ. का. 7-69.

B. ‘इत्यूचे स हि केतयन् परिजनान् सेनापतीन् ग्रामयन्
स्वामात्यान् कुणयन् भटांश्च गुणयन् नृणां मुदं स्तेनयन् ॥’ धा. का. 3-57.

| | |
|---|---|
| केतयिष्यमाणः, | चिकेतयिषिष्यमाणः ; |
| सुकेत्-सुकेतौ-सुकेतः ; | — |
| [1]केतितम्-तः, | चिकेतयिषितः-तवान् ; |
| केतः, | चिकेतयिषुः ; |
| केतयितव्यम् , | चिकेतयिषितव्यम् ; |
| [2]केतनीयम् , | चिकेतयिषणीयम् ; |
| [3]केत्यम् , | चिकेतयिष्यम् ; |
| ईषत्केतः-दुष्केतः-सुकेतः ; | — |
| केत्यमानः, | चिकेतयिष्यमाणः ; |
| केतः, | चिकेतयिषः ; |
| केतयितुम् , | चिकेतयिषितुम् ; |
| केतना, | चिकेतयिषा ; |
| केतनम् , | चिकेतयिषणम् ; |
| केतयित्वा, | चिकेतयिषित्वा ; |
| विकेत्य, | विचिकेतयिष्य ; |
| केतम् २, केतयित्वा २, | चिकेतयिषम् २ ; चिकेतयिषित्वा २. |

## (261) "केपृ चलने कम्पने च" (I-भ्वादिः.368.अक.सेट्. आत्म.)

चकारात् गतौ च ।

| | | | |
|---|---|---|---|
| केपकः-पिका, | केपकः-पिका, | [4]चिकेपिषकः-षिका, | [5]चेकेपकः-पिका; |
| केपिता-त्री, | केपयिता-त्री, | चिकेपिषिता त्री, | चेकेपिता-त्री ; |
| — | [6]केपयन्-न्ती, | केपयिष्यन्-न्ती-ती ; | — |

---

1. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः ।
2. 'णेरनिटि' (6-4-51) इति णिलोपः ।
3. ण्यन्तात् 'अचो यत्' (3-1-97) इति यत् ।
4. 'कुहोश्चुः' (7-4-62) इति अभ्यासे चुत्वम् ।
5. द्वित्वे, अभ्यासस्य ह्रस्वे, 'गुणो यङ्लुकोः' (7-4-82) इति अभ्यासे गुणः ।
6. ण्यन्तात् 'निगरणचलनार्थेभ्यः–' (1-3-87) इति परस्मैपदमेव ।

| | | | |
|---|---|---|---|
| केपमानः, | — | [1]चिकेपिषमाणः, | चेकेप्यमानः ; |
| केपिष्यमाणः, | — | चिकेपिषिष्यमाणः, | चेकेपिष्यमाणः ; |
| केप् केपौ-केपः ; | — | — | — |
| केपितम्-तः, | केपितः, | चिकेपिषितः, | चेकेपितः-तवान् ; |
| केपः, [2]केपनः, | केपः, | चिकेपिषुः, | चेकेपः ; |
| केपितव्यम्, | केपयितव्यम्, | चिकेपिषितव्यम्, | चेकेपितव्यम् ; |
| [3]प्रकेपणीयम्, | केपनीयम्, | चिकेपिषणीयम्, | चेकेपनीयम् ; |
| केप्यम्, | केप्यम्, | चिकेपिष्यम्, | चेकेप्यम् ; |
| ईषत्केपः-दुष्केपः-सुकेपः ; | | — | — |
| केप्यमानः, | केप्यमानः, | चिकेपिष्यमाणः, | चेकेप्यमानः ; |
| केपः, | केपः ; | चिकेपिषः, | चेकेपः ; |
| केपितुम्, | केपयितुम्, | चिकेपिषितुम्, | चेकेपितुम् ; |
| [4]केपा, | केपना, | चिकेपिषा, | चेकेपा ; |
| [5]प्रनिकेपनम्[A], | केपनम्, | चिकेपिषणम्, | चेकेपनम् ; |
| केपित्वा, | केपयित्वा, | चिकेपिषित्वा, | चेकेपित्वा ; |
| प्रकेप्य, | प्रकेप्य, | प्रचिकेपिष्य, | प्रचेकेप्य ; |
| केपम् २, केपित्वा २, | केपम् २, केपयित्वा २, | चिकेपिषम् २, चिकेपिषित्वा २, | चेकेपम् २ ; चेकेपित्वा २. |

### (262) "केल्ट चलने" (I-भ्वादिः-537. अक. सेट्. पर.)

| | | | |
|---|---|---|---|
| केलकः-लिका, | केलकः-लिका, | चिकेलिषकः-षिका, | चेकेलकः-लिका ; |
| केलिता-त्री, | केलयिता-त्री, | चिकेलिषिता-त्री, | चेकेलिता-त्री ; |

---

1. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात् आत्मनेपदमेव ।
2. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छीलिको युच् ।
3. 'कृत्यचः' (8-4-29) इति णत्वम् ।
4. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः ।
5. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति पर्युदासात् णत्वं न ।

A. 'अस्तेपितानन्दरसस्य तस्य न व्यग्लेपि चाङ्घ्रिर्विपिनाध्वकेपनात्॥' धा. का. 1-47.

| | | | |
|---|---|---|---|
| केलन्-न्ती, | [1]केलयन्-न्ती, | चिकेलिषन्-न्ती ; | — |
| केलिष्यन्-न्ती-ती, | केलयिष्यन्-न्ती-ती, | चिकेलिषिष्यन्-न्ती-ती ; | — |
| [2]व्यतिकेलमानः, | — | चेकेल्यमानः, चेकेलिष्यमाणः ; | |
| केल-केलौ-केलः ; | — | — | — |
| केलितम्-तः, | केलितः , | चिकेलिषितः, | चेकेलितः-तवान् ; |
| केलः, [3]केलनः, | केलः, | चिकेलिषुः, | चेकेलः ; |
| केलितव्यम् , | केलयितव्यम् , | चिकेलिषितव्यम् , | चेकेलितव्यम् ; |
| [4]प्रनिकेलनीयम् , | केलनीयम् , | चिकेलिषणीयम् , | चेकेलनीयम् ; |
| केल्यम् , | केल्यम् , | चिकेलिष्यम् , | चेकेल्यम् ; |
| ईषत्केलः-दुष्केलः-सुकेलः ; | | — | — |
| केल्यमानः, | केल्यमानः, | चिकेलिष्यमाणः, | चेकेल्यमानः ; |
| केलः, | केलः, | चिकेलिषः, | चेकेलः ; |
| केलितुम् , | केलयितुम् , | चिकेलिषितुम् , | चेकेलितुम् ; |
| [5]केला, | केलना, | चिकेलिषा, | चेकेला ; |
| केलनम् , | केलनम् , | चिकेलिषणम् , | चेकेलनम् ; |
| केलित्वा, | केलयित्वा, | चिकेलिषित्वा, | चेकेलित्वा ; |
| प्रकेल्य, | प्रकेल्य, | प्रचिकेलिष्य, | प्रचेकेल्य ; |
| केलम् २, केलित्वा २, | केलम् २, केलयित्वा २, | चिकेलिषम् २, चिकेलिषित्वा २, | चेकेलम् २ ; चेकेलित्वा २; |

[6]केलिः-[A]केली.

---

1. ‘निगरणचलनार्थेभ्यश्च’ (1-3-87) इति ण्यन्तात् परस्मैपदमेव ।
2. ‘कर्तरि कर्मव्यतीहारे’ (1-3-14) इति आत्मनेपदं, शानच् ।
3. ‘चलनशब्दार्थादकर्मकात्—’ (3-2-148) इति ताच्छीलिको युच् ।
4. ‘शेषे विभाषाऽकखादावषान्त उपदेशे’ (8-4-18) इति पर्युदासात् नेः णत्वं न ।
5. ‘गुरोश्च हलः’ (3-3-103) इति अप्रत्ययः ।
6. ‘इन्’ (द. उ. 1-46) इतीन्प्रत्ययः । ‘कृदिकारादक्तिनः’ (ग. सू. 4-1-45) इति ङीष् वा ।

A. ‘अचेलितानां प्रतिचेलधारिणाम् अकेलिलोले हृदि वद्धखेलनम् ।’ धा. का. 1-69.

## (263) "कै शब्दे" (I-भ्वादिः-916. अक. अनि. पर.)

'शब्दे' इति सामान्यत उक्तावपि शब्दविशेषे प्रयुज्यते ।

[1]कायकः-यिका, [2]कापकः-पिका, [3]चिकासकः-सिका, [4]चाकायकः-यिका ;
काता-त्री, कापयिता-त्री, चिकासिता-त्री, चाकायिता-त्री ;
[5]कायन्-न्ती, कापयन्-न्ती, चिकासन्-न्ती ; —
कास्यन्-न्ती-ती, कापयिष्यन्-न्ती-ती, चिकासिष्यन्-न्ती-ती ; —
[6]व्यतिकायमानः, कापयमानः, — चाकायमानः ;
व्यतिकास्यमानः, कापयिष्यमाणः, — चाकायिष्यमाणः ;
[7]काः-कौ-काः ; — — —
कातम्-कातः-कातवान्, कापितः, चिकासितः, चाकायितः-तवान् ;
[8]प्रकः, [9]कायः, [10]नरकः-नरिका, [11]कानः, [12]ध्वाङ्क्षकायी, कापः, चिकासुः,
[[13]चाकः ;

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यनैमित्तिक आत्वे, 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः ।
2. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति पुक् । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. 'सन्यङोः' (6-1-9) इति द्वित्वे, 'सन्यतः' (7-4-79) इत्यभ्यासस्य इत्वम् । एवं सर्वत्र सन्नन्ते बोध्यम् । धातोरनुदात्तत्वात् सन इडागमो न ।
4. 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
5. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यत्र 'अशिति' इति प्रतिषेधात् आत्वं न । 'एचोऽयवायावः' (6-1-78) इत्यायादेशः ।
6. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इत्यात्मनेपदम्, शानच् ।
7. आत्वे, सोः रुत्वविसर्गयोः रूपम् ।
8. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कः । 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः ।
9. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इत्यादिना आदन्तलक्षणो णः प्रत्ययः । युगागमः ।
10. 'आतोऽनुपसर्गे कः' (3-2-3) इति कर्मण्युपपदेऽणपवादः कः प्रत्ययः । नरान् कायतीति नरकः । स्त्रियां, 'मामकनरकयोरुपसंख्यानम्' (वा. 7-3-44) इति इत्वम् ।
11. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति तच्छीलादिषु कर्तृषु युच् ।
12. 'कर्तर्युपमाने' (3-2-79) इति णिनिः । युक् । ध्वाङ्क्ष इव कायतीति ध्वाङ्क्षकायी ।
13. यङन्तादचि, 'न धातुलोप आर्धधातुके' (1-1-4) इति सूत्रस्य प्रत्याख्यानात् पृथग्यलोपे, यङो लुकि, 'आतो लोप इटि च' (6-4-64) इत्याकारलोपे च रूपम् ।

कातव्यम्, कापयितव्यम्, चिकासितव्यम्, चाकायितव्यम्;
कानीयम्- [1]प्रकाणीयम्, कापनीयम्, चिकासनीयम्, चाकायनीयम्;
[2]केयम्, काप्यम्, चिकास्यम्, चाकाय्यम्;
[3]ईषत्कानः-दुष्कानः-सुकानः; — —
कायमानः, काप्यमानः, चिकास्यमानः, चाकाय्यमानः;
कायः, कापः, चिकासः, चाकायः;
कातुम्, कापयितुम्, चिकासितुम्, चाकायितुम्;
कातिः- [4]प्रका, कापना, चिकासा, चाकाया;
[5]प्रनिकानम्, कापनम्, चिकासनम्, चाकायनम्;
कात्वा, कापयित्वा, चिकासित्वा, चाकायित्वा;
प्रकाय, प्रकाप्य, प्रचिकास्य, प्रचाकाय्य;
कायम् २, कात्वा २, } कापम् २, कापयित्वा २, } चिकासम् २, चिकासित्वा २, } चाकायम् २; चाकायित्वा २; }
[6]काकः.

## (264) "क्रथ हिंसायाम्" (I-भ्वादिः-800. सक. सेट्.पर. घटादिः।)

क्राथकः-थिका, [7]क्रथकः-थिका, चिक्रथिषकः-षिका, [8]चाक्रथकः-थिका;
क्रथिता-त्री, क्रथयिता-त्री, चिक्रथिषिता-त्री, चाक्रथिता-त्री;
[9]व्यतिक्रथन्-न्ती, क्रथयन्-न्ती, चिक्रथिषन्-न्ती; —
क्रथिष्यन्-न्ती-ती, क्रथयिष्यन्-न्ती-ती, चिक्रथिषिष्यन्-न्ती-ती; —

---

1. 'कृत्यचः' (8-4-29) इति णत्वम्।
2. 'अचो यत्' (3-1-97) इति यति, 'ईद्यति' (6-4-65) इति धात्वाकारस्य ईकारे च गुणः।
3. 'आतो युच्' (3-3-128) इतीषदादिषूपपदेषु खलपवादो युच्।
4. 'आतश्चोपसर्गे' (3-3-106) इति स्त्रियामङ्।
5. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति पर्युदासाण्णत्वं न;
6. 'इण्भीकापा—' [द. उ. 3-21] इत्यादिना कन् प्रत्ययः। काकः=वायसः।
7. 'घटादयो मितः' (ग. सू. भ्वादौ) इति मित्त्वात् णौ 'मितां ह्रस्वः' (6-4-92) इति उपधायाः ह्रस्वः। एवं ण्यन्ते सर्वत्र ज्ञेयम्।
8. 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः।
9. 'न गतिहिंसार्थेभ्यः' (1-3-15) इति कर्मव्यतीहारेऽपि आत्मनेपदं न।

—— क्रथ्यमानः, क्रथयिष्यमाणः, चाक्रथ्यमानः, चाक्रथिष्यमाणः;
क्रथ्-क्रत्-क्रथौ-क्रथः; — — —
क्रथितम्-तः, क्रथितः, चिक्रथिषितः, चाक्रथितः-तवान्;
क्रथः, क्रथः, चिक्रथिषुः, चाक्रथः;
क्रथितव्यम्, क्रथयितव्यम्, चिक्रथिषितव्यम्, चाक्रथितव्यम्;
क्रथनीयम्, क्रथनीयम्, चिक्रथिषणीयम्, चाक्रथनीयम्;
[1]क्राथ्यम्, क्रथ्यम्, चिक्रथिष्यम्, चाक्रथ्यम्;
ईषत्क्रथः-दुष्क्रथः-सुक्रथः; — —
क्रथ्यमानः, क्रथ्यमानः, चिक्रथिष्यमाणः, चाक्रथ्यमानः;
क्राथः, क्रथः, चिक्रथिषः, चाक्रथः,
क्रथितुम्, क्रथयितुम्, चिक्रथिषितुम्, चाक्रथितुम्;
[2]क्रत्तिः, क्रथना, चिक्रथिषा, चाक्रथा;
क्रथनम्, क्रथनम्, चिक्रथिषणम्, चाक्रथनम्;
क्रथित्वा, क्रथयित्वा, चिक्रथिषित्वा, चाक्रथित्वा;
विक्रथ्य, [3]विक्रथय्य, प्रचिक्रथिष्य, प्रचाक्रथ्य;
क्राथम् २ } [4]क्राथम् २-क्रथम् २ } चिक्रथिषम् २ } चाक्रथम् २; }
क्रथित्वा २ } क्रथयित्वा २ } चिक्रथिषित्वा २ } चाक्रथित्वा २. }

(265) "क्रसु ह्वरणदीप्त्योः" (IV-दिवादिः-1113. अक. सेट्. पर.)

ह्वरणम्=कौटिल्यम्।

क्रासकः-सिका, [5]क्रसकः-सिका, चिक्रसिषकः-षिका, चाक्रसकः-सिका;
क्रसिता-त्री, क्रसयिता-त्री, चिक्रसिषिता-त्री, चाक्रसिता-त्री;
[6]क्रस्यन्-न्ती, क्रसयन्-न्ती, चिक्रसिषन्-न्ती; —

---

1. 'ऋहलोः—' (3-1-124) इति ण्यत्। 'अत उपधायाः' (7-2-116) इति वृद्धिः।
2. 'खरि च' (8-4-55) इति चर्त्वम्।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
4. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः।
5. 'जनीजॄष्क्नसु—' (गणसूत्रं घटादौ) इति मित्त्वे, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधायाः ह्रस्वः। एवं ण्यन्ते सर्वत्र ज्ञेयम्।
6. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन्। 'शप्श्यनोर्नित्यम्' (7-1-81) इति स्त्रियां नित्यम् नुम्।

| | | | |
|---|---|---|---|
| क्नसिष्यन्-न्ती-ती, | क्नसयिष्यन्-न्ती-ती, | चिक्नसिषिष्यन्-न्ती-ती ; | — |
| [1]व्यतिक्नस्यमानः, | क्नसयमानः, | — | चाक्नस्यमानः ; |
| व्यतिक्नसिष्यमाणः, | क्नसयिष्यमाणः, | — | चाक्नसिष्यमाणः ; |
| [A]क्नः, [2]विक्नः-विक्नसौ-विक्नसः ; | | — | — |
| [3]क्नस्तम्-स्तः-स्तवान्, | क्नसितः, | चिक्नसिषितः, | चाक्नसितः-तवान् ; |
| क्नसः, | क्नसः, | चिक्नसिषुः, | चाक्नसः ; |
| क्नसितव्यम्, | क्नसयितव्यम्, | चिक्नसिषितव्यम्, | चाक्नसितव्यम् ; |
| क्नसनीयम्, | क्नसनीयम्, | चिक्नसिषणीयम्, | चाक्नसनीयम् ; |
| क्नास्यम्, | क्नस्यम्, | चिक्नसिष्यम्, | चाक्नस्यम् ; |
| ईषत्क्नसः-दुष्क्नसः-सुक्नसः ; | — | — | — — |
| क्नस्यमानः, | क्नस्यमानः, | चिक्नसिष्यमाणः, | चाक्नस्यमानः ; |
| क्नासः, [4]चक्नसः, | क्नसः, | चिक्नसिषः, | चाक्नसः ; |
| क्नसितुम्, | क्नसयितुम्, | चिक्नसिषितुम्, | चाक्नसितुम् ; |
| क्नस्तिः, | क्नसना, | चिक्नसिषा, | चाक्नसा ; |
| क्नसनम्, | क्नसनम्, | चिक्नसिषणम्, | चाक्नसनम् ; |
| [5]क्नसित्वा-क्नस्त्वा, | क्नसयित्वा, | चिक्नसिषित्वा, | चाक्नसित्वा ; |
| प्रक्नस्य, | [6]प्रक्नसय्य, | प्रचिक्नसिष्य, | प्रचाक्नस्य ; |

---

1. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति आत्मनेपदम् शानच् ।
2. 'ससजुषोः—' (8-2-66) इति रुत्वे विसर्गः । 'अत्वसन्तस्य—' (6-4-14) इत्यत्र 'अधातोः' इत्युक्तत्वात् न दीर्घः ।
3. क्त्वायां वेट्त्वात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः ।
4. घञर्थे कविधानम् । 'द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्' (वा. 6-1-12) इति द्वित्वम् ।
5. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः ।
6. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।

A. 'दीव्यन् देवो विचित्रस्युवमथ रजकं प्रैक्षताह्न्यूतमग्रे
छीव्यन्तं तत्र तत्र स्तुसितफलगणान् क्नोव्युषः प्योसहीनम् ।' धा. का. 2-56.
क्नसां-कुटिलीभवतां व्युषः-दाहकः इत्यर्थः । क्विबन्तस्य समासः ।

क्नासम् २, क्नसित्वा २-क्नस्त्वा २, } [1]क्नसम् २-क्नासम् २, क्नसयित्वा २, } चिक्नसिषम् २, चिक्नसिषित्वा २, }

चाक्नसम् २; चाक्नसित्वा २. }

## (266) "क्नूञ् शब्दे" (IX-क्र्यादिः-1480.अक. सेट्.उभ.)

| | | | |
|---|---|---|---|
| क्नावकः-विका, | क्नावकः-विका, | [2]चुक्नूषकः-षिका, | [3]चोक्नूयकः-यिका ; |
| क्नविता-त्री, | क्नावयिता-त्री, | चुक्नूषिता-त्री, | चोक्नूयिता-त्री ; |
| [4]क्नूनन्[A]-ती, | क्नावयन्-न्ती, | चुक्नूषन्-न्ती ; | — |
| क्नविष्यन्-न्ती-ती, | क्नावयिष्यन्-न्ती-ती, | चुक्नूषिष्यन्-न्ती-ती ; | — |
| क्नुनानः, | क्नावयमानः, | चुक्नूषमाणः, | चोक्नूयमानः ; |
| क्नविष्यमाणः, | क्नावयिष्यमाणः, | चुक्नूषिष्यमाणः, | चोक्नूयिष्यमाणः; |
| क्नूः-क्नुवौ-क्नुवः ; | — | — | — |
| [5]क्नूतम्-तः, | क्नावितः, | चुक्नूषितः, | चोक्नूयितः-तवान् ; |
| क्नवः, [6]क्नवनः, | क्नावः, | चुक्नूषुः, | [7]चोक्नुवः ; |
| क्नवितव्यम्, | क्नावयितव्यम्, | चुक्नूषितव्यम्, | चोक्नूयितव्यम् ; |

---

1. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।

2. 'सनि ग्रहगुहोश्च ((7-4-82) इतीण्णिषेधः। 'इको झल्' (1-2-9) इति कित्वान्न गुणः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

3. 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणः । 'कुहोश्चुः' (1-4-62) इति अभ्यासे चुत्वम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।

4. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना । 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः एवं शानजन्तेऽपि ।

5. 'श्र्युकः किति' (7-2-11) इतीण्णिषेधः । एवं क्त्वायामपि ।

6. 'चलनशब्दार्थादकर्मकात्' (3-2-148) इति ताच्छीलिको युच् ।

7. 'यङोऽचि च' 2-4-74) इति लुकि, 'अचि श्नुधातु-' (6-4-77) इत्यादिना उवङ् ।

A, 'क्नीनन् गुणैर्जनमतिं प्रियरूप ईशः मांसश्रियां प्रमयकृत् सितपीतचेलः । मोदस्कुतोऽथ कबरीं प्रयुनन् सरामः क्नूनन् मृदङ्गमिह रङ्गमगाद् अरिघ्नः ॥'

धा.का 3 5.

| | | | |
|---|---|---|---|
| क्नवनीयम्, | क्नावनीयम्, | चुक्नूषणीयम्, | चोक्नूयनीयम्; |
| [1]क्नव्यम्-[2]अवश्यक्नाव्यम्, | क्नाव्यम्, | चुक्नूष्यम्, | चोक्नूय्यम्; |
| ईषत्क्नवः-दुष्क्नवः-सुक्नवः; | | — | — |
| क्नूयमानः, | क्नाव्यमानः, | चुक्नूष्यमाणः, | चोक्नूय्यमानः; |
| क्नवः, | क्नावः, | चुक्नूषः, | चोक्नूयः; |
| क्नवितुम्, | क्नावयितुम्, | चुक्नूषितुम्, | चोक्नूयितुम्; |
| क्नूतिः, | क्नावना, | चुक्नूषा, | चोक्नूया; |
| क्नवनम्, | क्नावनम्, | चुक्नूषणम्, | चोक्नूयनम्; |
| क्नूत्वा, | क्नावयित्वा, | चुक्नूषित्वा, | चोक्नूयित्वा; |
| प्रक्नूय, | विक्नाव्य, | प्रचुक्नूष्य, | प्रचोक्नूय्य; |
| क्नावम् २, } क्नूत्वा २, } | क्नावम् २, } क्नावयित्वा २, } | चुक्नूषम् २, } चुक्नूषित्वा २, } | चोक्नूयम् २; } चोक्नूयित्वा २. } |

## (267) "क्नूयी शब्दे, उन्दने च" (I-भ्वादिः-485. सक. सेट्. आत्म.)

उन्दनम्=क्लेदनम्।

| | | | |
|---|---|---|---|
| क्नूयकः-यिका, | [3]क्नोपकः-पिका, | चुक्नूयिषकः-षिका, | चोक्नूयकः-यिका; |
| क्नूयिता-त्री, | क्नोपयिता-त्री, | चुक्नूयिषिता-त्री, | चोक्नूयिता-त्री; |
| — | [A]क्नोपयन्-न्ती, | क्नोपयिष्यन्-न्ती-ती; | — |
| क्नूयमानः, | क्नोपयमानः, | चुक्नूयिषमाणः, | चोक्नूयमानः; |
| क्नूयिष्यमाणः, | क्नोपयिष्यमाणः, | चुक्नूयिषिष्यमाणः, | चोक्नूयिष्यमाणः; |
| [4]सुक्नूः-सुक्नुवौ-सुक्नुवः; | — | — | — |
| [5]क्नूतम्-तः, | क्नोपितः, | चुक्नूयिषितः, | चोक्नूयितः-तवान्; |

---

1. 'अचो यत्' (3-1-97) इति यति गुणः। 'एचोऽयवायावः' (6-1-78) इत्यवादेशः।
2. 'ओरावश्यके' (3-1-125) इति ण्यत्।
3. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति णौ पुक्। वलि लोपः (6-1-66)। 'पुगन्तलघूपधस्य च' (7-3-86) इति गुणः। एवं ण्यन्ते सर्वत्र प्रक्रिया बोध्या।
4. 'लोपो व्योर्वलि' (6-1-66) इति यकारलोपः।
5. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेधः। यलोपः।

A. 'प्रक्नोपयन्तं मुरलीं महीभरक्ष्मायं बलस्फीतसुपीनदोर्युगम्।' धा. का. 1-63.

[1]क्नूयः, [2]क्नूयिता, क्नोपः, चुक्नूयिषुः, चोक्नूयः;
क्नूयितव्यम्, क्नोपयितव्यम्, चुक्नूयिषितव्यम्, चोक्नूयितव्यम्;
[3]प्रनिक्नूयनीयम्, क्नोपनीयम्, चुक्नूयिषणीयम्, चोक्नूयनीयम्;
क्नूय्यम्, क्नोप्यम्, चुक्नूयिष्यम्, चोक्नूय्यम्;
ईषत्क्नूयः-दुष्क्नूयः-सुक्नूयः; — —
क्नूय्यमानः, [4]क्नोप्यमानः, चुक्नूयिष्यमाणः, चोक्नूय्यमानः;
क्नूयः, क्नोपः, चुक्नूयिषः, चोक्नूयः;
क्नूयितुम्, क्नोपयितुम्, चुक्नूयिषितुम्, चोक्नूयितुम्;
[5]क्नूया, क्नोपना, चुक्नूयिषा, चोक्नूया;
क्नूयनम्, क्नोपनम्, चुक्नूयिषणम्, चोक्नूयनम्;
क्नूयित्वा, क्नोपयित्वा, चुक्नूयिषित्वा, चोक्नूयित्वा;
प्रक्नूय्य, विक्नोप्य, प्रचुक्नूयिष्य, प्रचोक्नूय्य;
[6]वस्त्रक्नोपम् [वृष्टो देवः], [A]चेलक्नोपम्, वसनक्नोपम् [वा];
क्नूयम् २, क्नूयित्वा २, } क्नोपम् २, क्नोपयित्वा २, } चुक्नूयिषम् २, चुक्नूयिषित्वा २, } चोक्नूयम् २; चोक्नूयित्वा २. }

## (268) "क्मर हूर्च्छने" (I-भ्वादिः-555. अक. सेट्. पर.)

हूर्च्छनम्=कौटिल्यम्।

क्मारकः-रिका, क्मारकः-रिका, [7]चिक्मरिषकः-षिका, [8]चाक्मरकः-रिका;
क्मरिता-त्री, क्मारयिता-त्री, चिक्मरिषिता-त्री, चाक्मरिता-त्री;

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः।
2. 'न यः' (3-2-152) इति निषेधात्, अनुदात्तेल्लक्षणो युज् न। तेन, 'तृन्' (3-2-135) इति तच्छीलादिषु तृन्नेव।
3. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति पर्युदासाण्णत्वं न।
4. णिनिमित्तके, 'पुगन्त—' (7-3-86) इति गुणे क्नोप्यमान इत्येव।
5. 'गुरोश्च हलः' (3-3-103) इति अः प्रत्ययः।
6. 'चेले क्नोपेः' (3-4-33) इति ण्यन्तात् णमुल्। चेलपर्यायाणामपि ग्रहणम्— इति व्याख्यानात् वस्त्रक्नोपमित्यादीनामपि साधुत्वम्।
7. 'सन्यतः' (7-4-79) इतीत्वमभ्यासस्य।
8. 'दीर्घोऽकितः' (7-4-83) इति अभ्यासस्य दीर्घः।
A. 'मेघास्सविद्युतोऽवर्षन् चेलक्नोपं च शोणितम्।' भ. का. 17-74.

[A]क्मरन्-न्ती, क्मारयन्-न्ती, चिक्मरिषन्-न्ती ; —

क्मरिष्यन्-न्ती-ती, क्मारयिष्यन्-न्ती-ती, चिक्मरिषिष्यन्-न्ती-ती ; —

— क्मारयमाणः, क्मारयिष्यमाणः, चाक्मर्यमाणः, चाक्मरिष्यमाणः ;

[1]क्मः-क्मरौ-क्मरः ; — — —

क्मरितः-तम्, क्मारितः, चिक्मरिषितः, चाक्मरितः-तवान् ;

क्मरः, क्मारः, चिक्मरिषुः, चाक्मरः ;

क्मरितव्यम्, क्मारयितव्यम्, चिक्मरिषितव्यम्, चाक्मरितव्यम् ;

क्मरणीयम्, क्मारणीयम्, चिक्मरिषणीयम्, चाक्मरणीयम् ;

क्मार्यम्, क्मार्यम्, चिक्मरिष्यम्, चाक्मर्यम् ;

ईषत्क्मरः-दुष्क्मरः-सुक्मरः ; — —

क्मर्यमाणः, क्मर्यमाणः, चिक्मरिष्यमाणः, चाक्मर्यमाणः ;

क्मारः, क्मारः, चिक्मरिषः, चाक्मरः,

क्मरितुम्, क्मारयितुम्, चिक्मरिषितुम्, चाक्मरितुम् ;

क्मर्तिः, क्मारणा, चिक्मरिषा, चाक्मर्या ;

क्मरणम्, क्मारणम्, चिक्मरिषणम्, चाक्मरणम् ;

क्मरित्वा, क्मारयित्वा, चिक्मरिषित्वा, चाक्मरित्वा ;

प्रक्मर्य, प्रक्मार्य, प्रचिक्मरिष्य, प्रचाक्मर्य ;

क्मारम् २, } क्मारम् २, } चिक्मरिषम् २, } चाक्मरम् २ ; }
क्मरित्वा २, } क्मारयित्वा २, } चिक्मरिषित्वा २, } चाक्मरित्वा २. }

## (269) "क्रथ हिंसायाम्" (I-भ्वादिः-801. सक. सेट्. पर. घटादिः ।)

[अ] 'क्रथत्ययौ, यौ हिंसायाम् क्राथयेत् क्रथते क्रथेत् ।' (श्लो. 100) इति देवः ।

क्राथकः-थिका, [2]क्राथकः-थिका, चिक्रथिषकः-षिका, चाक्रथकः-थिका ;

क्रथिता-त्री, क्राथयिता-त्री, चिक्रथिषिता-त्री, चाक्रथिता-त्री ;

---

1. पदान्ते 'खरवसानयोः' (8-3-15) इति विसर्गः ।
2. 'जासिनिप्रहणनाटक्राथपिषां—' (2-3-56) इति सूत्रे 'क्राथ' इति निपातनात् मित्त्वप्रयुक्तः ह्रस्वो बाध्यते । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।

[अ] अनेन हिंसायां क्रथ—इति चुरादौ पठ्यते इति देवस्याशय इति ज्ञायते । पुरुषकारस्तु चुरादिपाठं नानुमन्यते ।

A. 'क्मरन् मनोदुर्गममभ्रमेचकं वभ्रद्वधूविभ्रमलब्धिमभ्रितम् ॥' धा. का. 1-71

क्रथन्-न्ती, [A]क्राथयन्-न्ती, चिक्रथिषन्-न्ती ; —
क्रथिष्यन्-न्ती-ती, क्राथयिष्यन्-न्ती-ती, चिक्रथिषिष्यन्-न्ती-ती ; —
क्राथयमानः, क्राथयिष्यमाणः, चाक्रथ्यमानः, चाक्रथिष्यमाणः ;
क्रथ्-क्रत्-क्रथौ-क्रथः ; — — —
क्रथितम्-तः, क्राथितः, चिक्रथिषितः, चाक्रथितः-तवान् ;
क्रथः, [1]प्रक्राथी, क्राथः, चिक्रथिषुः, चाक्रथः ;
क्रथितव्यम्, क्राथयितव्यम्, चिक्रथिषितव्यम्, चाक्रथितव्यम् ;
क्रथनीयम्, क्राथनीयम्, चिक्रथिषणीयम्, चाक्रथनीयम् ;
क्राथ्यम्, क्राथ्यम्, चिक्रथिष्यम्, चाक्रथ्यम् ;
ईषत्क्रथः-दुष्क्रथः-सुक्रथः ; — —
क्रथ्यमानः, क्राथ्यमानः, चिक्रथिष्यमाणः, चाक्रथ्यमानः ;
क्राथः, क्राथः ; चिक्रथिषः, चाक्रथः ;
क्रथितुम्, क्राथयितुम्, चिक्रथिषितुम्, चाक्रथितुम् ;
[2]क्रत्तिः, क्राथना, चिक्रथिषा, चाक्रथा ;
क्रथनम्, क्राथनम्, चिक्रथिषणम्, चाक्रथनम् ;
क्रथित्वा, क्राथयित्वा, चिक्रथिषित्वा, चाक्रथित्वा ;
प्रक्रथ्य, प्रक्राथ्य, प्रचिक्रथिष्य, प्रचाक्रथ्य ;
क्राथम् २, क्रथित्वा २, } [3]क्रथम् २, क्राथम् २, क्राथयित्वा २, } चिक्रथिषम् २, चिक्रथित्वा २, } चाक्रथम् २ ; चाक्रथित्वा २. }

(269-A) "क्रदि वैक्लव्ये" (I-भ्वादिः-773. अक. सेट्. आत्म.) घटादिः ।

'वैकस्ये-वैक्लव्ये' इत्येके । वैक्लव्यार्थककन्दतिवत् (164) सर्वाणि रूपाणि ज्ञेयानि । 'क्रद' इति मैत्रेयः ।

---

1. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः ।
2. 'खरि च' (8-4-55) इति चर्त्वम् ।
3. 'जासिनिप्रहणनाटक्राथ—' (2-3-56) इति सूत्रे 'क्राथ' इति निपातनात् 'मितां ह्रस्वः' (6-4-92) इति ह्रस्व एव बाध्यते, न तु व्यवहितः 'चिण्णमुलोः' इति दीर्घविकल्पः । तेन, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति ण्यन्तात् णमुलि दीर्घविकल्पः ।

A. 'श्लथ्यात्मनां क्राथयताऽच्युतेन किं नाञ्जो नः क्लथयन् अव ।नि ।' धा. का. 2-10.

(270) "क्रदि आह्वाने रोदने च" (I-भ्वादिः-71-[773] सक. सेट्. पर.)

अर्थविशेषे—घटादिः । षित् ।

आह्वाने सकर्मकः, रोदनेऽकर्मकः । 'रक्षणे च' इत्येके ।

"आह्वाने रोदने क्रन्देः कन्देः क्रन्दति कन्दति ।
वैक्लब्ये तु तयोर्धात्वोः क्रन्दते कन्दते मितोः ॥
मित्त्वार्थपाठसामर्थ्यात् तयोर्दीर्घविकल्पनम् ।
भवेच्चिण्णमुलोस्तस्मात् अक्रान्यक्रन्दि सिद्ध्यतः' ॥

(श्लो-105-106) इति देवः ।

[1]क्रन्दकः-न्दिका, [2]क्रन्दकः-न्दिका, चिक्रन्दिषकः-षिका, चाक्रन्दकः-न्दिका;
क्रन्दिता-त्री, क्रन्दयिता-त्री, चिक्रन्दिषिता-त्री, चाक्रन्दिता-त्री ;
क्रन्दन्-न्ती, क्रन्दयन्-न्ती, चिक्रन्दिषन्-न्ती ; —
क्रन्दिष्यन्-न्ती-ती, क्रन्दयिष्यन्-न्ती-ती, चिक्रन्दिषिष्यन्-न्ती-ती ;
[3]क्रन्दमानः, क्रन्दयमानः, [4]चिक्रन्दिषमाणः, चाक्रन्द्यमानः ;
क्रन्दिष्यमाणः, क्रन्दयिष्यमाणः, चिक्रन्दिषिष्यमाणः, चाक्रन्दिष्यमाणः ;
[5]क्रन्-क्रन्दौ-क्रन्दः ; — — —
क्रन्दितम्-तः, क्रन्दितः, चिक्रन्दिषितः, चाक्रन्दितः-तवान् ;
क्रन्दः, [6]सङ्क्रन्दनः[A], [7]क्रन्दनः, चिक्रन्दिषुः, चाक्रन्दः ;
क्रन्दितव्यम्, क्रन्दयितव्यम्, चिक्रन्दिषितव्यम्, चाक्रन्दितव्यम् ;
क्रन्दनीयम्, क्रन्दनीयम्, चिक्रन्दिषणीयम्, चाक्रन्दनीयम् ;
क्रन्द्यम्, क्रन्द्यम्, चिक्रन्दिष्यम्, चाक्रन्द्यम् ;
ईषत्क्रन्दः-दुष्क्रन्दः-सुक्रन्दः ; — —

---

1. 'इदितो नुम् धातोः' (7-1-58) इति नुम् ।
2. अर्थविशेषे घटादिपाठः—तदानीमपि रूपं तुल्यमेव । मित्त्वफलं तु णमुलि ।
3. धातोरस्यैव वैक्लब्ये वैकल्ये वाऽर्थे सति घटादौ पाठः । स च तदानीमात्मनेपदी । तदा शानच् ।
4. यदा घटादिपाठः, तदानीमात्मनेपदित्वात् सन्नन्तात् 'पूर्ववत् सनः' (1-3-62) इत्यात्मनेपदम्—शानच् ।
5. 'संयोगान्तस्य—' (8-2-23) इति दकारस्य लोपः ।
6. सम्यक् परान् क्रन्दयतीत्यर्थे ण्यन्तात् नन्द्यादिपाठात् (3-1-134) कर्तरि ल्युः ।
7. घटादिपाठात् आत्मनेपदे 'अनुदात्तेतश्च हलादेः' (3 2-149) इति युच् ।
A. 'पराक्रमत्रन्दनक्रन्दिताधुरं संक्रन्दनक्रन्दितमीक्षितास्महे ॥' धा. का. 1-10.

क्रन्द्यमानः, क्रन्द्यमानः, चिक्रन्दिष्यमाणः, चाक्रन्द्यमानः ;
क्रन्दः, [1]आक्रन्दः, क्रन्दः, चिक्रन्दिषः, चाक्रन्दः ;
क्रन्दितुम्, क्रन्दयितुम्, चिक्रन्दिषितुम्, चाक्रन्दितुम् ;
[2]क्रन्दा, क्रन्दना, चिक्रन्दिषा, चाक्रन्दा ;
क्रन्दनम्, क्रन्दनम्, चिक्रन्दिषणम्, चाक्रन्दनम् ;
क्रन्दित्वा, क्रन्दयित्वा, चिक्रन्दिषित्वा, चाक्रन्दित्वा ;
सङ्क्रन्द्य, सङ्क्रन्द्य, प्रचिक्रन्दिष्य, प्रचाक्रन्द्य ;
क्रन्दम् २, क्रन्दित्वा २, } [3]क्रन्दम् २-क्रान्दम् २, क्रन्दयित्वा २, } चिक्रन्दिषम् २, चिक्रन्दिषित्वा २, } चाक्रन्दम् २ ; चाक्रन्दित्वा २. }

## (271) "आङः क्रन्दस्सातत्ये" (X-चुरादिः-1728. अक. सेट्. उभ.)

'आङः क्रन्दः सातत्ये' इति पाठे, आङः परः क्रन्दतिः सतताह्वाने, सततरोदने, चार्थे गम्यमाने णिचं लभते—इत्यर्थः। 'आङः क्रन्दसातत्ये' इति पाठे तु, धातुपाठे चुरादौ पूर्वं पठितस्य घुषेः अत्रानुवृत्त्या आङ्पूर्वकात् तस्मात् सततक्रन्दने णिजुत्पत्तिः ज्ञेया। इति द्वेधा व्याख्या।

आक्रन्दकः-न्दिका, आचिक्रन्दयिषकः-षिका ;
आक्रन्दयिता-त्री, आचिक्रन्दयिषिता-त्री ;
[A]आक्रन्दयन्-न्ती, आचिक्रन्दयिषन्-न्ती ;
आक्रन्दयिष्यन्-न्ती-ती, आचिक्रन्दयिषिष्यन्-न्ती-ती ;
आक्रन्दयमानः, आचिक्रन्दयिषमाणः ;

---

1. आक्रन्द्यतेऽत्रेति अधिकरणे घञ्। दुःखिनां रोदनस्थानमभिधीयते। यद्वा आक्रन्द्यते=रक्ष्यते इति 'करणाधिकरणयोश्च' (3-3-117) इति करणे घञ्। आवासस्थानमुच्यते।
2. 'गुरोश्च हलः' (3-3-103) इत्यः प्रत्ययः। वैक्लव्यार्थे तु घटादिपाठेन षित्त्वात् 'षिद्भिदादिभ्योऽङ्' (3-3-104) इत्यङ्।
3. घटादिपाठसामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलोः—' (6-1-93) इति दीर्घो वा।

A. 'आक्रन्दयत्सु निभृतं नृषु लासिताशेषोत्तंसभूषणविमोक्षणयार्हिताभौ।' धा. का. 3-40.

| | |
|---|---|
| आक्रन्दयिष्यमाणः, | आचिक्रन्दयिषिष्यमाणः ; |
| आक्रन्द्-आक्रन्दौ-आक्रन्दः ; | — |
| आक्रन्दितम्-तः, | आचिक्रन्दयिषितः-तवान् ; |
| आक्रन्दः, | आचिक्रन्दयिषुः ; |
| आक्रन्दयितव्यम्, | आचिक्रन्दयिषितव्यम् ; |
| आक्रन्दनीयम्, | आचिक्रन्दयिषणीयम् ; |
| आक्रन्द्यम्, | आचिक्रन्दयिष्यम् ; |
| ईषदाक्रन्दः-दुराक्रन्दः-स्वाक्रन्दः ; | — |
| आक्रन्द्यमानः, | आचिक्रन्दयिष्यमाणः ; |
| आक्रन्दः, | आचिक्रन्दयिषः ; |
| आक्रन्दयितुम्, | आचिक्रन्दयिषितुम् ; |
| आक्रन्दना, | आचिक्रन्दयिषा ; |
| आक्रन्दनम्, | आचिक्रन्दयिषणम् ; |
| [1]समाक्रन्द्य, | समाचिक्रन्दयिष्य ; |
| आक्रन्दम् २, | आचिक्रन्दयिषम् २. |

## (272) "क्रप कृपायां गतौ च" (I-भ्वादिः-771. सक. सेट्. आत्म.)

### घटादिः । मित् षिच्च । [अ]

| | | | |
|---|---|---|---|
| क्रापकः-पिका, | [2]क्रपकः-पिका, | चिक्रपिषकः-षिका, | चाक्रपकः-पिकाः ; |
| क्रपिता-त्री, | क्रपयिता-त्री, | चिक्रपिषिता-त्री, | चाक्रपिता-त्री ; |
| — | क्रपयन्-न्ती, | क्रपयिष्यन्-न्ती-ती ; | — |
| क्रपमाणः, | क्रपयमाणः, | चिक्रपिषमाणः, | चाक्रप्यमाणः ; |
| क्रपिष्यमाणः, | क्रपयिष्यमाणः, | चिक्रपिषिष्यमाणः, | चाक्रपिष्यमाणः ; |
| क्रप्-क्रपौ-क्रपः ; | — | — | — |

1. नित्यमाङ्पूर्वकत्वादस्य धातोः क्त्वाप्रत्ययो न । ल्यबेव ।
2. घटादित्वान्मित्त्वे 'मितां ह्रस्वः' (6-4-92) इति णौ ह्रस्वः ।

[अ.] "घटादिषु त्विहापूर्वपठिताः सर्वदा मितः ।
बहिःस्थस्येह पाठे तु मित्त्वमुक्तेऽर्थ एव हि ॥"
इति धातुकाव्यव्याख्याने (2-5) ।

| | | | |
|---|---|---|---|
| क्रपितम्-तः, | क्रपितः, | चिक्रपिषितः, | चाक्रपितः-तवान् ; |
| क्रपः, [1]क्रपणः, | क्रपः, | चिक्रपिषुः, | चाक्रपः ; |
| क्रपितव्यम् , | क्रपयितव्यम् , | चिक्रपिषितव्यम् , | चाक्रपितव्यम् ; |
| क्रपणीयम् , | क्रपणीयम् , | चिक्रपिषणीयम् , | चाक्रपणीयम् , |
| [2]क्रप्यम् , | क्रप्यम् , | चिक्रपिष्यम् , | चाक्रप्यम् ; |
| ईषत्क्रपः-दुष्क्रपः-सुक्रपः ; | | — | — |
| क्रप्यमाणः, | क्रप्यमाणः, | चिक्रपिष्यमाणः, | चाक्रप्यमाणः ; |
| क्रापः, | क्रपः, | चिक्रपिषः, | चाक्रपः ; |
| क्रपितुम् , | क्रपयितुम् , | चिक्रपिषितुम् , | चाक्रपितुम् ; |
| [3]कृपा[A] , | क्रपणा, | चिक्रपिषा, | चाक्रपा ; |
| क्रपणम् , | क्रपणम् , | चिक्रपिषणम् , | चाक्रपणम् ; |
| क्रपित्वा, | क्रपयित्वा, | चिक्रपिषित्वा, | चाक्रपित्वा ; |
| प्रक्रप्य, | [4]सङ्क्रपय्य, | सञ्चिक्रपिष्य, | सञ्चाक्रप्य ; |
| क्रापम् २, क्रपित्वा २, | [5]क्रपम्-२-क्रापम् २, क्रपयित्वा २, | | चिक्रपिषम् २, चिक्रपिषित्वा २, |
| | | | चाक्रपम् २ ; चाक्रपित्वा २. |

## (273) "क्रमु पादविक्षेपे" (I-भ्वादिः-473. सक. सेट्. पर.)

'पदविक्षेपे' इति कुत्रचित् पाठः । पादविक्षेपः=पादन्यासः ।

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
2. 'पोरदुपधात्' (3-1-98) इति यत् ।
3. 'क्रपेः सम्प्रसारणं च' (ग. सू. 3-3-104) इति 'षिद्भिदादिभ्यः—' (3-3-104) इति सूत्रे पाठात् अङ् । 'कृपो रो लः (8-2-18) इत्यत्र नास्य ग्रहणं, लाक्षणिकत्वात्—इति भाष्ये स्पष्टम् ।
4. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
5. 'चिण्णमुलो—(6-4-93) रिति दीर्घविकल्पः णमुलि ।

A. 'दक्षापरेणास्तकृपेणं तासाम् अकान्दि चेतः कदनैः स्मरेण ।' धा. का. 2-5.

[1]क्रमकः-मिका, [2]क्रमकः-मिका, [3]उत्क्रामकः-सङ्क्रामकः, [4]चिक्रमिषकः-षिका, चिक्रंसकः-सिका, [5]चङ्क्रमकः-मिका ;

[6]क्रन्ता-प्रक्रन्ता, [7]क्रमिता-सङ्क्रमिता-त्री, क्रमयिता-त्री, चिक्रमिषिता-चिक्रंसिता-त्री, चङ्क्रमिता-त्री ;

[8]क्राम्यन्-क्रामन्-न्ती, क्रमयन्-न्ती, चिक्रमिषन्-न्ती ; —

क्रमिष्यन्-न्ती-न्ती, क्रमयिष्यन्-न्ती-ती, चिक्रमिषिष्यन्-न्ती-ती ; —

[9][ऋचि] क्रममाणः[A]-[व्याकरणाध्ययनाय] क्रममाणः-[प्राज्ञे बुद्धिः] क्रममाणा,

---

1. 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिनिषेधः। एवं घञ्यपि ज्ञेयम्।

2. 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (गणसूत्रं भ्वादौ) इति मित्त्वम्। 'मितां ह्रस्वः' (6-4-92) इति णौ ह्रस्वः। एवं सर्वत्र ण्यन्ते बोध्यम्।

3. 'मितां ह्रस्वः' (6-4-92) इत्यत्र, 'वा चित्तविरागे' (6-4-91) इत्यतः 'वा इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात् 'उत्क्रामयति, सङ्क्रामयति' इत्यादि-सिद्धिं वदन्ति।' इति काशिका (6-4-92)। तेन ण्यन्तेऽत्र धातौ दीर्घविकल्प इति ज्ञायते। 'अविगीतस्तु—'सङ्क्रमयति' इत्येव।' इति माधव-धातुवृत्तौ।

4. 'अनुपसर्गाद्वा' (1-3-43) इति क्रमेः आत्मनेपदविकल्पः। तेन 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात्, परस्मैपदम्—आत्मनेपदम्—इत्युभयमपि भवति। यदा परस्मैपदम्=तदानीं सन इट् भवति। यदा त्वात्मनेपदं तदानीं, 'स्नुक्रमो-रनात्मनेपदनिमित्ते' (7-2-36) इति नियमादिण्णिषेधः। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

5. 'नित्यं कौटिल्ये गतौ' (3-1-23) इति यङ्। 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति अभ्यासस्य नुगागमः।

6. 'क्रमेः कर्तर्यात्मनेपदविषयात् कृत इण्णिषेधो वाच्यः' (वा. 7-2-36) इति इण्णिषेधः।

7. 'क्रमेः कर्तरि—' (वा. 7-2-36) इतीण्णिषेधवार्तिके 'आत्मनेपदविषयात्' इत्युक्तेः, परस्मैपदविषये तु इड् भवत्येव।

8. 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' (3-1-70) इति श्यन्विकल्पः। 'क्रमः परस्मैपदेषु' (7-3-76) इति शिति प्रत्यये परे दीर्घः।

9. 'वृत्तिसर्गतायनेषु क्रमः' (1-3-38) इत्यात्मनेपदं शानच्। वृत्तिः=अप्रति-बन्धः। सर्गः=उत्साहः। तायनम्=स्फीतता। वृत्त्याद्यर्थप्रतीतिः उदाहरणेषु यथाक्रममत्र बोध्या।

A. 'विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि।' भ. का. 8-22.

[1]उपक्रममाणः-पराक्रममाणः, [2][सूर्यः] [A]आक्रममाणः, [3][वाजी साधु] [B]विक्रममाणः, [4]प्रक्रममाणः[C]-उपक्रममाणः [वा भोक्तुम्], [5]क्रममाणः, [6]क्रम्यमाणः, क्रमयमाणः, [7]प्रचिक्रंसमानः-पराचिक्रंसमानः-उपचिक्रंसमानः, चङ्क्रम्यमाणः ;

[8][ऋचि] क्रंस्यमानः, क्रमयिष्यमाणः, प्रचिक्रंसिष्यमाणः, चङ्क्रमिष्यमाणः ; [9]प्रक्रान्-प्रक्रामौ-प्रक्रामः, [10]दूरक्राः-दधिक्राः, [11]वनक्रान् ; —

---

1. 'उपपराभ्याम्' (1-3-39) इत्यात्मनेपदं शानच् । अत्रापि पूर्वोक्तवृत्त्याद्यर्थेष्वेवात्मनेपदम् । तेन, 'सङ्क्रामन्' इत्यत्र परस्मैपदमेव ।
2. 'आङ उद्गमने' (1-3-40) इत्यात्मनेपदम् । 'ज्योतिरुद्गमन इति वक्तव्यम्' (वा. 1-3-40) इति वचनात्, 'आक्रामन् धूमो हर्म्यतलात्' इत्यत्र परस्मैपदमेव । 'नभः समाक्रामति चन्द्रमाः' इत्यत्र नोद्गमनं विवक्षितम् । किं तर्हि? व्याप्तिः, इति परस्मैपदम्—' इति माधवधातुवृत्तौ ।
3. 'वेः पादविहरणे' (1-3-41) इत्यात्मनेपदम् । पादविहरणम्=अश्वस्य गतिविशेषः । पादविहरणादन्यत्र 'विक्रामन् सन्धिः' इत्येव । त्रुटयन् इत्यर्थः । पादविक्षेपे इत्यर्थ एव धातोः पठितत्वात् अत्र सूत्रे (1-3-41) 'पादविहरणे' इत्युक्तिः—धातूनामनेकार्थत्वे लिङ्गं भवति इति केचित् ।
4. 'प्रोपाभ्यां समर्थाभ्याम्' (1-3-42) इत्यात्मनेपदम् । समर्थः=तुल्यार्थः । तच्च तुल्यार्थत्वं प्रारम्भे । तेन 'प्रक्रामन्' इत्यत्र परस्मैपदमेव ।
5. 'अनुपसर्गाद्वा' (1-3-43) इत्यात्मनेपदविकल्पः । तेन शानच् ।
6. 'वा भ्राश—' (3-1-70) इति श्यन्पक्षे रूपम् ।
7. उक्तेष्वात्मनेपदनिमित्तेषु कस्यचिद्विवक्षायाम्, 'पूर्ववत् सनः' (1-3-62) इत्यात्मनेपदम् । 'स्नुक्रमोरनात्मनेपदनिमित्ते' (7-2-36) इति नियमादिण्णिषेधः ।
8. 'वृत्तिसर्गतायनेषु क्रमः' (1-3-38) इति आत्मनेपदम् । एवं उपपरापूर्वकाभ्यामपि उदाहरणं ज्ञेयम् ।
9. क्विपि, 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घे, 'मो नो धातोः' (8-2-64) इति पदान्ते नकारः ।
10. 'जनसनखनक्रमगमो विट्' (3-2-67) इति विट् । 'विड्वनोरनुनासिकस्यात्' (6-4-41) इति मकारस्यात्वम् । सवर्णदीर्घः ।
11. 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् । दीर्घः । नत्वम् ।

A. 'परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतुतारा भयप्रदा ॥' भ. का. 8-23.

B. 'जले विक्रममाणाया हनूमान् शतयोजनम् ।' भ. का. 8-24.

C. 'द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम् ।
उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥' भ. का. 8-25.

[1]क्रान्तम्[A]-विक्रान्तः-क्रान्तवान्, क्रमितः, चिक्रमिषितः-चिक्रंसितः, चङ्क्रमितः-तवान्;

क्रमः, [2]नक्रः, [3]त्रिविक्रमः, क्रमः, चिक्रमिषुः-चिक्रंसुः, चिक्रमयिषुः, चङ्क्रमः-[4] चङ्क्रमणः[B];

[5]क्रमितव्यम्, क्रमयितव्यम्, चिक्रमिषितव्यम्-चिक्रंसितव्यम्, चङ्क्रमितव्यम्;

क्रमणीयम्, क्रमणीयम्, चिक्रमिषणीयम्-चिक्रंसनीयम्, चङ्क्रमणीयम्;

[6]क्रम्यम्, क्रम्यम्, चिक्रमिष्यम्-चिक्रंस्यम्, चङ्क्रम्यम्;

ईषत्क्रमः-दुष्क्रमः-सुक्रमः; — —

क्रम्यमाणः, क्रम्यमाणः, प्रचिक्रंस्यमानः, चङ्क्रम्यमाणः;

क्रमः, विक्रमः-पराक्रमः-उपक्रमः-सङ्क्रमः, क्रमः, चिक्रमिषः-चिक्रंसः, चङ्क्रमः;

क्रमितुम्, [C]सङ्क्रमितुम्[7], चिक्रमिषितुम्-चिक्रंसितुम्, चङ्क्रमितुम्;

---

1. उदित्त्वेन क्त्वायामिड्विकल्पात्, 'यस्य विभाषा' (7-2-15) इति निष्ठाया इण्णिषेधः। दीर्घः।
2. न क्रामतीति नक्रः=ग्राहः। 'अन्येष्वपि दृश्यते' (3-2-101) इत्यत्र 'अपि' ग्रहणं सर्वोपाधिव्यभिचारार्थम्। तेन, धात्वन्तरादपि डप्रत्ययो भवति—इति व्याख्यानात् डप्रत्ययः। नञ्समासः। 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' (6-3-75) इति निपातनान्नञो लोपो न।
3. त्रीणि—जगन्ति क्राम्यतीति त्रिविक्रमः। पचाद्यच् (3-1-134)। परमात्मा विष्णुरुच्यते। त्रयो विक्रमाः यस्येति वा त्रिविक्रमः। 'आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः।' इति भगवन्नामसहस्रे।
4. 'जुचङ्क्रम्यदन्द्रम्य—' (3-2-150) इत्यादिना ताच्छीलिको युच्। पौनःपुन्येन गमनकर्ता चङ्क्रमणः।
5. 'क्रमेः कर्तरि—' (वा. 7-2-36) इतीण्णिषेधवार्तिके 'कर्तरि' इत्युक्तत्वात् भावकर्मणोर्विषये इड् भवत्येव, तव्यदादीनां कर्त्रर्थकत्वाभावात्।
6. 'पोरदुपधात्' (3-1-98) इति यत्।
7. 'कालसमयवेलासु तुमुन्' (3-3-167) इति तुमुन्।

A. 'क्षणेन क्षीणविक्रान्ताः कपिनाऽनेषत क्षयम्॥' भ. का. 9-22.

B. 'कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्धनः।' भ. का. 7-16.

C. 'अपि प्रसन्नेन महर्षिणा त्वं सम्यग् विनीयानुमतो गृहाय।
कालो ह्ययं सङ्क्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते॥' रघुवंशे 5-10.

विक्रान्तिः-सङ्क्रान्तिः, क्रमणा, चिक्रमिषा-चिंक्रंसा[A], चिक्रमयिषा, चङ्क्रमा;[B]
सङ्क्रमणम्, क्रमणम्, चिक्रमिषणम्-चिक्रंसनम्, चङ्क्रमणम्;
[1]क्रमित्वा-क्रान्त्वा-क्रन्त्वा, क्रमयित्वा, चिक्रमिषित्वा-चिक्रंसित्वा, चङ्क्रमित्वा;
[2]प्रक्रम्य-विक्रम्य, [3]सङ्क्रमय्य, सञ्चिक्रमिष्य-प्रचिक्रंस्य, सञ्चङ्क्रम्य;

क्रामम् २, क्रमित्वा २, [C]क्रान्त्वा २, क्रन्त्वा २, } [4]क्रामम्-क्रमम् २, क्रमयित्वा २, }
चिक्रमिषम्-चिक्रंसम् २, चिक्रमिषित्वा-चिक्रंसित्वा २, }
चङ्क्रमम् २, चङ्क्रमित्वा २;

[5]क्रमुकः, [6]क्रिमिः-कृमिः.

## (274) "डु क्रीञ् द्रव्यविनिमये" (IX-क्र्यादिः-1473. सक. अनि. उभ.)

क्रायकः-यिका, [7]क्रापकः-पिका, चिक्रीषकः-षिका, चेक्रीयकः-यिका;

---

1. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इडभावपक्षे, 'क्रमश्च क्त्वि' (6-4-18) इति दीर्घविकल्पः।
2. 'प्रक्रम्य, उपक्रम्य इति बहिरङ्गोऽपि ल्यबादेशः, अन्तरङ्गानपि विधीन् बाधते—इति पूर्वमेव दीर्घत्वं न प्रवर्तते।' इति 'क्रमश्च क्त्वि' (6-4-18) इत्यत्र **काशिका**।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
4. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति ण्यन्तात्णमुलि दीर्घविकल्पः।
5. 'बाहुलकात् उः। संज्ञायां कन्। 'क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि। फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः॥' इति **मेदिनी**।' इति **अमरसुधा**।
6. 'क्रमितमिस्तम्भाम् अत इच्च' [द. उ. 1-50] इतीन् प्रत्ययः। क्रामति, क्रम्यते वा **क्रिमिः**=कीटविशेषः। 'बाहुलकात् **कृमिः** इत्यपि' इति **क्षीरस्वामी**।
7. 'क्रीङ्जीनां णौ' (6-1-48) इत्यात्वे, 'अर्तिह्री्ली—' (7-3-36) इति णौ पुगागमः। एवं ण्यन्ते सर्वत्र ज्ञेयम्।

A. 'चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम्।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने॥' **शिशुपालवधे 3-51**.

B. '**चङ्क्रमावान्** समागत्य सीतामूचे सुखाभव॥' भ. का. 5-64.

C. 'स्थायं स्थायं क्वचिद् यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित्।
वीक्षमाणो मृगं रामः चित्रवृत्तिं विसिष्मिये॥' भ. का. 5-51.

क्रेता-त्री, क्रापयिता-त्री, चिक्रीषिता-त्री, चेक्रीयिता-त्री ;

[1]क्रीणन्[A]-ती, क्रापयन्-न्ती, चिक्रीषन्-न्ती ; —

क्रेष्यन्-न्ती-ती, क्रापयिष्यन्-न्ती-ती, चिक्रीषिष्यन्-न्ती-ती ; —

क्रीणानः, [2]परिक्रीणानः[B]-विक्रीणानः-अवक्रीणानः ; क्रापयमाणः, चिक्रीषमाणः, चेक्रीयमाणः ;

क्रेष्यमाणः, क्रापयिष्यमाणः, चिक्रीषिष्यमाणः, चेक्रीयिष्यमाणः ;

[3]यवक्रीः-यवक्रियौ-यवक्रियः ; — —

क्रीतम्-तः,[C] क्रापितः, चिक्रीषितः, चेक्रीयितः-तवान्,

क्रयः, [4]मांसविक्रयी,[D] सोमविक्रयी, अन्नविक्रयी, [5]धान्यविक्रायः, क्रापः, चिक्रीषुः, चेक्रियः ;

क्रेतव्यम्, क्रापयितव्यम्, चिक्रीषितव्यम्, चेक्रीयितव्यम् ;

क्रयणीयम्, क्रापणीयम्, चिक्रीषणीयम्, चेक्रीयणीयम् ;

[6]क्रय्यम्-क्रेयम्, क्राप्यम्, चिक्रीष्यम्, चेक्रीय्यम् ;

ईषत्क्रयः-दुष्क्रयः-सुक्रयः ; — —

क्रीयमाणः, क्राप्यमाणः, चिक्रीष्यमाणः, चेक्रीय्यमाणः ;

---

1. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः । 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः । णत्वम् ।
2. 'परिव्यवेभ्यः क्रियः' (1-3-18) इत्यात्मनेपदमेव, न तु शता ।
3. 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् ।
4. 'कर्मणीनिर्विक्रियः' (3-2-93) इत्यत्र 'कुत्सितग्रहणं कर्तव्यम्' (वा. 3-2-93) इति वचनात् कुत्सायामिनिः ।
5. कुत्साया अभावे 'कर्मण्यण्' (3-2-1) इत्यण् ।
6. 'क्रय्यस्तदर्थे' (6-1-82) इति निपातनात् यति अयादेशः । 'क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं द्रव्यम्=क्रय्यम् । क्रेयम् अन्यत् ।' इति सिद्धान्तकौमुदी ।

A. 'क्रीणन् गुणैर्जनमतिं प्रियरूप ईशः मांसश्रियां प्रमयकृत् सितपीतचेलः ।' धा. का. 3-5.

B. 'कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् ।
पित्रा संरक्षितं शक्रात् स मैनाकाद्रिमैक्षत ॥' भ. का. 8-8.

C. 'सम्भोगाय परिक्रीतः कर्ताऽस्मि तव नाप्रियम् ॥' भ. का. 8-78.

D. 'मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम् ।' भ. का. 6-129.

[1]क्रय:, [A]निष्क्रय:, [2]अवक्रय:, विक्रय:, क्राप:, [3]क्रीत्रिमम्, क्राप:,
चिक्रीष:, चेक्रीय: ;

क्रेतुम्, क्रापयितुम्, चिक्रीषितुम्, चेक्रीयितुम् ;
विक्रीति:, क्रापणा, चिक्रीषा, चेक्रीया ;
परिक्रयणम्, क्रापणम्, चिक्रीषणम्, चेक्रीयणम् ;
क्रीत्वा, क्रापयित्वा, चिक्रीषित्वा, चेक्रीयित्वा ;
विक्रीय, - विक्राप्य, विचिक्रीष्य, विचेक्रीय्य ;
क्रायम् २, } क्रापम् २, } चिक्रीषम् २, } चेक्रीयम् २ ; }
क्रीत्वा २, } क्रापयित्वा २, } चिक्रीषित्वा २, } चेक्रीयित्वा २; }
[4]क्रयिक:.

## (275) "क्रीडृ विहारे" (I-भ्वादि:-350. अक. सेट्. पर.)

क्रीडक:-डिका, क्रीडक:-डिका, चिक्रीडिषक:-षिका, चेक्रीडक: -डिका ;
क्रीडिता-त्री, क्रीडयिता-त्री, चिक्रीडिषिता-त्री, चेक्रीडिता-त्री ;
क्रीडन्-न्ती, [5]अनुक्रीडन्, सङ्क्रीडन्-न्ती, क्रीडयन्-न्ती, चिक्रीडिषन्-न्ती; —
क्रीडिष्यन्-न्ती-ती, क्रीडयिष्यन्-न्ती-ती, चिक्रीडिषन्-न्ती-ती ;
[6]अनुक्रीडमान:[B]-सङ्क्रीडमान:-परिक्रीडमान:, [7]आक्रीडमान:,

---

1. 'एरच्' (3-3-56) इति भावे अच्।
2. 'आयस्थानेषु वणिगादिभिर्दीयमान: स्वामिग्राह्यो भाग:=अवक्रय:। यस्य 'पिण्डक' इति प्रसिद्धि:।' इति माधवधातुवृत्तौ। 'पुंसि संज्ञायां घ: प्रायेण' (3-3-118) इति घ:।
3. 'ड्वित: क्त्रि:' (3-3-88) इति भावे क्त्रि:। 'क्त्रेर्मम्नित्यम्' (4-4-20) इति तेन निर्वृत्तम्—(4-4-19) इत्यर्थे मप्। मप्प्रत्ययान्त एव प्रयोज्य:। [क्रयिक:।
4. औणादिके [द. उ. 3-16] इकन् प्रत्यये क्रयिक: इति रूपम्। पण्यसङ्ग्रहीता=
5. 'तृतीयार्थे' (1-4-85) इति यदाऽनु: कर्मप्रवचनीयसंज्ञक:, तदा शता।
6. 'क्रीडोऽनुसंपरिभ्यश्च' (1-3-21) इति शानच्। 'समोऽकूजने इति वक्तव्यम्' (वा 1-3-21) इत्युक्तत्वात् 'सङ्क्रीडन्ति शकटानि' इत्यपि भवति। शत्रन्तमेतत्।
7. 'क्रीडोऽनुसंपरिभ्यश्च' (1-3-21) इत्यत्र चकारादाङ अनुवृत्तेः शानच्।

A. 'स्वामिनो निष्क्रयं गन्तुमाविष्कृतबल: कपि:।
रराज समरे शत्रून् घ्नन् दुष्कृतवहिष्कृत:॥' भ. का. 9-61.

B. 'फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु।
साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम्॥' भ. का, 8-10.

क्रीडयमानः, [1]अनुचिक्रीडिषमाणः, चेक्रीड्यमानः ;

अनुक्रीडिष्यमाणः, क्रीडयिष्यमाणः, परिचिक्रीडिषिष्यमाणः, चेक्रीडिष्यमाणः ;

सङ्क्रीट्[2]-सङ्क्रीड्-सङ्क्रीडौ-सङ्क्रीडः ; — — —

क्रीडितः[3]-तम्, क्रीडितः, चिक्रीडिषितः, चेक्रीडितः-तवान् ;

[4]क्रीडः, [5]आक्रीडी,[A] क्रीडः, चिक्रीडिषुः, चेक्रीडः ;

क्रीडितव्यम्, क्रीडयितव्यम्, चिक्रीडिषितव्यम्, चेक्रीडितव्यम् ;

क्रीडनीयम्, क्रीडनीयम्, चिक्रीडिषणीयम्, चेक्रीडनीयम् ;

क्रीड्यम्, क्रीड्यम्, चिक्रीडिष्यम्, चेक्रीड्यम् ;

ईषत्क्रीडः-दुष्क्रीडः-सुक्रीडः ; — — —

क्रीड्यमानः, क्रीड्यमानः, चिक्रीडिष्यमाणः, चेक्रीड्यमानः ;

क्रीडः-[6]आक्रीडः, [7]चिक्रीडः, क्रीडः, चिक्रीडिषः, चेक्रीडः ;

क्रीडितुम्, क्रीडयितुम्, चिक्रीडिषितुम्, चेक्रीडितुम् ;

[8]क्रीडा, क्रीडना, चिक्रीडिषा, चेक्रीडा ;

[B]क्रीडनम्, क्रीडनम्, चिक्रीडिषणम्, चेक्रीडनम् ;

क्रीडित्वा, क्रीडयित्वा, चिक्रीडिषित्वा, चेक्रीडित्वा ;

सङ्क्रीड्य, सङ्क्रीड्य, सञ्चिक्रीडिष्य, सञ्चेक्रीड्य ;

क्रीडम् २, } क्रीडम् २, } चिक्रीडिषम् २, } चेक्रीडम् २ ; }
क्रीडम् २, } क्रीडयित्वा २, } चिक्रीडिषित्वा २, } चेक्रीडित्वा २. }

---

1. 'पूर्ववत् सनः' (1-3-62) इति शानच्।
2. 'वाऽवसाने' (8-4-56) इति चर्त्वविकल्पः।
3. 'प्रभुक्तो गोरसं कृष्णः प्रभुक्तोऽनेन गोरसः।
   **प्रक्रीडितो** वने शौरिः **प्रक्रीडित**मिहामुना ॥' इति 'आदिकर्मणि क्तः कर्तरि च' (3-4-71) इति सूत्रोदाहरणम्—**प्रक्रियासर्वस्वे** कृतम्।
4. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः।
5. 'सम्पृचानुरुधाङ्यम—' (3-2-142) इत्यादिना अनुपसृष्टात् घिनुण् ताच्छीलिकः।
6. आक्रीडन्त्यस्मिन् इत्यधिकरणे 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति घञ्। 'आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः' इति श्री**विष्णुपुराणे**।
7. 'घनर्थे कविधानम्' (वा 3-3-58) इति कः। 'द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्' (वा 6-1-12) इति द्वित्वम्।
8. 'गुरोश्च हलः' (3-3-13) इत्यप्रत्ययः।

A. 'सोढुमा**क्रीडिनो**ऽशक्याः शिखिनः परिवादिनः ॥' भ-का. 7-8.

B. 'अकद्धरि**क्रीडन**धूततोडकान् प्रहूडितान् होडदरोडयभिक्षुकैः।' धा. का. 1-46.

(276) "क्रुड संवरणे" (VI-तुदादिः-1394. अक. सेट्. पर.) कुटादिः ।
'निमज्जने' इत्यात्रेयः ।

क्रोडकः-डिका, क्रोडकः-डिका, चुक्रुडिषकः-षिका, चोक्रुडकः-डिका, [1]चुक्रुडिषन्-न्ती, इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककुटतिवत् (204) ज्ञेयानि । क्रोडः[A]-डा, अश्वानामुरः क्रोडा । 'न क्रोडादिबह्वचः' (4-1-56) इति स्त्रियां ङीषूनिषेधः ।

(277) "क्रुध क्रोधे" (IV-दिवादिः-1189. अक. अनि. पर.)

क्रोधकः-धिका, क्रोधकः-धिका, [2]चुक्रुत्सकः-त्सिका, चोक्रुधकः-धिका ;
क्रोद्धा-त्री, क्रोधयिता-त्री, चुक्रुत्सिता-त्री, चोक्रुधिता-त्री ;
[3]क्रुध्यन्[B] न्ती, [4]क्रोधयन्-न्ती, चुक्रुत्सन्-न्ती ; —
क्रोत्स्यन्-न्ती-ती, क्रोधयिष्यन्-न्ती-ती, चुक्रुत्सिष्यन्-न्ती-ती ; —
[5]व्यतिक्रुध्यमानः, — व्यतिचुक्रुत्सिष्यमाणः, चोक्रुध्यमानः;
व्यतिक्रोत्स्यमानः, — — चोक्रुधिष्यमाणः ;
क्रुत्-क्रुधौ-क्रुधः ; — — —
क्रुद्धम्-क्रुद्धः-क्रुद्धवान्, क्रोधितः, चुक्रुत्सितः, चोक्रुधितः-तवान् ;
[6]क्रुधः[C]-[7]क्रोधनः, क्रोधः, चुक्रुत्सुः, चोक्रुधः ;
क्रोद्धव्यम्, क्रोधयितव्यम्, चुक्रुत्सितव्यम्, चोक्रुधितव्यम् ;

---

1. 'अनुदात्तङित आत्मनेपदम्' (1-3-12) इति सूत्रे उपदेशग्रहणानुवृत्त्या ङित्वाभावात् सन्नन्तात् परस्मैपदमेव ।
2. 'हलन्ताच्च' (1-2-10) इति सनः कित्वम् । उपदेशे एकाच्त्वात् इण्ण ।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् । श्यनः ङिद्वद्भावान्नाङ्गस्य लघूपधगुणः ।
4. 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् शतैव ।
5. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
6. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः ।
7. 'क्रुधमण्डार्थेभ्यश्च' (3-2-151) इति ताच्छीलिको युच् ।

A. 'क्षौमेण स्फुडितं स्रजा निचुलितं चाक्रोडय शोभं धनुः
गेहक्रोडतले स मोदकुलितः दृष्ट्वाऽसुरिष्टं क्षणात् ।' धा. का. 2-82.

B. 'क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः यास्यन् सुतः तप्स्यति मां समन्युम् ।'
भ. का. 1-23.

C. 'शक्यन् गर्वमशक्यमानमनसां आस्त्रियदास्योऽक्रुधं
क्षुध्यद्भक्तदमाप मालिकवरं शुद्धं स सिद्धेप्सितम् ॥' धा. का. 2-63.

क्रोधनीयम्, क्रोधनीयम्, चुक्रुत्सनीयम्, चोक्रुधनीयम्;

क्रोध्यम्, क्रोध्यम्, चुक्रुत्स्यम्, चोक्रुध्यम्;

ईषत्क्रोधः-दुष्क्रोधः-सुक्रोधः; — —

क्रुध्यमानः, क्रोध्यमानः, चुक्रुत्स्यमानः, चोक्रुध्यमानः;

क्रोधः, क्रोधः, चुक्रुत्सः, चोक्रुधः;

क्रोद्धुम्, क्रोधयितुम्, चुक्रुत्सितुम्, चोक्रुधितुम्;

क्रुद्धिः, [1]क्रुत्[A], क्रोधना, चुक्रुत्सा, चोक्रुधा;

क्रोधनम्, क्रोधनम्, चुक्रुत्सनम्, चोक्रुधनम्;

क्रुद्ध्वा, क्रोधयित्वा, चुक्रुत्सित्वा, चोक्रुधित्वा;

सङ्क्रुध्य, सङ्क्रोध्य, सञ्चुक्रुत्स्य, सञ्चोक्रुध्य;

क्रोधम् २, } क्रोधम् २, } चुक्रुत्सम् २, } चोक्रुधम् २; }
क्रुध्वा २, } क्रोधयित्वा २, } चुक्रुत्सित्वा २. } चोक्रुधित्वा २. }

## (278) "क्रुन्च कौटिल्याल्पीभावयोः"

(I-भ्वादिः-186. सक. सेट्. पर.) अयं नोपधः। [अ]

क्रुञ्चकः-ञ्चिका, क्रुञ्चकः-ञ्चिका, चुक्रुञ्चिषकः-षिका, [2]चोक्रुचकः-चिका;

क्रुञ्चिता-त्री, क्रुञ्चयिता-त्री, चुक्रुञ्चिषिता-त्री, चोक्रुचिता-त्री;

क्रुञ्चन्-न्ती, क्रुञ्चयन्-न्ती, चुक्रुञ्चिषन्-न्ती; —

क्रुञ्चिष्यन्-न्ती-ती, क्रुञ्चयिष्यन्-न्ती-ती, चुक्रुञ्चिषिष्यन्-न्ती-ती; —

व्यतिक्रुञ्चमानः, क्रुञ्चयमानः, — चोक्रुच्यमानः;

व्यतिक्रुञ्चिष्यमाणः, क्रुञ्चयिष्यमाणः, — चोक्रुचिष्यमाणः;

---

1. 'संपदादिभ्यः क्विप्' (वा. 3-3-94) इति क्तिनोऽपवादः क्विप्। क्तिनपि बाहुलकात्।

2. 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति नलोपः। यङोऽल्लोपस्य स्थानिवद्भावात् लघूपधगुणो न।

[अ] 'गतिकौटिल्याल्पीभावयो' रिति पाठान्तरम्। गतेः कौटिल्ये, द्रव्यस्याल्पीभावे च, इत्यर्थः। 'गति कौटिल्ययोः' इति कविकल्पद्रुमे इति धातुकाव्यव्याख्यायाम्।

A. 'संश्रृण्वतः तामवधत गिरं हृदि क्रुदारत् अक्षिद्वयमाशु रक्तिमा।' वा. वि. 1-40.

| | | | |
|---|---|---|---|
| [1]क्रुङ्-क्रुञ्चौ-क्रुञ्चः, [2]क्रुञ्चा; | | — | — |
| [3]क्रुचितम्-तः-तवान्, | क्रुञ्चितः, | चुक्रुञ्चिषितः, | चोक्रुचितः-तवान्; |
| क्रुञ्चः, | क्रुञ्चः, | चुक्रुञ्चिषुः, | चोक्रुञ्चः; |
| क्रुञ्चितव्यम्, | क्रुञ्चयितव्यम्, | चुक्रुञ्चिषितव्यम्, | चोक्रुचितव्यम्; |
| क्रुञ्चनीयम्, | क्रुञ्चनीयम्, | चुक्रुञ्चिषणीयम्, | चोक्रुचनीयम्; |
| क्रुञ्चयम्, | क्रुञ्चयम्, | चुक्रुञ्चिष्यम्, | चोक्रुच्यम्; |
| ईषत्क्रुञ्चः-दुष्क्रुञ्चः-सुक्रुञ्चः; | — | — | — |
| क्रुच्यमानः, | क्रुञ्च्यमानः, | चुक्रुञ्चिष्यमाणः, | चोक्रुच्यमानः; |
| क्रुञ्चः, | क्रुञ्चः, | चुक्रुञ्चिषः, | चोक्रुचः; |
| क्रुञ्चितुम्, | क्रुञ्चयितुम्, | चुक्रुञ्चिषितुम्, | चोक्रुचितुम्; |
| [4]क्रुञ्चा, | क्रुञ्चना, | चुक्रुञ्चिषा, | चोक्रुचा; |
| क्रुञ्चनम्, | क्रुञ्चनम्, | चुक्रुञ्चिषणम्, | चोक्रुचनम्; |
| [5]क्रुञ्चित्वा, | क्रुञ्चयित्वा, | चुक्रुञ्चिषित्वा, | चोक्रुचित्वा; |
| सङ्क्रुच्य, | सङ्क्रुञ्च्य, | प्रचुक्रुञ्चिष्य | सञ्चोक्रुच्य; |
| क्रुञ्चम् २, क्रुञ्चित्वा २, | क्रुञ्चम् २, क्रुञ्चयित्वा २, | चुक्रुञ्चिषम् २, चुक्रुञ्चिषित्वा २, | चोक्रुचम् २; चोक्रुचित्वा २. |

## (279) "क्रुश आह्वाने रोदने च" (I-भ्वादिः-856. सक. अनि. पर.)

### ज्वलादिः ।

क्रोशकः-शिका, क्रोशकः-शिका, [6]चुक्रुक्षकः-क्षिका, चोक्रुशकः-शिका;

---

1. 'ऋत्विग्दधृक्—' (3-2-59) इत्यादिना क्विन् । नलोपाभावो निपातनात्, चकारस्य संयोगान्तलोपः । 'क्विन्प्रत्ययस्य कुः' (8-2-62) इति नकारस्य कुत्वेन ङकारः । 'भाष्यरीत्या तु ओपधत्वमस्य धातोस्सम्मतम् । 'परेश्च घाङ्कयोः' (8-2-22) इत्यत्र भाष्ये स्पष्टमेतत्' । इति प्र. सर्वस्वे ।
2. 'आपं चैव हलन्तानां—' इति टाप् ।
3. 'अनिदितां हलः—' (6-4-24) इति नलोपः ।
4. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः ।
5. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् नलोपो न ।
6. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम् । षत्वम् । 'षढोः कः सि' (8-2-41) इति ककारः । 'आदेशप्रत्यययोः' (8-3-59) इति षकारः ।

| | | | |
|---|---|---|---|
| क्रोष्टा-ष्ट्री, | क्रोशयिता-त्री, | चुक्रुक्षिता-त्री, | चोक्रुशिता-त्री ; |
| क्रोशन्-न्ती, | क्रोशयन्-न्ती, | चुक्रुक्षन्-न्ती ; | — |
| क्रोक्ष्यन्-न्ती-ती, | क्रोशयिष्यन्-न्ती-ती, | चुक्रुक्षिष्यन्-न्ती-ती ; | — |
| [1]व्यतिक्रोशमानः, | क्रोशयमानः, | — | चोक्रुश्यमानः ; |
| व्यतिक्रोक्ष्यमाणः, | क्रोशयिष्यमाणः, | — | चोक्रुशिष्यमाणः ; |
| [2]क्रुट्-क्रुड्-क्रुशौ-क्रुशः ; | — | — | — |
| [A]क्रुष्टम्-[3]क्रुष्टः-क्रुष्टवान्, | क्रोशितः, | चुक्रुक्षितः, | चोक्रुशितः-तवान् ; |
| क्रुशः-[4]क्रोशः, [B]बान्धवक्रोशी, | [5]आक्रोशकः, | [6]उष्ट्रकोशी, | क्रोशः, |
| | | चुक्रुक्षुः, | चोक्रुशः ; |
| क्रोष्टव्यम्, | क्रोशयितव्यम्, | चुक्रुक्षितव्यम्, | चोक्रुशितव्यम् ; |
| क्रोशनीयम्, | क्रोशनीयम्, | चुक्रुक्षणीयम्, | चोक्रुशनीयम् ; |
| क्रोश्यम्, | क्रोश्यम्, | चुक्रुक्ष्यम्, | चोक्रुश्यम् ; |
| ईषत्क्रोशः-दुष्क्रोशः-सुक्रोशः ; | | — | — |
| क्रुश्यमानः, | क्रोश्यमानः, | चुक्रुक्ष्यमाणः, | चोक्रुश्यमानः ; |
| [7]क्रोशः, | क्रोशः, | चुक्रुक्षः, | चोक्रुशः ; |
| क्रोष्टुम्, | क्रोशयितुम्, | चुक्रुक्षितुम्, | चोक्रुशितुम् ; |
| आक्रुष्टिः, | [8]व्यावक्रोशी, | आक्रोशना, चुक्रुक्षा, | चोक्रुशा ; |
| क्रोशनम्, | क्रोशनम्, | चुक्रुक्षणम्, | चोक्रुशनम् ; |

---

1. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
2. 'व्रश्च—' (8-2-36) इत्यादिना षत्वे, 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वम्।
3. 'मतिबुद्धिपूजार्थेभ्यश्च' (3-2-188) इति चकारात्, 'गत्यर्थाकर्मक—' (3-4-72) इत्यनेन रोदनेऽकर्मकत्वाद्वा क्तः कर्तरि वर्तमाने।
4. 'ज्वलितिकसन्तेभ्यो णः' (3-1-140) इति वा णः। पक्षे 'इगुपध—' (3-1-135) इति कर्तरि कः।
5. 'देविक्रुशोश्चोपसर्गे' (3-2-147) इति ताच्छीलिके वुञि रूपम्।
6. 'कर्तर्युपमाने' (3-2-79) इति कर्तरि णिनिः।
7. 'हलश्च' (3-3-121) इति संज्ञायां घञ्।
8. 'कर्मव्यतीहारे—' (3-3-43) इति णच्। 'णचस्त्रियामञ्' (5-4-14) इत्यञ्। 'टिड्ढा—' (4-1-15) इत्यादिना ङीप्।

A. 'आशितम्भवमुत्क्रुष्टं वल्गितं शयितं स्थितम्।' भ. का. 6-106.
B. 'बान्धवाक्रोशिनो मेजुः अनाथाः ककुभो दश॥' भ. का. 6-123.

क्रुष्ट्वा, क्रोशयित्वा, चुक्रुक्षित्वा, चोक्रुशित्वा ;

आक्रुश्य, सङ्क्रोश्य, सञ्चुक्रुक्ष्य, सञ्चोक्रुश्य ;

क्रोशम् २, } क्रोशम् २, } चुक्रुक्षम् २, } चोक्रुशम् २ ; }
क्रुष्ट्वा २, } क्रोशयित्वा २, } चुक्रुक्षित्वा २, } चोक्रुशित्वा २. }

## (280) "क्नथ हिंसायाम्" (I-भ्वादिः-802. सक. सेट्. पर.)घटादिः ।

क्नाथकः-थिका, [1]क्नथकः-थिका, चिक्नथिषकः-षिका, चाक्नथकः-थिका ;

क्नथिता-त्री, क्नथयिता-त्री, चिक्नथिषिता-त्री, चाक्नथिता-त्री ;

क्नथन्-न्ती, [A]क्नथयन्-न्ती, चिक्नथिषन्-न्ती ; —

क्नथिष्यन्-न्ती-ती, क्नथयिष्यन्-न्ती-ती ; चिक्नथिषिष्यन्-न्ती-ती ; —

— क्नथयमानः, क्नथयिष्यमाणः, चाक्नथ्यमानः, चाक्नथिष्यमाणः ;

क्नथ्-क्नत्-क्नथौ-क्नथः ; — — —

क्नथितम्-तः, [2]क्नथितः, चिक्नथिषितः, चाक्नथितः-तवान् ;

क्नथः, क्नथः, चिक्नथिषुः, चाक्नथः ;

क्नथितव्यम्, क्नथयितव्यम्, चिक्नथिषितव्यम्, चाक्नथितव्यम् ;

क्नथनीयम्, [3]क्नथनीयम्, चिक्नथिषणीयम्, चाक्नथनीयम् ;

क्नाथ्यम्, [4]क्नथ्यम्, चिक्नथिष्यम्, चाक्नथ्यम् ;

ईषत्क्नथः-दुष्क्नथः-सुक्नथः ; — —

क्नथ्यमानः, क्नथ्यमानः, चिक्नथिष्यमाणः, चाक्नथ्यमानः ;

क्नाथः, क्नथः, चिक्नथिषः, चाक्नथः ;

क्नथितुम्, क्नथयितुम्, चिक्नथिषितुम्, चाक्नथितुम् ;

क्नत्तिः, क्नथना, चिक्नथिषा, चाक्नथा ;

क्नथनम्, क्नथनम्, चिक्नथिषणम्, चाक्नथनम् ;

क्नथित्वा, क्नथयित्वा, चिक्नथिंषित्वा, चाक्नथित्वा ;

---

1. 'घटादयो मितः' (गणसूत्रं भ्वादौ) इति मित्त्वम् । 'मितां ह्रस्वः' (6-4-92). इति णौ ह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
2. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः ।
3. 'णेरनिटि' (6-4-51) इति णिलोपः ।
4. 'अचो यत्' (3-1-97) इति ण्यन्ताद्यत् ।

A. 'श्लथ्यात्मनां क्राथयताऽच्युतेन किं नाङ्गजो नः क्नथयन् अचानि । वनाम किं प्रज्वलितो हरेण सोऽद्यापि यत् विह्वलयन् अनङ्गः ॥' धा. का. 2-10,

| | | | |
|---|---|---|---|
| प्रक्लथ्य, | [1]प्रक्लथय्य, | प्रचिक्लथिष्य, | प्रचाक्लथ्य ; |
| क्लाथम् २, <br> क्लथित्वा २, | [2]क्लथम् २,-क्लाथम् २, <br> क्लथयित्वा २, | चिक्लथिषम् २, <br> चिक्लथिषित्वा २, | चाक्लथम् २ ; <br> चाक्लथित्वा २. |

## (281) "क्लदि आह्वाने रोदने च"

(I-भ्वादिः-72. (774.) सक. सेट्. पर.)

अस्यैव वैक्लव्येऽर्थे घटादिपाठः षित्त्वं च। आत्मनेपदं च घटादिपठितस्य।

क्लन्दकः-न्दिका, क्लन्दकः-न्दिका, चिक्लन्दिषकः, चाक्लन्दकः, इत्यादिकं सर्वं क्रन्दतिवत् (270) ज्ञेयम्। अनुपधात्वेऽपि घटादिपाठात् णमुलि 'चिण्णमुलोः' (6-4-93) इति दीर्घविकल्पः—क्लन्दम् २-क्लान्दम् २, इति रूपम्। क्लन्दमानः, क्लन्दिष्यमाणः, चिक्लन्दिषमाणः, चिक्लन्दिषिष्यमाणः; इति शानचि रूपाणीति विशेषः।

## (282) "क्लप व्यक्तायां वाचि"

(X-चुरादिः-1659. अक. सेट्. उभ.) [अ]

| | |
|---|---|
| क्लापकः-पिका, | चिक्लापयिषकः-षिका ; |
| क्लापयिता-त्री, | चिक्लापयिषिता-त्री ; |
| क्लापयन्-न्ती, | चिक्लापयिषन्-न्ती ; |
| क्लापयिष्यन्-न्ती-ती, | चिक्लापयिषिष्यन्-न्ती-ती ; |
| क्लापयमानः, | चिक्लापयिषमाणः ; |
| क्लापयिष्यमाणः, | चिक्लापयिषिष्यमाणः ; |
| क्लाप्-क्लापौ-क्लापः ; | — |
| क्लापितम्-तः-तवान्, | चिक्लापयिषितः-तवान् ; |
| क्लापः, | चिक्लापयिषुः ; |
| क्लापयितव्यम्, | चिक्लापयिषितव्यम् ; |

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
2. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः।
[अ] अनेकाच्त्वात् अस्य धातोः यङ् न। 'क्ष्प' इत्यस्य पाठान्तरमिदम्।

| | |
|---|---|
| क्लापनीयम्, | चिक्लापयिषणीयम्; |
| क्लाप्यम्, | चिक्लापयिष्यम्; |
| ईषत्क्लापः-दुष्क्लापः-सुक्लापः; | — |
| क्लाप्यमानः, | चिक्लापयिष्यमाणः; |
| क्लापः, | चिक्लापयिषः; |
| क्लापयितुम्, | चिक्लापयिषितुम्; |
| क्लापना, | चिक्लापयिषा; |
| क्लापनम्, | चिक्लापयिषणम्; |
| क्लापयित्वा, | चिक्लापयिषित्वा; |
| प्रक्लाप्य, | प्रचिक्लापयिष्य; |
| क्लापम् २, क्लापयित्वा २, | चिक्लापयिषम् २; चिक्लापयिषित्वा २. |

(283) "क्लमु ग्लानौ" (IV-दिवादिः-अक. सेट्. पर.) शमादिः।

[1]क्लमकः-मिका, [2]क्लमकः-मिका, चिक्लमिषकः-षिका, [3]चङ्क्लमकः-मिका;
क्लमिता-त्री, क्लमयिता-त्री, चिक्लमिषिता-त्री, चङ्क्लमिता-त्री;
[4]क्लाम्यन्-क्लामन्-न्ती, क्लमयन्-न्ती, चिक्लमिषन्-न्ती; —
क्लमिष्यन्-न्ती-ती, क्लमयिष्यन्-न्ती-ती, चिक्लमिषिष्यन्-न्ती-ती; —
[5]व्यतिक्लाममानः-व्यतिक्लाम्यमानः, क्लमयमानः, — चङ्क्लम्यमानः;
व्यतिक्लमिष्यमाणः, क्लमयिष्यमाणः, — चङ्क्लमिष्यमाणः;
[6]विक्लान्-विक्लामौ-विक्लामः; — —

---

1. 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिनिषेधः। एवं घञ्यपि।
2. 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (गणसूत्रं-घटादौ) इत्यमन्तत्वेन मित्त्वात् उपधायाः ह्रस्वो णौ।
3. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुक् सर्वत्र यङन्ते बोध्यम्।
4. 'वा भ्राशभ्लाश—' (3-1-70) इत्यादिना श्यनो विकल्पः। 'शमामष्टानां दीर्घः श्यनि' (7-3-74) इति दीर्घः। श्यनभावपक्षे औत्सर्गिके, 'कर्तरि शप्' (3-1-68) इति शपि 'ष्ठिवुक्लमुचमां शिति' (7-3-75) इति दीर्घः।
5. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
6. 'अनुनासिकस्य क्विझलोः—' (6-4-15) इति दीर्घे, 'मो नो धातोः' (8-2-64) इति नकारः।

[1]क्लान्तम्[A]-क्लान्तः, क्लमितः, चिक्लमिषितः, चङ्क्लमितः-तवान्;
क्लमः, [2]क्लमी[B], क्लमः, चिक्लमिषुः, चङ्क्लमः;
क्लमितव्यम्, क्लमयितव्यम्, चिक्लमिषितव्यम्, चङ्क्लमितव्यम्;
क्लमनीयम्, क्लमनीयम्, चिक्लमिषणीयम्, चङ्क्लमनीयम्;
[3]क्लम्यम्, [4]क्लम्यम्, चिक्लमिष्यम्, चङ्क्लम्यम्;
ईषत्क्लमः-दुष्क्लमः-सुक्लमः; — —
क्लम्यमानः, क्लम्यमानः, चिक्लमिष्यमाणः, चङ्क्लम्यमानः;
[C]क्लमः, क्लमः, चिक्लमिषः, चङ्क्लमः;
क्लमितुम्, क्लमयितुम्, चिक्लमिषितुम्, चङ्क्लमितुम्,
[5]क्लान्तिः, क्लमना, चिक्लमिषा, चङ्क्लमा;
क्लमनम्, क्लमनम्, चिक्लमिषणम्, चङ्क्लमनम्;
[6]क्लमित्वा-क्लान्त्वा, क्लमयित्वा, चिक्लमिषित्वा, चङ्क्लमित्वा;
सङ्क्लम्य, [7]सङ्क्लमय्य, प्रचिक्लमिष्य, सञ्चङ्क्लम्य;
क्लमम् २, क्लमित्वा २-क्लान्त्वा २, } [8]क्लमम् २-क्लामम् २, क्लमयित्वा २, } चिक्लमिषम् २, चिक्लमिषित्वा २, }
चङ्क्लमम् २; चङ्क्लमित्वा २. }

## (284) "क्लिदि परिदेवने" (I-भ्वादिः-15. सक. सेट्. आत्म.)

'क्लिन्दते क्लिन्दतीत्येवम् इदितः परिदेवने।
क्लिद्यतीत्यार्द्रभावेऽर्थे क्लिदेः श्यन्यूदितो भवेत्॥' (श्लो. 102) इति देवः।

---

1. उदित्त्वात् 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः। दीर्घः।
2. 'शमित्यष्टाभ्यो घिनुण्' (3-2-141) इति ताच्छीलिको घिनुण्।
3. 'पोरदुपधात्' (3-1-98) इति यत्।
4. ण्यन्तात् 'अचो यत्' (3-1-97) इति यत्।
5. 'तितुत्र—' (7-2-9) इत्यादिना इण्णिषेधः। दीर्घः।
6. 'उदितो वा' (7-3-56) इति क्त्वायाः इड् वा।
7. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
8. अमन्तत्वेन मित्त्वात् 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः।

A. 'भ्राम्यामि भोः क्षाम्य ममापराधं क्लान्तं मनो माद्यति दर्शनात्ते॥' धा.का. 2.65.
B. 'क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः॥' भ. का. 7-5.
C. 'अथ क्लमादनिकाणा नराः क्षीणरणा इव।' भ. का. 7-58.

क्लिन्दकः-न्दिका, क्लिन्दकः-न्दिका, चिक्लिन्दिषकः-षिका, चेक्लिन्दकः-न्दिका ;
क्लिन्दिता-त्री, क्लिन्दयिता-त्री, चिक्लिन्दिषिता-त्री, चेक्लिन्दिता-त्री ;
— क्लिन्दयन्-न्ती, क्लिन्दयिष्यन्-न्ती-ती ; —
क्लिन्दमानः, क्लिन्दयमानः, चिक्लिन्दिषमाणः, चेक्लिन्द्यमानः ;
क्लिन्दिष्यमाणः, क्लिन्दयिष्यमाणः, चिक्लिन्दिषिष्यमाणः, चेक्लिन्दिष्यमाणः ;
क्लिन्-क्लिन्दौ-क्लिन्दः ; — — —
[A]क्लिन्दितम्-तः, क्लिन्दितः, चिक्लिन्दिषितः, चेक्लिन्दितः-तवान् ;
क्लिन्दः, [1]क्लिन्दनः, [2]विक्लिन्दी, क्लिन्दः, चिक्लिन्दिषुः, चेक्लिन्दः ;
क्लिन्दितव्यम्, क्लिन्दयितव्यम्, चिक्लिन्दिषितव्यम्, चेक्लिन्दितव्यम् ;
क्लिन्दनीयम्, क्लिन्दनीयम्[B], चिक्लिन्दिषणीयम्, चेक्लिन्दनीयम् ;
क्लिन्द्यम्, क्लिन्द्यम्, चिक्लिन्दिष्यम्, चेक्लिन्द्यम् ;
ईषत्क्लिन्दः-दुष्क्लिन्दः-सुक्लिन्दः ; — —
क्लिन्द्यमानः, क्लिन्द्यमानः, चिक्लिन्दिष्यमाणः, चेक्लिन्द्यमानः ;
क्लिन्दः, क्लिन्दः, चिक्लिन्दिषः, चेक्लिन्दः ;
क्लिन्दितुम्, क्लिन्दयितुम्, चिक्लिन्दिषितुम्, चेक्लिन्दितुम् ;
क्लिन्दा, क्लिन्दना, चिक्लिन्दिषा, चेक्लिन्दा ;
क्लिन्दनम्, क्लिन्दनम्, चिक्लिन्दिषणम्, चेक्लिन्दनम् ;
क्लिन्दित्वा, क्लिन्दयित्वा, चिक्लिन्दिषित्वा, चेक्लिन्दित्वा ;
प्रक्लिन्द्य, प्रक्लिन्द्य, प्रचिक्लिन्दिष्य, प्रचेक्लिन्द्य ;
क्लिन्दम् २, क्लिन्दित्वा २, } क्लिन्दम् २, क्लिन्दयित्वा २, } चिक्लिन्दिषम् २, चिक्लिन्दिषित्वा २, } चेक्लिन्दम् २, चेक्लिन्दित्वा २. }

## (285) "क्लिदि परिदेवने" (I-भ्वादिः-73. अक. सेट्. पर.)

'क्लिन्दते क्लिन्दतीत्येवम् इदितः परिदेवने ।
क्लिद्यतीत्यार्द्रभावेऽर्थे क्लिदेः श्यन्यूदितो भवेत् ॥' (श्लो. 102) इति देवः ।

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
2. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।

A. 'स्वमन्दिरात् स्पन्दितुमेव नाशकत् कंसात् परिक्लिन्दितसज्जनाद्भिया ॥'
धा. का. 1-3.

B. 'अक्लिन्दनीयान् क्षुधितात्मनो जनान् प्रशीकते यः करुणावलोकनैः ।'
धा. का. 1-11.

क्लिन्दकः-न्दिका, क्लिन्दकः-न्दिका, चिक्लिन्दिषकः-षिका, चेक्लिन्दकः-न्दिका, इत्यादीनि रूपाणि पूर्वलिखित (284) क्लिदिधातुवत् ज्ञेयानि। क्लिन्दन्-न्ती, क्लिन्दिष्यन्-न्ती-ती, क्लिन्दयन्-न्ती, क्लिन्दयिष्यन्-न्ती-ती, चिक्लिन्दिषन्-न्ती, चिक्लिन्दिषिष्यन्-न्ती-ती, इमानि रूपाणि शतरि बोध्यानि। अस्मिन्नेव गणे परिदेवनार्थे पुनः पाठः, आत्मगामिन्यपि क्रियाफले परस्मैपदार्थं इति ज्ञायते। अन्यथा स्वरितेत्त्वेन एकत्रैव पाठं कुर्यादाचार्यः।

(286) "क्लिदू आर्द्रीभावे" (IV-दिवादिः-1242. अक. सेट्. पर.

'क्लिन्दते क्लिन्दतीत्येवमिदितः परिदेवने।
क्लिद्यतीत्यार्द्रभावेऽर्थे क्लिदेः श्यन्यूदितो भवेत्॥' (श्लो. 102) इति देवः।

क्लेदकः-दिका, क्लेदकः-दिका, [1]चिक्लिदिषकः-चिक्लेदिषकः-षिका, [2]चिक्लित्सकः-त्सिका, चेक्लिदकः-दिका;

क्लेदिता-क्लेत्ता-त्री, क्लेदयिता-त्री, चिक्लिदिषिता-चिक्लेदिषिता-चिक्लित्सिता-त्री, चेक्लिदिता-त्री;

[3]क्लिद्यन्[A]-न्ती, क्लेदयन्-न्ती; चिक्लिदिषन्-चिक्लेदिषन्-चिक्लित्सन्-न्ती;)

क्लेदिष्यन्-क्लेत्स्यन्-न्ती-ती, क्लेदयिष्यन्-न्ती-ती, चिक्लिदिषिष्यन्-चिक्लेदिषिष्यन्-चिक्लित्सिष्यन्-ती-न्ती

—. क्लेदयमानः, क्लेदयिष्यमाणः, चेक्लिद्यमानः, चेक्लिदिष्यमाणः;

विक्लित्-विक्लिदौ-विक्लिदः; — —

[4]क्लिन्नम्-क्लिन्नः-क्लिन्नवान्, क्लेदितः-तम्, चिक्लिदिषितः-चिक्लेदिषितः-चिक्लित्सितः-चेक्लिदितः-तवान्;

---

1. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सनः कित्त्वविकल्पः। कित्त्वाभावे गुणः। कित्त्वपक्षे गुणाभावः।
2. ऊदित्त्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति इड्विकल्पः। इडभावपक्षे 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम्। एवं सन्नन्ते सर्वत्र रूपत्रयं बोध्यम्।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन्। श्यनो ङिद्वद्भावात् अङ्गस्य गुणाभावः।
4. ऊदित्त्वेन वैकल्पिकेट्त्वात् 'यस्य विभाषा' (7-2-15) इति निष्ठायां इण्णिषेधः। 'रदाभ्यां निष्ठातो नः—' (8-2-42) इति निष्ठानत्वम्।

A. नश्यांस्तुभ्य विभो जयेति ब्रुवते क्लिद्यन् प्रमेद्यद्भुजं
क्ष्विद्यत् कुङ्कुमसुह्यत्स्वेऽपि स विमृश्याक्षीयमाणां ददौ॥' धा. का. 2-67.
क्लिद्यन् आर्द्रीभवन्-इत्यर्थः।

[1]क्लिद:, क्लेद:, चिक्लिदिषु:-चिक्लेदिषु:-चिक्लित्सु:, चेक्लिद: ;
क्लेदितव्यम्-क्लेत्तव्यम्, क्लेदयितव्यम्, चिक्लिदिषितव्यम्-चिक्लेदिषितव्यम्-चिक्लित्सितव्यम्, चेक्लिदितव्यम् ;
क्लेदनीयम्, क्लेदनीयम्, चिक्लिदिषणीयम्-चिक्लेदिषणीयम्-चिक्लित्सनीयम्, चेक्लिदनीयम् ;
क्लेद्यम्, क्लेद्यम्, चिक्लिदिष्यम्-चिक्लेदिष्यम्-चिक्लित्स्यम्, चेक्लिद्यम् ;
ईषत्क्लेद:-दुष्क्लेद:-सुक्लेद: ; — — —
क्लिद्यमान:, क्लेद्यमान:, चिक्लिदिष्यमाण:-चिक्लेदिष्यमाण:-चिक्लित्स्यमान:, चेक्लिद्यमान: ;
क्लेद:, [2]चिक्लिद:, क्लेद:, चिक्लिदिष:-चिक्लेदिष:-चिक्लित्स:, चेक्लिद: ;
क्लेदितुम्-क्लेत्तुम्, क्लेदयितुम्, चिक्लिदिषितुम्-चिक्लेदिषितुम्-चिक्लित्सितुम्, चेक्लिदितुम् ;
क्लित्ति:, क्लेदना, चिक्लिदिषा-चिक्लेदिषा-चिक्लित्सा, चेक्लिदा ;
क्लेदनम्, क्लेदनम्, चिक्लिदिषणम्-चिक्लेदिषणम्-चिक्लित्सनम्, चेक्लिदनम् ;
[3]क्लिदित्वा-क्लेदित्वा-क्लित्त्वा, क्लेदयित्वा, चिक्लिदिषित्वा-चिक्लेदिषित्वा-चिक्लित्सित्वा; चेक्लिदित्वा,
विक्लिद्य, विक्लेद्य, विचिक्लिदिष्य-विचिक्लेदिष्य-विचिक्लित्स्य, विचेक्लिद्य ;
क्लेदम् २, क्लिदित्वा २-क्लेदित्वा २-क्लित्त्वा २, क्लेदम् २, क्लेदयित्वा २, चिक्लिदिषम् २-चिक्लिदिषित्वा २-चिक्लेदिषम् २-चिक्लित्सम् २, चिक्लेदिषित्वा २-चिक्लित्सित्वा २, चेक्लिदम् २ ; चेक्लिदित्वा २.

(287) "क्लिश उपतापे" (IV-दिवादि:-1161. अक. सेट्. आत्म.)
'व्यक्तोक्तौ क्लेशते क्लेशे:, क्लिश्नाति तु विबाधने।
दिवादेरुपतापेऽर्थे तङि स्यात् क्लिश्यते पदम्॥' (श्लो. 163-4) इति देवः।

1. 'इगुपधज्ञाप्रीकिर: क:—' (3-1-135) इति कर्तरि क: प्रत्यय: ।
2. 'घञर्थे कविधानम्—' (वा. 3-3-58) इति क: 'द्वित्वप्रकरणे के कृञादीनाम्—' (वा. 6-1-1.) इति द्वित्वम्। चिक्लिद:=रसभेद:।
3. ऊदित्त्वादिड्विकल्प: । क्त्वपक्षे न गुण: । क्त्वाभावपक्षे गुण: । इडभावपक्षे 'क्लित्त्वा' इति रूपम्।

क्लेशकः-शिका, क्लेशकः:-शिका, [1]चिक्लिशिषकः-चिक्लेशिषकः-षिका, चेक्लिशकः-शिका ;

क्लेशिता-त्री, क्लेशयिता-त्री, चिक्लिशिषिता-चिक्लेशिषिता-त्री, चेक्लिशिता-त्री ;

— क्लेशयन्-न्ती, क्लेशयिष्यन्-न्ती-र्ती ; — —

[2]क्लिश्यमानः, क्लेशयमानः, चिक्लिशिषमाणः-चिक्लेशिषमाणः, चेक्लिश्यमानः ;

क्लेशिष्यमाणः, क्लेशयिष्यमाणः, चिक्लिशिषिष्यमाणः-चिक्लेशिषिष्यमाणः, चेक्लिशिष्यमाणः ;

[3]क्लिट्-क्लिशौ-क्लिशः ; — — —

[4]क्लिशितः-[A]तम्-तवान्, क्लिष्टम्-ष्टः-ष्टवान्, क्लेशितः-तम, चिक्लिशिषितः-चिक्लेशिषितः, चेक्लिशितः-तवान् ;

क्लिशः, [5]क्लेशनः, [6]क्लेशकः, क्लेशः, चिक्लिशिषुः-चिक्लेशिषुः, चेक्लिशः ;

क्लेशितव्यम्, क्लेशयितव्यम्, चिक्लिशिषितव्यम्-चिक्लेशिषितव्यम्, चेक्लिशितव्यम् ;

क्लेशनीयम्, क्लेशनीयम्, चिक्लिशिषणीयम्-चिक्लेशिषणीयम्, चेक्लिशनीयम् ;

[B]क्लेश्यम्, क्लेश्यम्, चिक्लिशिष्यम् -चिक्लेशिष्यम्, चेक्लिश्यम् ;

ईषत्क्लेशः-दुष्क्लेशः-सुक्लेशः ; — — —

क्लिश्यमानः, क्लेश्यमानः, चिक्लिशिष्यमाणः-चिक्लेशिष्यमाणः, चेक्लिश्यमानः ;

[C]क्लेशः, क्लेशः, चिक्लिशिषः-चिक्लेशिषः, चेक्लिशः ;

क्लेशितुम्, क्लेशयितुम्, चिक्लिशिषितुम्-चिक्लेशिषितुम्, चेक्लिशितुम् ।

---

1. 'रलो व्युपधाद्धलादेस्संश्च' (1-2-26) इति सनः कित्त्वविकल्पाद्रूपद्वयम् ।
2. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् । श्यनो ङिद्वद्भावाद्गुणस्य गुणो न ।
3. 'व्रश्च भ्रस्ज—' (8-2-36) इत्यादिना षत्वे, जश्त्वे चर्त्वम् ।
4. 'क्लिशः क्त्वानिष्ठयोः' (7-2-50) इति इड्विकल्पः ।
5. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
6. 'निन्दहिंसक्लिशखाद—' (3-2-146) इत्यादिना वुञ् ताच्छीलिकः ।

A. 'मायामिस्सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।' भ. का. 9.38.
B. 'अक्लेश्यमसिनाऽन्यन्तं कबन्धवधमभ्ययुः ।' भ. का. 7-78.
C. 'देवौघस्य तपन् भुवं च पतिता वाग्वृत्तभूमाऽप्यसौ
वृत्तक्लेशलवैरकाश्यत समं संवाश्यमानैस्स्वकैः ॥' धा. का. 2-60.

क्लिष्टिः, क्लेशना, चिक्लिशिषा-चिक्लेशिषा, चेक्लिशा ;
[A]क्लिशित्वा[1]-क्लिष्ट्वा, क्लेशयित्वा, चिक्लिशिषित्वा-चिक्लेशिषित्वा, चेक्लिशित्वा ;
विक्लिश्य, विक्लेश्य, विचिक्लिशिष्य-विचिक्लेशिष्य, विचेक्लिश्य ;
क्लेशम् २, क्लिशित्वा २-क्लिष्ट्वा २, } क्लेशम् २, क्लेशयित्वा २, } चिक्लिशिषम् २- चिक्लेशिषम् २, चिक्लिशिषित्वा २- चिक्लेशिषित्वा २, } चेक्लिशम् २ ; चेक्लिशित्वा २.
[2]कीनाशः,

## (288) " क्लिशू विबाधने " (IX-क्र्यादिः-1522-अक. वेट्. पर.) [अ]

' व्यक्तोक्तौ क्लेशते क्लेशेः, क्लिश्नाति तु विबाधने।
दिवादेरुपतापेऽर्थे तङि स्यात् क्लिश्यते पदम्॥ '

(श्लो. 163-164) इति देवः ।

क्लेशः-शिका, क्लेशकः-शिका, [3]चिक्लिशिषकः-चिक्लेशिषकः-षिका, [4]चिक्लिक्षकः-क्षिका, चेक्लिशकः-शिका ;
क्लेशिता-त्री-क्लेष्टा-ष्ट्री, क्लेशयिता-त्री, चिक्लिशिषिता-चिक्लेशिषिता-त्री, चिक्लिक्षिता-त्री, चेक्लिशिता-त्री ;
[5]क्लिश्नन्[B]-ती, क्लेशयन्-न्ती, चिक्लिशिषन्-चिक्लेशिषन्-चिक्लिक्षन्-न्ती ;—

---

1. ' क्लिशः क्त्वानिष्ठयोः ' (7-2-50) इति वेट् । इट्पक्षे ' मृडमृद—' (1-2-7) इत्यादिना नित्यकित्त्वम् ।
2. ' क्लिशेरीच्चोपधायाः कन् लोपश्च लोनाम् ' (द. उ. 9. 1.) इति कन्प्रत्यये कीनाशः=कदर्यो जनः ।
3. ' स्वरतिसूतिसूयतिधूञूदितो वा ' (7-2-44) इतीड्विकल्पे, ' रलो व्युपधात्— (1-2-26) इति कित्त्वविकल्पः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
4. इडभावपक्षे ' व्रश्च —' (8-2-36) इत्यादिना षत्वे ' षढोः कः सि ' (8-2-41) इति कः ।
5. ' क्र्यादिभ्यः श्ना ' (3-1-81) इति श्ना । ' श्नाऽभ्यस्तयोः—' (6-4-112)' इत्याकारलोपः । ' शात् ' (8-4-44) इति श्चुत्वनिषेधः ।

A. ' अमृडित्वा सहस्राक्षं क्लिशित्वा कौशलैर्निजैः ।' भ. का. 7.96.
B. ' आधोरणानपि च दन्तवरेण तुभ्नन् क्लिश्नन् मतिं पलवुरादिकमश्नतां सः । ' धा. का. 3-11.
[अ] ' एवमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् । ' (कुमारसम्भवे 2-40) इत्यादिप्रयोगात् सकर्मकत्वमप्यस्य धातोरिति ज्ञायते ।

क्लेशिष्यन्-क्लेक्ष्यन्-न्ती-ती, क्लेशयिष्यन्-न्ती-ती, चिक्लिशिषिष्यन्-चिक्लेशिषिष्यन्-चिक्लिक्षिष्यन्-न्ती-ती ;—

—— क्लेशयमानः, क्लेशयिष्यमाणः, चेक्लिश्यमानः, चेक्लिशिष्यमाणः ;

[1]क्लिट्-क्लिशौ-क्लिशः, [2]क्लेट्-क्लेशौ-क्लेशः ; —— ——

[3]क्लिशितम्-तः-[A]तवान्, क्लिष्टम्-ष्टः-ष्टवान्, क्लेशितः-तम्, चिक्लिशिषितः-चिक्लेशिषितः-चिक्लिक्षितः-तवान्, चेक्लिशितः-तवान् ;

क्लिशः, [4]क्लेशकः[B], क्लेशः, चिक्लिशिषुः-चिक्लेशिषुः-चिक्लिक्षुः, चेक्लिशः ;

क्लेशितव्यम्-क्लेष्टव्यम्, क्लेशयितव्यम्, चिक्लिशिषितव्यम्-चिक्लेशिषितव्यम्-चिक्लिक्षितव्यम्, चेक्लिशितव्यम् ;

क्लेशनीयम्, क्लेशनीयम्, चिक्लिशिषणीयम्-चिक्लेशिषणीयम्-चिक्लिक्षणीयम्, चेक्लिशनीयम् ;

क्लेश्यम्, क्लेश्यम्, चिक्लिशिष्यम्-चिक्लेशिष्यम्-चिक्लिक्ष्यम्, चेक्लिश्यम् ;

ईषत्क्लेशः-दुष्क्लेशः-सुक्लेशः ; —— —— ——

क्लिश्यमानः, क्लेश्यमानः, चिक्लिशिष्यमाणः-चिक्लेशिष्यमाणः-चिक्लिक्ष्यमाणः, चेक्लिश्यमानः ;

क्लेशः, क्लेशः, चिक्लिशिषः-चिक्लेशिषः-चिक्लिक्षः, चेक्लिशः ;

क्लेशितुम्-क्लेष्टुम्, क्लेशयितुम्, चिक्लिशिषितुम्-चिक्लेशिषितुम्-चिक्लिक्षितुम्, चेक्लिशितुम् ;

क्लिष्टिः, क्लेशना, चिक्लिशिषा-चिक्लेशिषा-चिक्लिक्षा, चेक्लिशा ;

क्लेशनम्, क्लेशनम्, चिक्लिशिषणम्-चिक्लेशिषणम्-चिक्लिक्षणम्, चेक्लिशनम् ;

---

1. 'व्रश्च भ्रस्ज—' (8-2-36) इत्यादिना षत्वे जश्त्वचर्त्वयोरूपम् ।
2. 'अन्येभ्योऽपि—' (3-2-75) इत्यादिना विच् । गुणः ।
3. 'क्लिशः क्त्वानिष्ठयोः' (7-2-50) इति वा इट् । 'यस्य विभाषा' (7-2-15) इत्यस्य बाधकः ।
4. 'निन्दहिंसक्लिशखाद—' (3-2-146) इत्यादिना ताच्छील्ये वुञ् ।

A. 'उपप्लुतश्चिरं द्वन्द्वैरयोः क्लिशितवानहम् ॥' भ. का. 22-7.
B. 'निन्दको रजनिम्मन्यं दिवसं क्लेशको निशाम् ।' भ. का. 7-13.

[A]क्लिशित्वा[1]-क्लिष्ट्वा,[B] [2]अलंक्लिशित्वा[C], क्लेशयित्वा, चिक्लिशिषित्वा-चिक्लेशिषित्वा-चिक्लिक्षित्वा, चेक्लिशित्वा ;
परिक्लिश्य, परिक्लेश्य, परिचिक्लिशिष्य-परिचिक्लेशिष्य-परिचिक्लिक्ष्य, परिचेक्लिश्य ;
क्लेशम् २, } क्लेशम् २, } चिक्लिशिषम् २- चिक्लेशिषम् २-
क्लिशित्वा २, } क्लेशयित्वा २, } चिक्लिशिषित्वा२- चिक्लेशिषित्वा २-
क्लिष्ट्वा २,
चिक्लिक्षम् २, } चेक्लिशम् २ ; }
चिक्लिक्षित्वा २, } चेक्लिशित्वा २. }

## (289) "क्लीबृ अधाष्ट्र्ये" (I-भ्वादिः-381. अक. सेट्. आत्म.)

क्लीबकः-बिका, क्लीबकः-बिका, चिक्लीबिषकः-षिका, चेक्लीबकः-बिका ; क्लीबिता-त्री, क्लीबितः[D]-तवान्, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक-क्रीडति धातुवत् (275) ज्ञेयानि । [3]क्लीबनः, [4]क्लीबमानः, क्लीबिष्यमाणः, [5]चिक्लीबिषमाणः-चिक्लीबिषिष्यमाणः ; इति रूपाणि भवन्ति-इति विशेषः ।

## (290) "क्लुङ् गतौ" (I-भ्वादिः-958. सक. अनि. आत्म.)

### पाठान्तरोऽयं प्लुवतेः ।

क्लावकः-विका, क्लावकः-विका, [6]चुक्लूषकः-षिका, [7]चोक्लूयकः-यिका ;

---

1. 'क्लिशः क्त्वानिष्ठयोः' (7-2-50) इति वा इट् । 'मृडमृद—' (1-2-7) इत्यादिना नित्यं कित्त्वम् ।
2. 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (3-4-18) इति क्त्वा ।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।
4. आत्मनेपदित्वात् शानच् ।
5. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तादप्यात्मनेपदमेव ।
6. 'इको झल्' (1-2-9) इति सनः कित्वान्न गुणः । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः ।
7. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।

A. 'चिरं क्लिशित्वा मर्मावित् रामो विलुभितप्लवम् ।' भ. का. 5-52.
B. 'मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।' भ. का. 9-38.
C. 'अलं क्लिशित्वा गुरुमल्पकोऽयं विधिस्त्वदाज्ञैव गरीयसी नः' । अनर्घराघवे 2-57.
D. 'प्रलम्बसास्नाः ककरतिवषो वृषा अक्लीबिताः क्षीवतयाऽतिशीभराः ॥' धा. का. 1-49.

| | | | |
|---|---|---|---|
| क्लोता-त्री, | क्लावयिता-त्री, | चुक्लूषिता-त्री, | चोक्लूयिता-त्री ; |
| — | क्लावयन्-न्ती, क्लावयिष्यन्-न्ती-ती ; | — | — |
| क्लवमानः, | क्लावयमानः, | चुक्लूषमाणः, | चोक्लूयमानः ; |
| क्लोष्यमाणः, | क्लावयिष्यमाणः, | चुक्लूषिष्यमाणः, | चोक्लूयिष्यमाणः ; |
| [1]सङ्क्लुत्-सङ्क्लुतौ-सङ्क्लुतः ; | | — | — |
| क्लुतम्-तः-तवान्, | क्लावितः-तम्, | चुक्लूषितः, | चोक्लूयितः-तवान् ; |
| क्लवः, [2]क्लवनः, | क्लावः, | चुक्लूषुः, | [3]चोक्लुवः ; |
| क्लोतव्यम्, | क्लावयितव्यम्, | चुक्लूषितव्यम्, | चोक्लूयितव्यम् ; |
| क्लवनीयम्, | क्लावनीयम्, | चुक्लूषणीयम्, | चोक्लूयनीयम् ; |
| [4]क्लव्यम्, | [5]अवश्यक्लाव्यम्, क्लाव्यम्, | चुक्लूष्यम्, | चोक्लूय्यम् ; |
| ईषत्क्लवः,-दुष्क्लवः,-सुक्लवः ; | | — | — |
| [6]क्लूयमानः, | क्लाव्यमानः, | चुक्लूष्यमाणः, | चोक्लूय्यमानः ; |
| [7]क्लवः, | विक्लवः-[A]विक्लबः, क्लावः, | चुक्लूषः, | चोक्लूयः ; |
| क्लोतुम्, | क्लावयितुम्, | चुक्लूषितुम्, | चोक्लूयितुम् ; |
| क्लुतिः, | क्लावना, | चुक्लूषा, | चोक्लूया ; |
| क्लवनम्, | क्लावनम्, | चुक्लूषणम्, | चोक्लूयनम् ; |
| क्लुत्वा, | क्लावयित्वा, | चुक्लूषित्वा, | चोक्लूयित्वा ; |
| [8]सङ्क्लुत्य, | सङ्क्लाव्य, | प्रचुक्लूष्य, | सञ्चोक्लूय्य ; |
| क्लावम् २, क्लुत्वा २, | क्लावम् २, क्लावयित्वा २, | चुक्लूषम् २, चुक्लूषित्वा २, | चोक्लूयम् २ ; चोक्लूयित्वा २. |

---

1. क्विपि, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्।
2. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति युच्।
3. यङन्तादचि 'यङोऽचि च' (2-4-74) इति यङो लुकि, उवङ्।
4. 'अचो यत्' (3-1-97) इति यत्।
5. 'ओरावश्यके' (3-1-125) इति ण्यत्।
6. 'अकृत्सार्वधातुकयोः' (7-4-25) इति दीर्घः।
7. 'ऋदोरप्' (3-3-57) इत्यप् भावे।
8. 'ह्रस्वस्य पिति कृति तुक्' (6-1-71) इति तुक् ल्यपि।

A. वबयोरभेदात् 'विक्लब' इत्यपि अस्मादेव भवति—इति मैत्रेयः।

## (291) “क्लेवृ सेवने” (I-भ्वादिः-506. अक. सेट्. आत्म.)

ग्लेवतेः पाठान्तरोऽयम् ।

क्लेवकः-विका, क्लेवकः-विका, चिक्लेविषकः-षिका, चेक्लेवकः-विका ;
क्लेविता-त्री, क्लेवयिता-त्री, चेक्लेविषिता-त्री, चिक्लेविता-त्री ;
— क्लेवयन्-न्ती, क्लेवयिष्यन्-न्ती-ती ; — —
क्लेवमानः, क्लेवयमानः, चिक्लेविषमाणः, चेक्लेव्यमानः ;
क्लेविष्यमाणः, क्लेवयिष्यमाणः, चिक्लेविषिष्यमाणः, चेक्लेविष्यमाणः ;
[1]क्ल्यूः-क्ल्य्वौ-क्ल्य्वः ; — — —
क्लेवितम् - तः, क्लेवितः-तम्, चिक्लेविषितः, चेक्लेवितः-तवान् ;
क्लेवः, क्लेवनः[2], क्लेवः, चिक्लेविषुः, चेक्लेवः ;
क्लेवितव्यम्, क्लेवयितव्यम्, चिक्लेविषितव्यम्, चेक्लेवितव्यम् ;
क्लेवनीयम्, क्लेवनीयम्, चिक्लेविषणीयम्, चेक्लेवनीयम् ;
क्लेव्यम्, क्लेव्यम्, चिक्लेविष्यम्, चेक्लेव्यम् ;
ईषत्क्लेवः-दुष्क्लेवः-सुक्लेवः ; — —
क्लेव्यमानः, क्लेव्यमानः, चिक्लेविष्यमाणः, चेक्लेव्यमानः ;
क्लेवः, क्लेवः, चिक्लेविषः, चेक्लेवः ;
क्लेवितुम्, क्लेवयितुम्, चिक्लेविषितुम्, चेक्लेवितुम् ;
[3]क्लेवा, क्लेवना, चिक्लेविषा, चेक्लेवा ;
क्लेवनम्, क्लेवनम्, चिक्लेविषणम्, चेक्लेवनम् ;
क्लेवित्वा, क्लेवयित्वा, चिक्लेविषित्वा, चेक्लेवित्वा ;
विक्लेव्य, विक्लेव्य, प्रचिक्लेविष्य प्रचेक्लेव्य ;
क्लेवम् २, क्लेवित्वा २, } क्लेवम् २, क्लेवयित्वा २, } चिक्लेविषम् २, चिक्लेविषित्वा २, } चेक्लेवम् २ ; चेक्लेवित्वा २. }

---

1. ‘च्छ्वोः शूडनुनासिके च’ (6-4-19) इति क्विपि ऊठ् । अयादेशः । द्विवचनादिषु ‘ओः सुपि’ (6-4-83) इति यणादेशः ।
2. ‘अनुदात्तेतश्च हलादेः’ (3-2-149) इति ताच्छीलिको युच् ।
3. ‘गुरोश्च हलः’ (3-3-103) इति अप्रत्ययः ।

(292) "क्लेश अव्यक्तायां वाचि" (I-भ्वादिः-607. अक. सेट्. आत्म.)

'व्यक्तोक्तौ क्लेशते क्लेशः, क्लिश्नाति तु विबाधने ।
दिवादेरुपतापेऽर्थे तङि स्यात् क्लिश्यते पदम् ॥'
(श्लो. 163-164) इति देवः ।

'बाधने' इत्येके । 'उपतापे' इति च कविकल्पद्रुमे ।
'व्यक्तायां वाचि' इति देववचनादवगम्यते ।

क्लेशकः-शिका, क्लेशकः-शिका, शिक्लेशिषकः-षिका, चेक्लेशकः-शिका ;
क्लेशिता-त्री, क्लेशयिता-त्री, चिक्लेशिषिता-त्री, चेक्लेशिता-त्री ;
— क्लेशयन्-न्ती, क्लेशयिष्यन्-न्ती-ती ; — —
क्लेशमानः, क्लेशयमानः, चिक्लेशिषमाणः, चेक्लेश्यमानः ;
[A]क्लेशिष्यमाणः, क्लेशयिष्यमाणः, चिक्लेशिषिष्यमाणः, चेक्लेशिष्यमाणः ;
विक्लेट्-विक्लेशौ-विक्लेशः ; — — —
क्लेशितम्-तः, क्लेशितः-तम्, चिक्लेशिषितः, चेक्लेशितः-तवान् ;
क्लेशः, [1]क्लेशनः, क्लेशः, चिक्लेशिषुः, चेक्लेशः ;
क्लेशितव्यम्, क्लेशयितव्यम् चिक्लेशिषितव्यम्, चेक्लेशितव्यम् ;
क्लेशनीयम्, क्लेशनीयम्, चिक्लेशिषणीयम्, चेक्लेशनीयम् ;
क्लेश्यम्, क्लेश्यम्, चिक्लेशिष्यम्, चेक्लेश्यम् ;
ईषत्क्लेशः-दुष्क्लेशः-सुक्लेशः ; — —
क्लेश्यमानः, क्लेश्यमानः, चिक्लेशिष्यमाणः, चेक्लेश्यमानः ;
क्लेशः, क्लेशः, चिक्लेशिषः, चेक्लेशः ;
क्लेशितुम् क्लेशयितुम्, चिक्लेशिषितुम्, चेक्लेशितुम् ;
[2]क्लेशा, क्लेशना, चिक्लेशिषा, चेक्लेशा ;
क्लेशनम्, क्लेशनम्, चिक्लेशिषणम्, चेक्लेशनम् ;
क्लेशित्वा, क्लेशयित्वा चिक्लेशिषित्वा, चेक्लेशित्वा ;

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छील्ये युच् ।
2. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः ।

A. 'सङ्क्लेशितस्वकथदक्षणदीक्षितं तं प्रेक्ष्यैष जन्मफलमीषितवान् महात्मा ॥'
धा. का. 1-77.

सङ्क्लेशिता = सम्यक् कथिता स्वकथा यैः तेषां दक्षणे = वर्धनायां जीवने वा दीक्षितं सम्प्राप्तवतम्—इति (धातुकाव्ये 1-77) व्याख्यातम् ।

विक्लेश्य, विक्लेश्य, प्रचिक्लेशिष्य, प्रचेक्लेश्य ;
क्लेशम् २, } क्लेशम् २, } चिक्लेशिषम् २, } चेक्लेशम् २ ; }
क्लेशित्वा २, } क्लेशयित्वा २, } चिक्लेशिषित्वा २, } चेक्लेशित्वा २. }

(293) "क्रण शब्दार्थः" (I-भ्वादिः-450. अक. सेट्. पर.)

क्राणकः-णिका, क्राणकः-णिका, चिक्रणिषकः-षिका, [1]चङ्क्रणकः-णिका ;
क्रणिता-त्री, क्राणयिता-त्री, चिक्रणिषिता-त्री, चङ्क्रणिता-त्री ;
[A]क्रणन्-न्ती, क्राणयन्-न्ती, चिक्रणिषन्-न्ती ; —
क्रणिष्यन्-न्ती-ती, क्राणयिष्यन्-न्ती-ती, चिक्रणिषिष्यन्-न्ती-ती ; —
[2]व्यतिक्रणमानः, क्राणयमानः, — चङ्क्रण्यमानः ;
व्यतिक्रणिष्यमाणः, क्राणयिष्यमाणः, — चङ्क्रणिष्यमाणः ;
[3]निक्राण्-निक्राणौ-निक्राणः ; — —
[B]क्रणितम्-तः, क्राणितः, चिक्रणिषितः, चङ्क्रणितः-तवान् ;
क्रणः, [4]क्रणनः, क्राणः, चिक्रणिषुः, चङ्क्रणः ;
क्रणितव्यम्, क्राणयितव्यम्, चिक्रणिषितव्यम्, चङ्क्रणितव्यम् ;
क्रणनीयम्, क्राणनीयम्, चिक्रणिषणीयम्, चङ्क्रणनीयम् ;
क्राण्यम्, क्राण्यम्, चिक्रणिष्यम्, चङ्क्रण्यम् ;
ईषत्क्रणः-दुष्क्रणः-सुक्रणः ; — —
क्रण्यमानः, क्राण्यमानः, चिक्रणिष्यमाणः, चङ्क्रण्यमानः ;
[5]क्रणः, क्राणः, [6]निक्राणः,[C] निक्रणः, प्रक्राणः, प्रक्रणः, क्राणः, चिक्रणिषः, चङ्क्रणः ;

---

1. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुक् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
2. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
3. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घः ।
4. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छील्ये युच् ।
5. 'क्रणो वीणायां च' (3-3-65) इत्यत्र शुद्धादपि धातोः अप् । पक्षे घञ् ।
6. 'क्रणो वीणायां च' (3-3-65) इति नौ उपसर्गे वा अप् । पक्षे घञ् । सूत्रे वीणाग्रहणसामर्थ्यात् 'प्रक्राणः प्रक्रणः' इत्यपि भवति ।

A. 'दुस्सहा हा! परिक्षिप्ताः क्रणद्भिरलिगाथकैः ॥' भ. का. 6-84 (85).
B. 'विभूषणानां क्रणितं च षट्पदो गुरुर्यथा नृत्यविधौ समादधे ॥' भ. का. 11-37.
'वनात् कुमाराः क्रणिताग्रयवेणवो व्रणद्विषाणव्रणिताश्रमाययुः ॥' धा. का. 1-58.
C. 'अथ क्रमादनिक्राणा नराः क्षीणपणा इव ।' भ. का. 7-58.

| | | | |
|---|---|---|---|
| कणितुम्, | काणयितुम्, | चिकणिषितुम्, | चङ्कणितुम्; |
| [1]कणितिः, | काणना, | चिकणिषा, | चङ्कणा; |
| कणनम्, | काणनम्, | चिकणिषणम्, | चङ्कणनम्; |
| कणित्वा, | काणयित्वा, | चिकणिषित्वा, | चङ्कणित्वा; |
| प्रकण्य, | प्रकाण्य, | सञ्चिकणिष्य, | सञ्चङ्कण्य; |
| काणम् २, कणित्वा २, | काणम् २, काणयित्वा २, | चिकणिषम् २, चिकणिषित्वा २, | चङ्कणम् २; चङ्कणित्वा २. |

## (294) " क्थे निष्पाके " (I-भ्वादिः-846. सक. सेट्. पर.) ज्वलादिः।

| | | | |
|---|---|---|---|
| क्राथकः-थिका, | [2]क्राथकः-थिका, | चिक्थिषकः-षिका, | चाक्थकः-थिका; |
| क्थिता-त्री, | क्राथयिता-त्री, | चिक्थिषिता-त्री, | चाक्थिता-त्री; |
| क्थन्-न्ती,[A] | क्राथयन्-न्ती, | चिक्थिषन्-न्ती; | — |
| क्थिष्यन्-न्ती-ती, | क्राथयिष्यन्-न्ती-ती, | चिक्थिषिष्यन्-न्ती-ती; | — |
| [3]व्यतिक्थमानः, | क्राथयमानः, | — | चाक्थ्यमानः; |
| व्यतिक्थिष्यमाणः, | क्राथयिष्यमाणः, | — | चाक्थिष्यमाणः; |
| क्त्[4]-क्थ्-क्थौ-क्थः; | — | — | — |
| क्थितम्-तः, | क्राथितः, | चिक्थिषितः, | चाक्थितः-तवान्; |
| [5]क्थः-क्राथः, | क्राथः, | चिक्थिषुः, | चाक्थः; |
| क्थितव्यम्, | क्राथयितव्यम्, | चिक्थिषितव्यम्, | चाक्थितव्यम्; |
| क्थनीयम्, | क्राथनीयम्, | चिक्थिषणीयम्, | चाक्थनीयम्; |
| क्राथ्यम्, | क्राथ्यम्, | चिक्थिष्यम्, | चाक्थ्यम्; |
| ईषत्क्थः-दुष्क्थः-सुक्थः; | | — | — |
| क्थ्यमानः, | क्राथ्यमानः, | चिक्थिष्यमाणः, | चाक्थ्यमानः; |

---

1. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति उपसंख्यानात् इट्।
2. घातोरस्य घटादिषु पाठ इति माधवीयधातुवृत्तावुक्तम्। तदानीं 'क्थकः—' इत्यादि रूपम्। मित्त्वाद्ध्रस्वः। अन्ये तु घटादौ धातुममुं न पेठुः।
3. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
4. 'वाऽवसाने' (8-4-56) इति चर्त्वं विकल्पेन।
5. 'ज्वलितिकसन्तेभ्यो णः' (3-1-140) इति कर्तरि णो वा। पक्षे अच्।

A. 'अहोलसत्त्वा रविरश्मिजालेऽप्यविक्थन्ती तटपाथिपाथाः।' धा. का. 223

| | | | |
|---|---|---|---|
| क्राथः, | क्राथः, | चिक्रथिषः, | चाक्रथः ; |
| क्रथितुम्, | क्राथयितुम्, | चिक्रथिषितुम्, | चाक्रथितुम् ; |
| [1]क्रत्तिः, | क्राथना, | चिक्रथिषा, | चाक्रथा ; |
| क्वथनम्, | क्वाथनम्, | चिक्वथिषणम्, | चाक्वथनम् ; |
| क्वथित्वा, | क्वाथयित्वा, | चिक्वथिषित्वा, | चाक्वथित्वा ; |
| प्रक्वथ्य, | प्रक्वाथ्य, | प्रचिक्वथिष्य, | प्रचाक्वथ्य ; |
| क्वाथम् २, क्वथित्वा २, | क्वाथम् २, क्वाथयित्वा २, | चिक्वथिषम् २, चिक्वथिषित्वा २, | चाक्वथम् २ ; चाक्वथित्वा २. |

## (295) "क्षजि गतिदानयोः" (I-भ्वादिः-769. सक. सेट्. आत्म.)

### घटादिः षिच्च ।

| | | | |
|---|---|---|---|
| क्षञ्जकः-ञ्जिका, | क्षञ्जकः-ञ्जिका, | चिक्षञ्जिषकः-षिका, | चाक्षञ्जकः-ञ्जिका ; |
| क्षञ्जिता-त्री, | क्षञ्जयिता-त्री, | चिक्षञ्जिषिता-त्री, | चाक्षञ्जिता-त्री ; |
| — | क्षञ्जयन्-न्ती, | क्षञ्जयिष्यन्-न्ती-ती; | — |
| क्षञ्जमानः, | क्षञ्जयमानः, | चिक्षञ्जिषमाणः, | चाक्षञ्ज्यमानः ; |
| क्षञ्जिष्यमाणः, | क्षञ्जयिष्यमाणः, | चिक्षञ्जिषिष्यमाणः, | चाक्षञ्जिष्यमाणः ; |
| [2]क्षन्-क्षञ्जौ-क्षञ्जः ; | — | — | — |
| [A]क्षञ्जितम्-तः, | क्षञ्जितः, | चिक्षञ्जिषितः, | चाक्षञ्जितः-तवान् ; |
| क्षञ्जः, [3]क्षञ्जनः, | क्षञ्जः, | चिक्षञ्जिषुः, | चाक्षञ्जः ; |
| क्षञ्जितव्यम्, | क्षञ्जयितव्यम्, | चिक्षञ्जिषितव्यम्, | चाक्षञ्जितव्यम् ; |
| क्षञ्जनीयम्, | क्षञ्जनीयम्, | चिक्षञ्जिषणीयम्, | चाक्षञ्जनीयम् ; |
| क्षञ्ज्यम्, | क्षञ्ज्यम्, | चिक्षञ्जिष्यम्, | चाक्षञ्ज्यम् ; |
| ईषत्क्षञ्जः-दुःक्षञ्जः-सुक्षञ्जः ; | | — | — |

---

1. 'तितुत्र—' (7-2-9) इत्यादिना इण्णिषेधः । चर्त्वम् । 'तितुत्रेष्वग्रहादीनां—' (वा. 7-2-9) इत्यङ्गीकृत्य केचित् 'क्वथितिः' इति रूपमाहुः ।
2. 'संयोगान्तस्य लोपः' (8-2-23) इति जकारस्य लोपः ।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छील्ये युच् ।

A. 'गोपीघटाः प्रव्यथितास्तदानीं पृथूपतापप्रसमानचिन्ताः ।
मृदुस्वभावाः स्वदिताः स्मरास्त्रैः प्रक्षञ्जिते प्राणसमे विषेदुः ॥'
धा. का. 2-4.

क्षञ्ज्यमानः, क्षञ्ज्यमानः, चिक्षञ्जिष्यमाणः, चाक्षञ्ज्यमानः ;

क्षञ्जितुम्, क्षञ्जयितुम्, चिक्षञ्जिषितुम्, चाक्षञ्जितुम् ;

[1]क्षञ्जा, क्षञ्जना, चिक्षञ्जिषा, चाक्षञ्जा ;

क्षञ्जनम्, क्षञ्जनम्, चिक्षञ्जिषणम्, चाक्षञ्जनम् ;

क्षञ्जित्वा, क्षञ्जयित्वा, चिक्षञ्जिषित्वा, चाक्षञ्जित्वा ;

प्रक्षञ्ज्य, प्रक्षञ्ज्य, प्रचिक्षञ्जिष्य, प्रचाक्षञ्ज्य ;

क्षञ्जम् २, क्षञ्जित्वा २, } [2]क्षञ्जम् २, क्षाञ्जम् २, क्षञ्जयित्वा २, } चिक्षञ्जिषम् २, चिक्षञ्जिषित्वा २, } चाक्षञ्जम् २ ; चाक्षञ्जित्वा २. }

(296) "क्षणु हिंसायाम्" (VIII-तनादिः-1465. सक. सेट्. उभ.)

क्षाणकः-णिका, क्षाणकः-णिका, चिक्षणिषकः-षिका, [3]चङ्क्षणकः-णिका ;

क्षणिता-त्री, क्षाणयिता-त्री, चिक्षणिषिता-त्री, चङ्क्षणिता-त्री ;

[4]क्षण्वन्-[A]ती, क्षाणयन्-न्ती, चिक्षणिषन्-न्ती ; —

क्षणिष्यन्-न्ती-ती, क्षाणयिष्यन्-न्ती-ती, चिक्षणिषिष्यन्-न्ती-ती ; —

क्षण्वानः, क्षाणयमानः, चिक्षणिषमाणः, चङ्क्षण्यमानः ;

क्षणिष्यमाणः, क्षाणयिष्यमाणः, चिक्षणिषिष्यमाणः, चङ्क्षणिष्यमाणः ;

[5]क्षत् -क्षतौ-क्षतः ; — — —

[6]क्षतम्-तः, क्षाणितः, चिक्षणिषितः, चङ्क्षणितः-तवान् ;

क्षणः, क्षाणः, चिक्षणिषुः, चङ्क्षणः ;

---

1. धातोः षित्त्वात् 'षिद्भिदादिभ्योऽङ्' (3-3-104) इत्यङ् ।
2. घटादिषु पाठसामर्थ्यात् अनुपधात्वेऽपि 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-1-93) इति दीर्घविकल्पः ।
3. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुक् ।
4. 'तनादिकृञ्भ्य उः' (3-1-79) इति उः विकरणप्रत्ययः । यण् ।
5. "'गमः क्वौ' (6-4-40) इत्यत्र 'गमादीनामिति वक्तव्यम्' इति उपसंख्यानात् अनुनासिकलोपः तुक् ।" इति 'क्षतात् किल त्रायत' इति (रघुवंशे 2-53) श्लोकव्याख्यायां मल्लिनाथः ।
6. 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (6-4-37) इत्यनुनासिकलोपः ।

A. 'तन्वन् स मन्त्रभुवि सातरसः स्वबन्धून् अक्षण्वतां क्षितिकरः मुदमर्णुवानः ।'
धा. का. 3-4.

क्षणितव्यम्, क्षाणयितव्यम्, चिक्षणिषितव्यम्, चङ्क्षणितव्यम्;
क्षणनीयम्, क्षाणनीयम्, चिक्षणिषणीयम्, चङ्क्षणनीयम्;
क्षाण्यम्, क्षाण्यम्, चिक्षणिष्यम्, चङ्क्षण्यम्;
ईषत्क्षणः-दुःक्षणः-सुक्षणः; —, —
क्षण्यमानः, क्षाण्यमानः, चिक्षणिष्यमाणः, चङ्क्षण्यमानः;
क्षाणः, क्षाणः, चिक्षणिषः, चङ्क्षणः;
क्षणितुम्, क्षाणयितुम्, चिक्षणिषितुम्, चङ्क्षणितुम्;
क्षतिः, [1]क्षन्तिः, क्षाणना, चिक्षणिषा, चङ्क्षणा;
क्षणनम्, क्षाणनम्, चिक्षणिषणम्, चङ्क्षणनम्;
[2]क्षणित्वा-क्षत्वा, क्षाणयित्वा, चिक्षणिषित्वा, चङ्क्षणित्वा;
[3]प्रक्षत्य, प्रक्षाण्य, प्रचिक्षणिष्य, प्रचङ्क्षण्य;
क्षाणम् २, क्षणित्वा-क्षत्वा २, } क्षाणम् २, क्षाणयित्वा २, } चिक्षणिषम् २, चिक्षणिषित्वा २, } चङ्क्षणम् २; चङ्क्षणित्वा २. }

## (297) "क्षपि क्षान्त्याम्" (X-चुरादिः-1621. अक. सेट्. उभ.) [अ]

### इदित्करणात् णिचो वैकल्पिकत्वम्।

'क्षम्पेः क्षम्पयति क्षान्त्याम्, प्रेरणे क्षपयेदिति।' (श्लो. 136) इति देवः।

क्षम्पकः-म्पिका, चिक्षम्पयिषकः-षिका, [4]क्षम्पकः-म्पिका, चिक्षम्पिषकः-षिका, [5]चाक्षम्पकः-म्पिका;

---

1. 'न क्तिचि दीर्घश्च' (6-4-39) इति दीर्घोऽनुनासिकलोपश्च निषिध्यते। क्तिजन्तोऽयम्। उपदेशे नान्तोऽयं धातुः। लक्षणवशाण्णकार इति धातुवृत्त्यादौ व्यक्तम्। अनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' (8-4-58) इति परसवर्णः।
2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इडभावपक्षेऽनुनासिकलोपः।
3. 'वा ल्यपि' (6-4-38) इत्यत्र व्यवस्थितविभाषाश्रयणात् नकारस्य नित्यमनुनासिकलोपः। अनन्तरं तुक्।
4. इदित्करणसामर्थ्याण्णिचो वैकल्पिकत्वम्। तेन, णिजभावपक्षे शुद्धात्, सन्नन्तात् यङन्ताच्च रूपाणि लिखितानि।
5. यङन्तात् 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः।

[अ] 'क्षप प्रेरणे' इति धातुः चुरादावदन्तेऽस्तीति देवश्लोकादनुमीयते। सिद्धान्तकौमुद्यां तु न दृश्यते।

क्षम्पयिता-त्री, चिक्षम्पयिषिता-त्री, क्षम्पिता-त्री, चिक्षम्पिषिता-त्री, चाक्षम्पिता-त्री ;

क्षम्पयन्-न्ती, चिक्षम्पयिषन्-न्ती, [1]क्षम्पन्[A]-न्ती, चिक्षम्पिषन्-न्ती ;

क्षम्पयिष्यन्-न्ती-ती, चिक्षम्पयिषिष्यन्-न्ती-ती, क्षम्पिष्यन्-न्ती-ती, चिक्षम्पिषिष्यन्-न्ती-ती ;

क्षम्पयमाणः, चिक्षम्पयिषमाणः, — चाक्षम्प्यमाणः ;

क्षम्पयिष्यमाणः, चिक्षम्पयिषिष्यमाणः, — चाक्षम्पिष्यमाणः ;

[2]क्षन्-क्षम्पौ-क्षम्पः ; — — —

क्षम्पितम्-तः, चिक्षम्पयिषितः, क्षम्पितम्-तः, चिक्षम्पिषितः, चाक्षम्पितः-तवान् ;

क्षम्पः, चिक्षम्पयिषुः, क्षम्पः, चिक्षम्पिषुः, चाक्षम्पः ;

क्षम्पयितव्यम्, चिक्षम्पयिषितव्यम्, क्षम्पितव्यम्, चिक्षम्पिषितव्यम्, चाक्षम्पितव्यम् ;

क्षम्पणीयम्, चिक्षम्पयिषणीयम्, क्षम्पणीयम्, चिक्षम्पिषणीयम्, चाक्षम्पणीयम् ;

क्षम्प्यम्, चिक्षम्पयिष्यम्, क्षम्प्यम्, चिक्षम्पिष्यम्, चाक्षम्प्यम् ;

ईषत्क्षम्पः-दुःक्षम्पः-सुक्षम्पः ; — —

क्षम्प्यमाणः, चिक्षम्पयिष्यमाणः, क्षम्प्यमाणः, चिक्षम्पिष्यमाणः, चाक्षम्प्यमाणः ;

क्षम्पः, चिक्षम्पयिषः, क्षम्पः, चिक्षम्पिषः, चाक्षम्पः ;

क्षम्पयितुम्, चिक्षम्पयिषितुम्, क्षम्पितुम्, चिक्षम्पिषितुम्, चाक्षम्पितुम् ;

क्षम्पणा, चिक्षम्पयिषा, क्षम्पा, चिक्षम्पिषा, चाक्षम्पा ;

क्षम्पणम्, चिक्षम्पयिषणम्, क्षम्पणम्, चिक्षम्पिषणम्, चाक्षम्पणम् ;

क्षम्पयित्वा, चिक्षम्पयिषित्वा, क्षम्पित्वा, चिक्षम्पिषित्वा, चाक्षम्पित्वा ;

प्रक्षम्प्य, प्रचिक्षम्पयिष्य, प्रक्षम्प्य, प्रचिक्षम्पिष्य, प्रचाक्षम्प्य ;

---

1. णिजभावपक्षे, 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदमेव ।
2. णिलोपे 'संयोगान्तस्य—' (8-2-23) इति पकारलोपे च रूपम् । न च स्थानिवद्भावः शङ्क्यः ; पूर्वत्रासिद्धे तन्निषेधात् ।

A. 'क्षम्पद्भियामभिमतः स च कंप्रपीडाप्रक्षञ्जितस्वजनचिन्तनजातरोषः ।
आश्वर्तितो रणभुवं सबलोऽत्र रेजे विश्वभ्रिताभ्रकुहरे सति तूर्यनादे ॥' धा. का. 3-24.

क्षम्पम् २, } चिक्षम्पयिषम् २, } क्षम्पम् २, } चिक्षम्पिषम् २, }
क्षम्पयित्वा २, } चिक्षम्पयिषित्वा २, } क्षम्पित्वा २, } चिक्षम्पिषित्वा २, }

चाक्षम्पम् २ ; }
चाक्षम्पित्वा २. }

## (298) "क्षमू सहने" (IV-दिवादि:-1206. सक. वेट्. पर.)

'अषितः क्षाम्यति, क्षान्तिः क्षमूषः क्षमते क्षमा'। (श्लो-146) इति देवः।

**अषित्। शमादिः। मित्।**

[1]क्षमकः-मिका, [2]क्षमकः-मिका, [3]चिक्षमिषकः-षिका, चिक्षंसकः-सिका,
चङ्क्षमकः-मिका ;[4]

[5]क्षमिता-क्षन्ता-त्री, क्षमयिता-त्री, चिक्षमिषिता-चिक्षंसिता-त्री,
चङ्क्षमिता-त्री ;

[6]क्षाम्यन्-न्ती, क्षमयन्-न्ती, चिक्षमिषन्-चिक्षंसन्-न्ती ; —

क्षमिष्यन्-क्षंस्यन्-न्ती-ती, क्षमयिष्यन्-न्ती-ती, चिक्षमिषिष्यन्-न्ती-ती,
चिक्षंसिष्यन्-न्ती-ती ;

[7]व्यतिक्षाम्यमाणः, क्षमयमाणः, — चङ्क्षम्यमाणः ;

व्यतिक्षमिष्यमाणः- व्यतिक्षंस्यमानः, क्षमयिष्यमाणः, चङ्क्षमिष्यमाणः ;

[8]विक्षान्-विक्षामौ-विक्षामः ; — —

---

1. 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिनिषेधः।
2. 'अत उपधायाः' (7-2-116) इति णौ वृद्धिः। तस्य 'मितां—' (6-4-92) इति ह्रस्वः। 'जनीजॄष्—' (गणसूत्रं भ्वादौ) इत्यनेन अमन्तत्वेन मित्त्वम्।
3. 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति वा इट्।
4. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुक्।
5. ऊदित्त्वात् इड्विकल्पः। एवं तव्यदादिषु ज्ञेयम्।
6. 'दिवादिभ्यः—' (3-1-69) इति श्यन्। 'शमामष्टानां दीर्घः श्यनि' (7-3-74) इति दीर्घः।
7. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इत्यात्मनेपदे शानच्। 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (8-4-2) इति णत्वम्।
8. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घः। 'मो नो धातोः' (8-2-64) इति नकारः। 'पदान्तस्य' (8-4-37) इति णत्वनिषेधः।

[1]क्षान्तम्-न्तः-क्षान्तवान्, क्षमितः, चिक्षमिषितः-चिक्षंसितः,
चङ्क्षमितः-तवान् ;

क्षमः, [2]क्षमी, [3]द्वन्द्वक्षमा, क्षमः, चिक्षमिषुः-चिक्षंसुः, चङ्क्षमः ;

क्षमितव्यम्-क्षन्तव्यम्, क्षमयितव्यम्, चिक्षमिषितव्यम्-चिक्षंसितव्यम्,
चङ्क्षमितव्यम् ;

क्षमणीयम्, क्षमणीयम्, चिक्षमिषणीयम्-चिक्षंसनीयम्, चङ्क्षमणीयम् ;

[4]क्षम्यम्[A], क्षम्यम्, चिक्षमिष्यम्-चिक्षंस्यम्, चङ्क्षम्यम् ;

ईषत्क्षमः-दुःक्षमः-सुक्षमः ; — — —

क्षम्यमाणः, क्षम्यमाणः, चिक्षमिष्यमाणः-चिक्षंस्यमानः, चङ्क्षम्यमाणः ;

[B]क्षमः, क्षमः, चिक्षमिषः-चिक्षंसः, चङ्क्षमः ;

क्षमितुम्-क्षन्तुम्, क्षमयितुम्, चिक्षमिषितुम्-चिक्षंसितुम्, चङ्क्षमितुम् ;

[5]क्षान्तिः, क्षमणा, चिक्षमिषा-चिक्षंसा, . चङ्क्षमा ;

क्षमणम्, क्षमणम्, चिक्षमिषणम्-चिक्षंसनम्, चङ्क्षमणम् ;

क्षमित्वा-क्षान्त्वा, क्षमयित्वा, चिक्षमिषित्वा-चिक्षंसित्वा, चङ्क्षमित्वा ;

प्रक्षम्य, [6]प्रक्षमय्य, प्रचिक्षमिष्य-प्रचिक्षंस्य, प्रचङ्क्षम्य ;

क्षमम् २, क्षमित्वा-क्षान्त्वा २, } [7]क्षमम्-क्षामम् २, क्षमयित्वा २, } चिक्षमिषम् २-चिक्षंसम् २, चिक्षमिषित्वा-२, चिक्षंसित्वा २, } चङ्क्षमम् २ ; चङ्क्षमित्वा २. }

---

1. ऊदित्त्वेन वैकल्पिकेट्त्वात् 'यस्य विभाषा' (7-2-15) इति निष्ठाया इण्णिषेधः। दीर्घः।
2. 'शमित्यष्टाभ्यो घिनुण्' (3-2-141) इति ताच्छीलिको घिनुण्।
3. 'ईक्षिक्षमिभ्यां च' (वा. 3-2-1) इति कर्मण्युपपदे णः। स्त्रियां टाप्।
'स्तुतिशीला हरिकामा फलभक्षा कानने व्रताचारा।
तदनुग्रहप्रतीक्षा वसति द्वन्द्वक्षमा मुनिश्रेणी॥' इति प्र. सर्वस्वे।
4. 'पोरदुपधात्' (3-1-98) इति यत्।
5. 'तितुत्र—' (7-2-9) इत्यादिना इण्णिषेधः। दीर्घः।
6. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
7. ण्यन्ताण्णमुलि 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-1-93) इति दीर्घो वा।

A. '·अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः॥' भ. का. 9-26.

B. 'यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च।' कुमारसंभवे 1-17.

(299) "क्षमूष् सहने" (I-भ्वादिः-442. सक. सेट्. आत्म.)
'अषितः क्षाम्यति क्षान्तिः, क्षमूषः क्षमते क्षमा।' (श्लो. 146) इति देवः।
क्षमकः-मिका, क्षमकः-मिका, चिक्षमिषकः-षिका, चिक्षंसकः-सिका, चङ्क्षमकः-मिका;

इत्यादीनि सर्वाण्यपि रूपाणि पूर्वलिखितक्षमूषधातुवत् (298) ज्ञेयानि। षित्त्वादस्य धातोः 'षिद्भिदादिभ्यः-' (3-3-104) इत्यङ् स्त्रियाम्-[A]क्षमा। अस्यात्मनेपदित्वात् [1]क्षममाणः, क्षमिष्यमाणः, क्षंस्यमानः, क्षमयमाणः, चिक्षमिषमाणः-चिक्षंसमाणः, चिक्षमिषिष्यमाणः, चिक्षंसिष्यमाणः, चङ्क्षम्यमाणः, चङ्क्षमिष्यमाणः इत्यादीनि रूपाणि शानचीति, विशेषः। 'क्षन्तिः' इति क्तिचि, 'न क्तिचि दीर्घश्च' (6-4-39) इति दीर्घनिषेधात्। अमन्तत्वेन ण्यन्ते मित्त्वम्। तेन क्षमं २-क्षामम् २, इति रूपद्वयम्। 'चिण्णमुलोः—' इति (6-3-93) दीर्घविकल्पः।

(300) "क्षर संचलने" (I-भ्वादिः-851. अक. सेट्. पर.) ज्वलादिः।

'सञ्चये' इति च एके।

क्षारकः-रिका, क्षारकः-रिका, चिक्षरिषकः-षिका, [2]चाक्षरकः-रिका;
क्षरिता-त्री, क्षारयिता-त्री, चिक्षरिषिता-त्री, चाक्षरिता-त्री;
क्षरन्-न्ती, क्षारयन्-न्ती, चिक्षरिषन्-न्ती; —
क्षरिष्यन्-न्ती-ती, क्षारयिष्यन्-न्ती-ती, चिक्षरिषिष्यन्-न्ती-ती; —
—क्षारयमाणः, क्षारयिष्यमाणः, चाक्षर्यमाणः, चाक्षरिष्यमाणः;
विक्षः-विक्षरौ-विक्षरः; — —
क्षरितम्-तः, क्षारितः, चिक्षरिषितः, चाक्षरितः-तवान्;

---

1. भौवादिकत्वाद्धातोः 'कर्तरि शप्' (3-1-68) इति शप्।

2. 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः।

A. 'ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।' रघुवंशे—1-22.
'पणाढ्यरूपाः पनिताकृतीन् ययुः भामिन्य एवाक्षमया स्वकामुकान्॥'
धा. का. 1-57.

[A]क्षरः, [1]क्षारः-क्षारी,[2] क्षारः [3]क्षरणः, [4]अक्षरम्, चिक्षरिषुः, चाक्षरः ;

| | | | |
|---|---|---|---|
| क्षरितव्यम्, | क्षारयितव्यम्, | चिक्षरिषितव्यम्, | चाक्षरितव्यम् ; |
| क्षरणीयम्, | क्षारणीयम्, | चिक्षरिषणीयम्, | चाक्षरणीयम् ; |
| क्षार्यम्, | क्षार्यम्, | चिक्षरिष्यम्, | चाक्षर्यम् ; |
| ईषत्क्षरः-दुःक्षरः-सुक्षरः ; | | — | — |
| क्षर्यमाणः, | क्षार्यमाणः, | चिक्षरिष्यमाणः, | चाक्षर्यमाणः ; |
| [5]क्षारः, | क्षारः, | चिक्षरिषः, | चाक्षरः ; |
| क्षरितुम्, | क्षारयितुम्, | चिक्षरिषितुम्, | चाक्षरितुम् ; |
| क्षर्तिः, | क्षारणा, | चिक्षरिषा, | चाक्षरा ; |
| क्षरणम्, | क्षारणम्, | चिक्षरिषणम्, | चाक्षरणम् ; |
| क्षरित्वा, | क्षारयित्वा, | चिक्षरिषित्वा, | चाक्षरित्वा ; |
| विक्षर्य, | विक्षार्य, | सञ्चिक्षरिष्य, | सञ्चाक्षर्य ; |
| क्षारम् २, क्षरित्वा २, | क्षारम् २, क्षारयित्वा २, | चिक्षरिषम् २, चिक्षरिषित्वा २, | चाक्षरम् २ ; चाक्षरित्वा २. |

## (301) "क्षल शौचकर्मणि" (X-चुरादिः-1597. सक. सेट्. उभ.) [अ]

| | |
|---|---|
| क्षालकः-लिका, | चिक्षालयिषकः-षिका ;[6] |
| क्षालयिता-त्री, | चिक्षालयिषिता-त्री ; |
| क्षालयन्-न्ती, | चिक्षालयिषन्-न्ती ; |
| क्षालयिष्यन् न्ती-ती, | चिक्षालयिषिष्यन्-न्ती-ती ; |
| क्षालयमानः, | चिक्षालयिषमाणः ; |

---

1. 'ज्वलितिकसन्तेभ्यो णः' (3-1-140) इति कर्तरि णो वा। पक्षे पचाद्यच् (3-1-134)।
2. 'णेऽप्यणकृतानि भवन्ति क्वचित्' (परिभाषा) इति ङीप्। इति क्षीरतरङ्गिणी।
3. 'चलनशब्दार्थादकर्मकात्' (3-2-148) इति युच् ताच्छीलिकः।
4. न क्षरतीत्यक्षरम्। पचाद्यजन्तोऽयम्।
5. 'हलश्च' (3-3-121) इति संज्ञायां घञ्।
6. ण्यन्तस्य धातोरनेकाच्त्वात् 'धातोरेकाचो हलादेः—' (3-1-22) इति यङ् न।

A. 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥' इति भगवद्गीता (15-16)।

[अ] 'क्षल सञ्चलने—सञ्चये च'—इति क्षीरस्वामी भ्वादावपि पठति। अन्ये तु क्षरतेर्भौवादिकस्य पाठभेदः क्षलधातुः इति वदन्ति।

| | |
|---|---|
| क्षालयिष्यमाणः, | चिक्षालयिषिष्यमाणः ; |
| प्रक्षाल्-प्रक्षालौ-प्रक्षालः ; | — |
| [A]क्षालितम्-तः-तवान् , | चिक्षालयिषितः-तवान् ; |
| क्षालः, | चिक्षालयिषुः ; |
| क्षालयितव्यम् , | चिक्षालयिषितव्यम् ; |
| [1]क्षालनीयम् , | चिक्षालयिषणीयम् ; |
| क्षाल्यम् , | चिक्षालयिष्यम् ; |
| ईषत्क्षालः-दुःक्षालः-सुक्षालः ; | — |
| क्षाल्यमानः, | चिक्षालयिष्यमाणः ; |
| क्षालः, | चिक्षालयिषः ; |
| क्षालयितुम् , | चिक्षालयिषितुम् ; |
| [2]क्षालना, | चिक्षालयिषा ; |
| [B]प्रक्षालनम् , | चिक्षालयिषणम् ; |
| क्षालयित्वा, | चिक्षालयिषित्वा ; |
| प्रक्षाल्य, | प्रचिक्षालयिष्य ; |
| क्षालम् २, क्षालयित्वा २, | चिक्षालयिषम् २ ; चिक्षालयिषित्वा २. |

## (302) " क्षि क्षये " (I-भ्वादिः-236. अक. अनि. पर.)

' क्षये क्षयति, हिंसायां क्षिणातीति षितो भवेत् ॥
निवासगत्योः क्षियति, क्षिणोत्यावगुणे क्षिणोः ।' (श्लो. 12-13) इति देवः ।
' औ=उविकरणे अगुणे = ' संज्ञापूर्वको विधिरनित्यः ' (परिभाषा—95) इति गुणाभावे च सति, ' क्षणु हिंसायाम , क्षिणु च ' इति मैत्रेयरक्षिता-युक्तस्य धातोः क्षिणोतीति भवति ।' इति पुरुषकारे कृष्णलीलाशुकमुनिः ।

---

1. 'णेरनिटि ' (6-4-51) इति णिलोपः ।
2. ' ण्यासश्रन्थो युच् ' (3-3-107) इति युच् । तस्य अनादेशः । स्त्रियां टाप् ।

A. ' दुर्दान्तचक्र पशुपचुक्कनमप्यरौत्सीत् प्रक्षालितक्षितितलातुलवर्षरोधी ।
सन्दोलयन्नधिकपोलितमद्रिराजं सञ्चोलितं सुबहुमूलितशाखिबृन्दैः ॥ '
धा. का. 3-21.

B. 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।' इति स्मृतिः ।

[1]क्षायकः-यिका, [2]क्षायकः-यिका, [3]चिक्षीषकः-षिका, [4]चेक्षीयकः-यिका ;
[5]क्षेता-त्री, क्षाययिता-त्री, चिक्षीषिता-त्री, चेक्षीयिता-त्री ;
[6]क्षयन्-न्ती, क्षाययन्-न्ती, चिक्षीषन्-न्ती ; —
क्षेष्यन्-न्ती-ती, क्षाययिष्यन्-न्ती-ती, चिक्षीषिष्यन्-न्ती-ती ; —
— क्षाययमाणः, क्षाययिष्यमाणः, — चेक्षीयमाणः, चेक्षीयिष्यमाणः ;
[7]प्रक्षित्-प्रक्षितौ-प्रक्षितः, [8]महीक्षित् ; — —
[9]क्षितम्-क्षितः-क्षितवान्, [10]क्षीणः-[A]क्षीणवान्, [11]प्रक्षीणः-आक्षीणः ;
परिक्षीणः, [12]क्षितायुः-क्षीणायुः [वा भव], क्षीणः क्षितो वा [तपस्वी],
क्षायितम्-तः, चिक्षीषितः, चेक्षीयितः-तवान् ;

---

1. 'अचो ञ्णिति' (7-2-115) इतीकारस्य वृद्धौ, आयादेशः।
2. ण्यन्ताण्वुलि णिनिमित्तकवृद्धौ सत्यां, 'णेरनिटि' (6-4-51) इति णिलोपे आयादेशे च रूपम्। एवं ण्यन्ते सर्वत्र ज्ञेयम्।
3. 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। 'इको झल्' (1-2-9) इति सनः कित्त्वम्। तेन गुणो न। एवं सन्नन्ते सर्वत्र बोध्यम्।
4. यङन्तात्, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः। 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणः।
5. अस्य धातोरनुदात्तत्वादिडागमो न भवति। एवं स्यादिप्रत्ययेष्वपि बोध्यम्।
6. 'कर्तरि शप्' (3-1-68) इति शप्प्रत्यये गुणायादेशौ भवतः।
7. क्विपि, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्।
8. **क्षीरस्वामी** भ्वादावेवान्यत्र '**क्षि ऐश्वर्ये**' इति पठति। तन्मते मह्यां क्षयति=ईष्टे इति **महीक्षित्**=राजा इति शब्दनिष्पत्तिर्ज्ञेया।
9. 'निष्ठायामण्यदर्थे' (6-4-60) इत्यत्र 'अण्यदर्थे' इत्युक्तत्वात् भावकर्मवाचिनि निष्ठाप्रत्यये दीर्घो न भवति।
10. कर्तरि निष्ठायाम्, 'निष्ठायामण्यदर्थे' (6-4-60) इति दीर्घे, 'क्षियो दीर्घात्' (8-2-46) इति निष्ठानत्वे, 'अट्कुप्वाङ्नुम्—' (8-4-2) इति णत्वे च रूपम्।
11. 'आदिकर्मणि क्तः कर्तरि च' (3-4-71) इति कर्तरि क्तः।
12. 'वाऽऽक्रोशदैन्ययोः' (6-4-61) इति दीर्घविकल्पः। दीर्घपक्षे निष्ठानत्वम्। दीर्घाभावे निष्ठानत्वाभावः।

A. 'विस्फूर्जदक्षीणघनाघनोपमक्षीजा लजन्तस्त्रिदशानलाञ्जितान्।
लाजादिहोतृष्वपि लज्जनप्रदा यस्मिन् विनेशुर्जजनेषु दानवाः॥' धा. का. 1-32.

[A]क्षयः, [1]क्षयी, [2]क्षयिष्णुः, क्षायः, चिक्षीषुः, [3]चेक्षियः ;

| | | | |
|---|---|---|---|
| क्षेतव्यम्, | क्षाययितव्यम्, | चिक्षीषितव्यम्, | चेक्षीयितव्यम् ; |
| क्षयणीयम्, | क्षायणीयम्, | चिक्षीषणीयम्, | चेक्षीयणीयम् ; |
| [4]क्षय्यम्-क्षेयम्, | क्षाय्यम्, | चिक्षीष्यम्, | चेक्षीय्यम् ; |
| ईषत्क्षयः-दुःक्षयः-सुक्षयः ; | — | — | — |
| [5]क्षीयमाणः, | क्षाय्यमाणः, | चिक्षीष्यमाणः, | चेक्षीय्यमाणः ; |
| क्षयः, | क्षायः, | चिक्षीषः, | चेक्षीयः ; |
| क्षेतुम्, | क्षाययितुम्, | चिक्षीषितुम्, | चेक्षीयितुम् ; |
| [6]क्षिया, | क्षायणा, | चिक्षीषा, | चेक्षीया ; |
| क्षयणम्, | क्षायणम्, | चिक्षीषणम्, | चेक्षीयणम् ; |
| क्षित्वा, | क्षाययित्वा, | चिक्षीषित्वा, | चेक्षीयित्वा ; |
| [7]प्रक्षीय, | प्रक्षाय्य, | प्रचिक्षीष्य, | प्रचेक्षीय्य ; |
| क्षायम् २, क्षित्वा २, | क्षायम् २, क्षाययित्वा २, | चिक्षीषम् २, चिक्षीषित्वा २, | चेक्षीयम् ; चेक्षीयित्वा. |

## (303) " क्षि हिंसायाम् " (V-स्वादिः-1276. सक. अनि. पर.) छान्दसः ।

'क्षये क्षयति, हिंसायां क्षिणातीति षितो भवेत् ॥
निवासगत्योः क्षियति, क्षिणोत्यावगुणे क्षिणोः ।'

(श्लो. 12-13) इति देवः ।

---

1. 'जिदृक्षिविश्रीण्—' (3-2-157) इत्यादिना तच्छीलादिषु कर्तृषु इनिः ।
2. 'भुवश्च' (3-2-138) इत्यत्र, अनुक्तसमुच्चयार्थकचकारेणास्यापि इष्णुच् ताच्छीलिकः ।
3. यङन्तात् पचाद्यचि (3-1-134), 'यङोऽचि च' (2-4-74) इति लुकि, इकारस्य संयोगपूर्वकत्वात् 'अचि श्नुधातु—' (6-4-77) इत्यनेन इयङ् ।
4. 'क्षय्यजय्यौ शक्यार्थे' (6-1-81) इत्यनेन यति अयादेशो निपात्यते । शक्यार्थादन्यत्र यति, गुणे क्षेयम् इत्येव । क्षेयम्=पापम् ।
5. यकि, 'अकृत्सार्वधातुकयोः' (7-4-25) इति दीर्घः ।
6. भिदादिपाठात् 'षिद्भिदादिभ्यः—' (3-3-104) इत्यङ् । इयङादेशः ।
7. 'क्षियः' (6-4-59) इति ल्यपि दीर्घः ।

A. 'भयसंहृष्टरोमाणः ततस्तेऽपचितद्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनाऽनेषत क्षयम् ॥' भ. का. 9-22.

'चिरिणोति रिणोत्येवं क्षिणोति जिरिणोति च ।
दाश्नोति च हृणोत्याहुः पदानि छान्दसानि षट् ॥'

(श्लो. 1-77 आख्यातचन्द्रिका) इति भट्टमल्लः ।

'अयं धातुः भाषायामपि प्रयोगार्हः । अत एव, 'न तद्यशः क्षत्रभृतां क्षिणोति ।' (रघुवंशे), 'इमां हृदि व्यायतपातमक्षिणोत् ।' (रघुवंशे), '—पञ्चबाणः क्षिणोति ।' (शाकुन्तले) इत्यादिप्रयोगाः सङ्गच्छन्ते ।' इति मैत्रेयरक्षितादयः । एतेषां मते तनादिषु 'क्षिणु' इति पाठः नास्तीति गम्यते । अस्य स्वादौ पाठात् [A]क्षिण्वन्[1]-ती, इति शतरि रूपमिति विशेषः । अन्यानि सर्वाणि रूपाणि भौवादिकक्षि (302) धातुवत् बोध्यानि । क्षीरस्वामी तु 'ऋक्षि' इति, अजादिमिदितं च धातुममुं पठति । तन्मते ऋक्ष्णुवन्-ती, इत्यादीनि रूपाण्यूह्यानि । केचित्तु 'ऋक्ष' इत्यनिदितं पठन्ति । तेषां मते, ऋक्ष्णुवन्-ती, इत्यादीनि रूपाण्यूह्यानि ।

(304) "क्षि निवासगत्योः" (VI-तुदादिः-1047. सक. अनि. पर.)

'क्षये क्षयति, हिंसायां क्षिणातीति षितो भवेत् ॥
निवासगत्योः क्षियति, क्षिणोत्यावणुणे क्षिणोः ।' (श्लो. 12-13) इति देवः ।

क्षायकः-यिका, क्षायकः-यिका, चिक्षीषकः-षिका, चेक्षीयकः-यिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकक्षि (302) धातुवत् ज्ञेयानि ।

---

1. 'स्वादिभ्यः—' (3-1-73) इति श्नुः विकरणप्रत्ययः । 'हुश्नुवोः सार्वधातुके' (6-4-87) इति यण् । णत्वम् ।

A. 'तामातिकथ पदे पदेन चिबुके चातिग्नुबन् पाणिना
चक्रे सध्नुवतां वधे दधृगसाऋज्वीं मनोज्ञाकृतिम् ।
किं चादभ्नुवतीमिमां मम गृहानेहीति याच्ञापरा-
मेष्यामीत्यमुचत् समृद्धकरुणः क्षिण्वन् कटाक्षैर्धृतिम् ॥' धा. का. 2-70.

[1]क्षियन्-न्ती-ती, [2]क्षेत्रम्, [3]क्षितिः,[A] [B]उत्क्षीणः, इत्यादीनि रूपाण्यस्य धातोः भवन्तीति विशेषः।

## (305) "क्षिणु हिंसायाम्" (VIII-तनादिः-1466. सक. सेट्. उभ.)

क्षेणकः-णिका, क्षेणकः-णिका, [4]चिक्षेणिषकः-चिक्षिणिषकः-षिका, चेक्षिणकः-णिका;
क्षेणिता-त्री; क्षेणयिता-त्री, चिक्षेणिषिता-चिक्षिणिषिता-त्री, चेक्षिणिता-त्री;
[5]क्षेण्वन्-ती, क्षेणयन्-न्ती, चिक्षेणिषन्-चिक्षिणिषन्-न्ती; —
क्षेणिष्यन्-न्ती-ती, क्षेणयिष्यन्-न्ती-ती, चिक्षेणिषिष्यन्-चिक्षिणिषिष्यन्-न्ती-ती;
क्षेण्वानः, क्षेणयमानः, चिक्षेणिषमाणः-चिक्षिणिषमाणः, चेक्षिण्यमानः;
क्षेणिष्यमाणः, क्षेणयिष्यमाणः, चिक्षेणिषिष्यमाणः-चिक्षिणिषिष्यमाणः, चेक्षिणिष्यमाणः;
[6]प्रक्षीण्-प्रक्षीणौ-प्रक्षीणः; — — —

---

1. 'तुदादिभ्यः—' (3-1-77) इति शः। शस्य ङिद्वद्भावादङ्गस्य गुणो न। 'अचि श्नुधातु—' (6-4-77) इतीयङ्। स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुमो वैकल्पिकत्वाद्रूपद्वयम्।
2. 'कृत्यल्युटो बहुलम्' (3-3-113) इति बाहुलकात् अधिकरणे ष्ट्रन्प्रत्ययः। क्षेत्रम्=निवासस्थानम्।
3. अधिकरणे स्त्रियां क्तिन्। क्षियन्ति अस्यां जनाः इति क्षितिः=भूमिः।
4. 'रलो व्युपधाद्धलादेस्संश्च' (1-2-26) इति सनः कित्त्वविकल्पात् पाक्षिको गुणः।
5. 'तनादिकृञ्भ्य उः' (3-1-79) इति विकरणप्रत्यय उकारः। गुणः। केचित्तु 'संज्ञापूर्वको विधिरनित्यः' (परिभाषा-95) इत्याश्रित्य गुणरहितं 'क्षिण्वन्' इति रूपमाहुः।
6. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति उपधायाः दीर्घः।

A. 'क्षितितटशयनान्तात् उत्थितं दानपङ्कप्लुतबहुलशरीरं शाययत्येष भूयः।' शिशुपालवधे 11-7.

B. 'व्यापारेऽत्र तदाऽमरानपि रियन् आशाः पियन् नाधित-
कौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद् गरम्।
येनानादरवाम् धृतोऽपि स चलन् पृच्छन् किमित्युत्सृजन्
धैर्यं मग्नमनाश्च हृदुजि चिरं भुग्नाननस्तस्थिवान्॥' धा. का. 2.83.

[1]क्षितम्-तः, क्षेणितः, चिक्षेणिषितः-चिक्षिणिषितः, चेक्षिणितः-तवान् ;
[2]क्षिणः, क्षेणः, चिक्षेणिषुः-चिक्षिणिषुः, चेक्षिणः ;
क्षेणितव्यम्, क्षेणयितव्यम्, चिक्षेणिषितव्यम्-चिक्षिणिषितव्यम्, चेक्षिणितव्यम् ;
क्षेणनीयम्, [3]क्षेणनीयम्, चिक्षेणिषणीयम्-चिक्षिणिषणीम्, चेक्षिणनीयम् ;
क्षेण्यम्, क्षेण्यम्, चिक्षेणिष्यम्-चिक्षिणिष्यम्, चेक्षिण्यम् ;
ईषत्क्षेणः-दुःक्षेणः-सुक्षेणः ; — —
क्षिण्यमानः, क्षेण्यमानः, चिक्षेणिष्यमाणः-चिक्षिणिष्यमाणः, चेक्षिण्यमानः ;
क्षेणः, क्षेणः, चिक्षेणिषः-चिक्षिणिषः, चेक्षिणः ;
क्षेणितुम्, क्षेणयितुम्, चिक्षेणिषितुम्-चिक्षिणिषितुम्, चेक्षिणितुम् ;
[4]क्षितिः[A], क्षेणना, चिक्षेणिषा-चिक्षिणिषा, चेक्षिणा ;
क्षेणनम्, क्षेणनम्, चिक्षेणिषणम्-चिक्षिणिषणम्, चेक्षिणनम् ;
[5]क्षेणित्वा-क्षिणित्वा-क्षित्वा, क्षेणयित्वा, चिक्षेणिषित्वा-चिक्षिणिषित्वा, चेक्षिणित्वा ;
[6]प्रक्षित्य, प्रक्षेण्य, प्रचिक्षेणिष्य-प्रचिक्षिणिष्य, प्रचेक्षिण्य ;
क्षेणम् २, क्षेणित्वा २, क्षिणित्वा २, क्षित्वा २, } क्षेणम् २, क्षेणयित्वा २, } चिक्षेणिषम् २-चिक्षिणिषम् २, चिक्षेणिषित्वा २-चिक्षिणिषित्वा २, } चेक्षिणम् २ ; चेक्षिणित्वा २. }

---

1. 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (6-4-37) इति अनुनासिकलोपः । 'यस्य विभाषा' (7-2-15) इति निष्ठायाः इण्णं ।
2. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः प्रत्ययः ।
3. 'णेरनिटि' (6-4-51) इति ण्यन्तादनीयरि णेर्लोपः ।
4. 'तितुत्र—' (7-2-9) इत्यादिना इण्णिषेधः । 'अनुदात्तोप—' (6-4-37) इति णकारस्य लोपः ।
5. 'उदितो वा' (7-3-56) इति क्त्वायामिड्विकल्पः । 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः । इडभावपक्षे अनुनासिकलोपः । तेन रूपत्रयम् ।
6. 'वा ल्यपि' (6-4-38) इत्यत्र व्यवस्थितविभाषाश्रयणात् तनोत्यादीनां ल्यपि नित्यमनुनासिकलोपः । तुक् भवति ।

A. 'तन्वन् स मञ्चभुवि सातरसः स्वबन्धून् अक्षण्वतां क्षितिकरो मुदमर्णवानः । कंसः तृणीकृतरिपुः घृणिमान् वतार्त्तिं मन्वान एकमथ मञ्चमलञ्चकार ॥' धा.का. 3.4.

## (306) " क्षिप प्रेरणे " (IV-दिवादिः-1121. सक. अनि. पर.) [अ]

प्रेरणम्=निरसनम्—इति धातुकाव्यव्याख्याता ।

' क्षिप्यति प्रेरणे, शे तु क्षिपति क्षिपते पदे ॥ ' (श्लो. 130) इति देवः ।

क्षेपकः-पिका, क्षेपकः-पिका, [1]चिक्षिप्सकः-प्सिका, चेक्षिपकः-पिका ;
क्षेप्ता-त्री, क्षेपयिता-त्री, चिक्षिप्सिता-त्री, चेक्षिपिता-त्री ;
[2]क्षिप्यन्-न्ती, क्षेपयन्-न्ती, चिक्षिप्सन्-न्ती ; —
क्षेप्स्यन्-न्ती-ती, क्षेपयिष्यन्-न्ती-ती, चिक्षिप्सिष्यन्-न्ती-ती ; —
[3]व्यतिक्षिप्यमाणः, क्षेपयमाणः, — चेक्षिप्यमाणः ;
— क्षेपयिष्यमाणः, — चेक्षिपिष्यमाणः ;
प्रक्षिप्-प्रक्षिपौ-प्रक्षिपः ; — —
क्षिप्तम्-तः[A]-तवान्, क्षेपितः, चिक्षिप्सितः, चेक्षिपितः-तवान् ;
क्षिपः[4], क्षिपका[5], [6]परिक्षेपी, [7]क्षिप्णुः[B], [8]परिक्षेपकः, क्षेपः,
चिक्षिप्सुः, चेक्षिपः ;

---

1. ' हलन्ताच्च ' (1-2-10) इति सनः कित्त्वान्न गुणः । एवं सन्नन्ते सर्वत्र बोध्यम् ।
2. ' दिवादिभ्यः श्यन् ' (3-1-69) इति श्यन् । श्यनो ङिद्वद्भावादङ्गस्य गुणो न । स्त्रियाम् ' शप्श्यनोर्नित्यम् ' (7-1-81) इति नित्यं नुम् ।
3. ' कर्तरि कर्मव्यतीहारे ' (1-3-14) इति शानच् ।
4. ' इगुपधज्ञाप्रीकिरः कः ' (3-1-135) इति कर्तरि कः प्रत्ययः ।
5. क्षिपशब्दात् अज्ञाताद्यर्थे तद्धितप्रत्यये कनि सति, ' क्षिपकादीनां च ' (वा. 7-3-44) इति इत्त्वनिषेधे ' क्षिपका ' इति भवति ।
6. ' सम्पृचानु—' (3-2-142) इत्यादिना घिनुण् ताच्छीलिकः ।
7. ' त्रसिगृधिधृषिक्षिपेः क्नुः ' (3-2-140) इति क्नुः ताच्छीलिकः । केचित्तु ' क्षुभ्नादिषु च ' (8-4-39) इति णत्वं नेच्छन्ति ।
8. ' निन्दहिंसक्लिशखाद—' (3-2-146) इत्यादिना वुञ् ताच्छीलिकः ।

A. ' वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः ।
प्रावारिषुरिव क्षोणीं क्षिप्ता वृक्षाः समन्ततः ॥ ' भ. का. 9-25.

B. ' विद्यामथैनं विजयां जयां च रक्षोगणं क्षिप्नुमविक्षितात्मा ।
अध्यापिपद्गाधिसुतो यथावन्निघातयिष्यन् युधि यातुधानाम् ॥' भ. का. 2-21.

[अ] अस्य धातोर्दिवादौ नव्यः पाठ इति क्षीरस्वामिमतम् । तन्न समीचीनम् । ' क्षिप्यति प्रेरणे, शे तु क्षिपति क्षिपते पदे । ' इति दैवे (130) उक्तम् । प्रयोगश्च ' द्वाविमावम्भसि क्षिप्य गले बद्ध्वा महाशिलाम् । धनिनं चाप्रदातारं दरिद्रं चाप्रवासिनम् ॥ ' (महाभारते उद्योगपर्वणि 33-60) इति प्रयोगात् । तत्र क्षिप्य इति लोण्मध्यमपुरुषैकवचनम्—इति पुरुषकारे श्रीकृष्णलीलाशुकः ।

क्षेप्तव्यम् , क्षेपयितव्यम् , चिक्षिप्सितव्यम् , चेक्षिपितव्यम् ;
क्षेपणीयम् , क्षेपणीयम् , चिक्षिप्सनीयम् , चेक्षिपणीयम् ;
क्षेप्यम् , क्षेप्यम् , चिक्षिप्स्यम् , चेक्षिप्यम् ;
ईषत्क्षेपः-दुःक्षेपः-सुक्षेपः ; —— ——
क्षिप्यमाणः, क्षेप्यमाणः, चिक्षिप्स्यमानः, चेक्षिप्यमाणः ;
क्षेपः-आक्षेपः-विक्षेपः-सुक्षेपः-सङ्क्षेपः-प्रक्षेपः, परिक्षेपः, क्षेपः, चिक्षिप्सः, चेक्षेपः;
क्षेप्तुम् , क्षेपयितुम् , चिक्षिप्सितुम् , चेक्षिपितुम् ;
[1]क्षिपा , क्षेपणा, चिक्षिप्सा, चेक्षिपा ;
क्षेपणम् , क्षेपणम् , चिक्षिप्सनम् , चेक्षिपणम् ;
क्षिप्त्वा, क्षेपयित्वा, चिक्षिप्सित्वा , चेक्षिपित्वा ;
[A]सङ्क्षिप्य, परिक्षिप्य, परिक्षेप्य, परिचिक्षिप्स्य, परिचेक्षिप्य ;
[B]भ्रूविक्षेपम् [2][कथयति]
क्षेपम् २, क्षिप्त्वा २, } क्षेपम् २, क्षेपयित्वा २, } चिक्षिप्सम् २, चिक्षिप्सित्वा २, } चेक्षिपम् २. चेक्षिपित्वा २, }

## (307) " क्षिप प्रेरणे " (VI-तुदादिः-1285. सक. अनि. उभ.)

' क्षिप्यति प्रेरणे, शे तु क्षिपति क्षिपते पदे ।' (श्लो. 130) इति देवः ।

क्षेपकः-पिका, क्षेपकः-पिका, चिक्षिप्सकः-प्सिका, चेक्षिपकः-पिका,
क्षेप्ता-त्री ; [3]क्षिपन् [C]-न्ती-ती, [D]अभिक्षिपन् [4]प्रतिक्षिपन्-अतिक्षिपन्-न्ती-ती ;

---

1. ' भिदादि–' (3-3-104) पाठात् अङ् । 'अजाद्यतः–' (4-1-4) इति स्त्रियां टाप् ।
2. ' स्वाङ्गेऽध्रुवे ' (3-4-54) इति द्वितीयान्ते उपपदे णमुल्प्रत्ययो भवति ।
3. ' तुदादिभ्यः शः ' (3-1-77) इति शः विकरणप्रत्ययः । तस्य ङिद्वद्भावात् अङ्गस्य न गुणः । स्त्रियाम्, ' आच्छीनद्योर्नुम्' (7-1-80) इति नुमो वैकल्पिकत्वम् । तेन रूपद्वयम् ।
4. ' अभिप्रत्यतिभ्यः क्षिपः ' (1-3-80) इत्यनेन कर्तृगामिनि क्रियाफलेऽपि परस्मैपदमेव । न शानच् । तेन शतरि रूपम् ।

A. ' अनेकशो निर्जितराजकस्त्वं पितॄनताप्सीः नृपरक्ततोयैः ।
संक्षिप्य संरम्भमसद्विपक्षं काऽऽस्थाऽर्भकेऽस्मिंस्तव राम रामे ॥' भ. का. 2-52.

B. ' अधीयन्नात्मविद्विद्यां धारयन् मस्करिव्रतम् ।
वदन् बह्वङ्गुलिस्फोटं भ्रूविक्षेपं विलोकयन् ॥ ' भ. का. 5-63.

C. ' तुदन् कुचरिताञ् शुभे प्रणुदमान इष्टं दिशन्
प्रमृष्टपललान् क्षिपन् अरिमतिं कृषन् माधवः । ' धा. का. 2-72.

D. ' सुखाहरैर्वर्महरैः सगर्भ्यैः प्रलम्बमुख्यैश्च सहाश्रवैस्तैः ।
अभिक्षिपन् अक्षमकोऽचैनाहान् दृष्ट्वा स्वसुर्दीप्तिमखिन्त कंसः ॥' वा. वि. 2-59.

क्षिपमाणः, इत्यादीनि रूपाण्यस्येति विशेषः। अन्यानि रूपाणि सर्वाण्यपि दैवादिकक्षिप्यतिवत् (306) ज्ञेयानि।

(308) " क्षिप प्रेरणे " (X-चुरादिः-1941. सक. सेट्. उभ) अदन्तः। [अ]

अस्य धातोरनेकाच्त्वात् यङ् न।

| | |
|---|---|
| [1]क्षिपकः-पिका, | चिक्षिपयिषकः-षिका ; |
| क्षिपयिता-त्री, | चिक्षिपयिषिता-त्री ; |
| क्षिपयन्-न्ती, | चिक्षिपयिषन्-न्ती ; |
| क्षिपयिष्यन्-न्ती-ती, | चिक्षिपयिषिष्यन्-न्ती-ती ; |
| क्षिपयमाणः, | चिक्षिपयिषमाणः ; |
| क्षिपयिष्यमाणः, | चिक्षिपयिषिष्यमाणः ; |
| क्षिप्-क्षिपौ-क्षिपः ; | — |
| [2]क्षिपितम्-तः-तवान्, | चिक्षिपयिषितः-तवान् ; |
| क्षिपः, | चिक्षिपयिषुः ; |
| क्षिपयितव्यम्, | चिक्षिपयिषितव्यम् ; |
| क्षिपणीयम्, | चिक्षिपयिषणीयम् ; |
| क्षिप्यम्, | चिक्षिपयिष्यम् ; |
| ईषत्क्षिपः-दुःक्षिपः-सुक्षिपः ; | — |
| क्षिप्यमाणः, | चिक्षिपयिष्यमाणः ; |
| क्षिपः, | चिक्षिपयिषः ; |
| क्षिपयितुम्, | चिक्षिपयिषितुम् ; |
| क्षिपणा, | चिक्षिपयिषा ; |
| क्षिपणम्, | चिक्षिपयिषणम् ; |
| क्षिपयित्वा, | चिक्षिपयिषित्वा ; |
| [3]परिक्षिपय्य, | परिचिक्षिपयिष्य ; |

---

1. धातोरदन्तत्वेन अल्लोपस्य स्थानिवत्त्वात् उपधागुणो न।
2. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।

[अ.] यद्यपि अयं धातुः क्षीरस्वामिनः, धातुवृत्तिकारस्य च नैं सम्मत इति प्रतिभाति ; उभयोः ग्रन्थयोः अपाठात्। तथापि, बालमनोरमाकारसम्मत-पाठमनुसृत्य अस्य रूपाणि प्रदर्शितानि।

क्षिपम् २, क्षिपयित्वा २, } चिक्षिपयिषम् २; चिक्षिपयिषित्वा २. }

(309) "क्षीज अव्यक्ते शब्दे" (I-भ्वादिः-237. अक. सेट्. पर.)

क्षीजकः-जिका, क्षीजकः-जिका, चिक्षीजिषकः-षिका, चेक्षीजकः-जिका;
क्षीजिता-त्री, क्षीजयिता-त्री, चिक्षीजिषिता-त्री, चेक्षीजिता-त्री;
क्षीजन्-न्ती, क्षीजयन्-न्ती, चिक्षीजिषन्-न्ती; —
क्षीजिष्यन्-न्ती-ती, क्षीजयिष्यन्-न्ती-ती, चिक्षीजिषिष्यन्-न्ती-ती; —
— क्षीजयमाणः, क्षीजयिष्यमाणः, चेक्षीज्यमानः, चेक्षीजिष्यमाणः;
[1]प्रक्षीक्-प्रक्षीजौ-प्रक्षीजः; — — —
क्षीजितम्-तः, क्षीजितः, चिक्षीजिषितः, चेक्षीजितः-तवान्;
[2]क्षीजः [3]क्षीजनः, क्षीजः, चिक्षीजिषुः, चेक्षीजः;
क्षीजितव्यम्, क्षीजयितव्यम्, चिक्षीजिषितव्यम्, चेक्षीजितव्यम्;
क्षीजनीयम्, [4]क्षीजनीयम्, चिक्षीजिषणीयम्; चेक्षीजनीयम्;
क्षीज्यम्, क्षीज्यम्, चिक्षीजिष्यम्, चेक्षीज्यम्;
ईषत्क्षीजः-दुःक्षीजः-सुक्षीजः; — —
क्षीज्यमानः, क्षीज्यमानः, चिक्षीजिष्यमाणः, चेक्षीज्यमानः;
क्षीजः[A], क्षीजः, चिक्षीजिषः, चेक्षीजः;
क्षीजितुम्, क्षीजयितुम्, चिक्षीजिषितुम्, चेक्षीजितुम्;
[5]क्षीजा, क्षीजना; चिक्षीजिषा, चेक्षीजा;
क्षीजनम्, क्षीजनम्, चिक्षीजिषणम्, चेक्षीजनम्;
क्षीजित्वा, क्षीजयित्वा, चिक्षीजिषित्वा, चेक्षीजित्वा;
प्रक्षीज्य, प्रक्षीज्य, प्रचिक्षीजिष्य, प्रचेक्षीज्य;

---

1. 'चोः कुः' (8-2-30) इति पदान्ते कुत्वम्।
2. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः।
3. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छील्ये युच्।
4. 'णेरनिटि' (6-4-51) इति णिलोपः।
5. 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः।

A. 'विस्फूर्जदक्षीणघनाघनोपमक्षीजा लजन्तः त्रिदशानलाञ्जितान्।
लाजादिहोतृष्वपि लञ्जनप्रदा यस्मिन् विनेशुर्जजनेषु दानवाः॥' धा. का. 1.32.

क्षीजम् २, क्षीजित्वा २, } क्षीजम् २, क्षीजयित्वा २, } चिक्षीजिषम् २ ; चिक्षीजिषित्वा २, } चेक्षीजम् २ ; चेक्षीजित्वा २. }

(310) "**क्षीबृ मदे**" (I-भ्वादिः 382. अक. सेट्. आत्म.)

क्षीबकः-बिका, क्षीबकः-बिका, चिक्षीबिषकः-षिका, चेक्षीबकः-बिका ; इत्यादीनि रूपाणि भौवादिकक्षीजतिवत् (309) ऊह्यानि ।
[1]क्षीबमाणः, क्षीबिष्यमाणः, [2]क्षीबः[A]-[3]क्षीबितवान्-[4]प्रक्षीबितः ; इत्यादीनि रूपाण्यस्य धातोः भवन्तीति विशेषः ।

(311) "**क्षीवु निरसने**" (I-भ्वादिः-567. सक. सेट्. पर.)

क्षीवकः-विका, क्षीवकः-विका, चिक्षीविषकः-षिका, चेक्षीवकः-विका, इत्यादीनि रूपाणि क्षीजधातुवत् (309) ज्ञेयानि । इमानि तु विशेषः- उदित्त्वात् निष्ठायां—'यस्य विभाषा' (7-2-15) इत्यनिट्त्वम् । तेन क्ष्यूतम्-तः-तवान् इति रूपम् । 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति वकारस्य ऊठ् । यण् । क्त्वायाम्—क्ष्यूत्वा-क्षीवित्वा-इति रूपद्वयम् । उदित्त्वाद्धातोः—'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे क्षीवित्वा । इडभावपक्षे ऊठ् । क्तिनि क्ष्यूतिः इति ।

(312) "**क्षीष् हिंसायाम्**" (IX-क्र्यादिः-1506. सक. अनि. पर.)

**प्वादिः ।**

'क्षये क्षयति, हिंसायां क्षिणातीति षितो भवेत् ।
निवासगत्योः क्षियति, क्षिणोत्यावगुणे क्षिणोः ॥' (श्लो-12-13.) इति देवः ।

---

1. धातोरात्मनेपदित्वात् शानच् । 'अट्कुप्वा—' (8-4-2) इति णत्वम् ।
2. 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (8-2-55) इति सूत्रेण निष्ठातकारस्य लोपः, इडभावश्च निपात्यते ।
3. 'अनुपसर्गात्—' इति सूत्रे, 'फुल्लशब्देन क्तवत्वन्तस्यापि निपातनमिष्यते' इति भाष्यात् अन्येषु शब्देषु क्तप्रत्ययान्तस्यैव ग्रहणमिति ज्ञायते । तेन क्तवत्वन्तेन निपातनम् ।
4. सूत्रे 'अनुपसर्गात्—' (8-2-55) इत्युक्तत्वात्, सोपसर्गात्न ।

A. 'सकम्पहेरम्बसमानलम्बनाः समाव्रजन् अम्बितघण्टिकास्तदा ।
प्रलम्बसास्नाः कबरत्विषो वृषा अक्षीबिताः क्षीबतयाऽतिशीभराः ॥'
धा. का. 1. 49.

क्षायकः-यिका, क्षायकः-यिका, चिक्षीषकः-षिका, चेक्षीयकः-यिका; इत्यादीनि रूपाणि भौवादिकक्षयतिवत् (302) ज्ञेयानि । अस्य धातोः [1]क्षिणन्-ती, [2]क्षिया, [3]क्षीतः-तम्-तवान्, क्षीत्वा, [A]प्रक्षेतुम् इति रूपाणीति विशेषः ।

(313) "टु क्षु शब्दे" (II-अदादिः-1036. अक. सेट्. पर.)

| | | | |
|---|---|---|---|
| क्षावकः-विका, | क्षावकः-विका, | [4]चुक्षूषकः-षिका, | [5]चोक्षूयकः-यिका; |
| [6]क्षविता-त्री, | क्षावयिता-त्री, | चुक्षूषिता-त्री, | चोक्षूयिता-त्री; |
| [7]क्षुवन्-ती, | क्षावयन्-न्ती, | चुक्षूषन्-न्ती; | — |
| क्षविष्यन्-न्ती-ती, | क्षावयिष्यन्-न्ती-ती, | चुक्षूषिष्यन्-न्ती-ती; | — |
| [8]व्यतिक्षुवाणः, | क्षावयमाणः, | — | चोक्षूयमाणः; |
| व्यतिक्षविष्यमाणः, | क्षावयिष्यमाणः, | — | चोक्षूयिष्यमाणः; |
| [9]क्षुत्-क्षुतौ-क्षुतः; | — | — | — |

1. 'क्र्यादिभ्यः—' (3-1-81) इति श्ना विकरणप्रत्ययः । 'श्नाभ्यस्तयोः—' (6-4-112) इत्याकारलोपः । 'प्वादीनां ह्रस्वः' (7-3-80) इति शिति परे अङ्गस्य ह्रस्वः । णत्वम् । धातुपाठे 'प्ली गतौ' इत्यनन्तरं पठ्यमानेन वृत्करणेन ल्वादिपरिसमाप्तिरेव बोध्यते । न तु प्वादिगणपरिसमाप्तिः । केचित्तु धातुमत्तुं 'क्षिष् हिंसायाम्' इति पठन्ति ।
2. षित्त्वात् 'षिद्भिदादिभ्यः—' (3-3-104) इत्यङि धातोः इयङादेशः । स्त्रियां टाप् ।
3. 'क्षियो दीर्घात्' (8-2-46) इत्यत्र निरनुबन्धकपरिभाषया नास्य ग्रहणम् । तेन निष्ठानत्वं न ।
4. 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'श्र्युकः किति' (7-2-11) इति इण्णिषेधः । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः ।
5. 'गुणो यङ्लुकोः' (7-4-82) इति अभ्यासस्य गुणः । 'अकृत्सार्वधातुक—' (7-4-25) इति उकारस्य दीर्घः ।
6. धातोरस्योदात्तत्वादिण्णिषेधो न ।
7. 'अदिप्रभृतिभ्यः शपः' (2-4-72) इति शपो विकरणप्रत्ययस्य लुक् । उवङ् ।
8. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् । णत्वम् ।
9. 'ह्रस्वस्य पिति कृति तुक्' (6-1-71) इति क्विपि धातोः तुगागमः ।

A. 'त्रीताश्चबृंहितजुषाऽभ्रिणता गजेन प्रक्षेतुमज्ञमनसा समनुद्रुतेन ।
नद्धः करेण भगवान् विहर्ति वृणानः श्रंथ्नन् निबद्धममुमाशु तलैरमथ्नात् ॥'

धा. का. 3-9.

[1]क्षुतम्-तः, क्षावितः, चुक्षूषितः, चोक्षूयितः-तवान् ;
क्षवः, [2]क्षवणः, क्षावः, चुक्षूषुः, चोक्षुवः ;
क्षवितव्यम्, क्षावयितव्यम्, चुक्षूषितव्यम्, चोक्षूयितव्यम् ;
क्षवणीयम्, क्षावणीयम्, चुक्षूषणीयम्, चोक्षूयणीयम् ;
[3]क्षव्यम्, [4]अवश्यक्षाव्यम्, क्षाव्यम्, चुक्षूष्यम्, चोक्षूय्यम् ;
ईषत्क्षवः-दुःक्षवः-सुक्षवः ; — — —
[5]क्षूयमाणः, क्षाव्यमाणः, चुक्षूष्यमाणः, चोक्षूय्यमाणः ;
[6]क्षवः, [7]विक्षावः,[A] [8]क्षवथुः, क्षावः, चुक्षूषः, चोक्षूयः,
क्षवितुम्, क्षावयितुम्, चुक्षूषितुम्, चोक्षूयितुम् ;
क्षुतिः, क्षावणा, चुक्षूषा, चोक्षूया ;
क्षवणम्, क्षावणम्, चुक्षूषणम्, चोक्षूयणम ;
क्षुत्वा, क्षावयित्वा, चुक्षूषित्वा, चोक्षूयित्वा ;
प्रक्षुत्य, प्रक्षाव्य, प्रचुक्षूष्य, प्रचोक्षूय्य ;
क्षावम् २, क्षुत्वा २, } क्षावम् २, क्षावयित्वा २, } चुक्षूषम् २, चुक्षूषित्वा २, } चोक्षूयम् २ ; चोक्षूयित्वा २ ; }
[9]क्षुरः[B].

---

1. 'श्र्युकः क्किति' (7-2-11) इति इण्णिषेधः। एवं क्तिनि, क्त्वायां च बोध्यम्।
2. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति ताच्छीलिको युच्।
3. 'अचो यत्' (3-1-97) इति यत्।
4. 'ओरावश्यके' (3-1-125) इति ण्यत्।
5. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः।
6. 'ऋदोरप्' (3-3-57) इत्यप् प्रत्ययः भावे।
7. 'वौ क्षुश्रुवः' (3-3-25) इति घञ्।
8. 'ट्वितोऽथुच्' (3-3-89) इति भावे अथुच् प्रत्ययो भवति।
9. 'क्षौति=वपनकाले 'कूँटू'-इति स्वनति इति क्षुरः 'ऋज्रेन्द्र—' इत्यादिना औणादिकः रन्।' इति धातुकाव्यव्याख्याने 2-86।

A. 'यात यूयं यमश्रायं दिशं नायेन दक्षिणाम्।
विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥' भ. का. 7-36.

B. 'केऽण्यल्पराव नुनुवुः खलेषु क्षुरक्ष्णुतात्मानममुं स्नुतास्राः।
सोऽनूर्णुतोऽयौत् जनद्युत् कुवत्या काञ्च्येव कामं स्तुवतां ब्रुवाणः ॥' धा. का. 2-47.

## (314) "क्षुदिर् सम्पेषणे" (VII-रुधादिः-1443. सक.अनि. उभ.)

क्षोदकः-दिका, क्षोदकः-दिका, [1]चुक्षुत्सकः-त्सिका, चोक्षुदकः-दिका ;
क्षोत्ता-त्री, क्षोदयिता-त्री, चुक्षुत्सिता-त्री, चोक्षुदिता-त्री ;
[2]क्षुन्दन्-ती, क्षोदयन्-न्ती, चुक्षुत्सन्-न्ती ; —
क्षोत्स्यन्-न्ती-ती, क्षोदयिष्यन्-न्ती-ती, चुक्षुत्सिष्यन्-न्ती-ती ; —
क्षुन्दानः, क्षोदयमानः, चुक्षुत्समानः, चोक्षुद्यमानः ;
क्षोत्स्यमानः, क्षोदयिष्यमाणः, चुक्षुत्सिष्यमाणः, चोक्षुदिष्यमाणः ;
[3]क्षुत्-क्षुद्-क्षुदौ-क्षुदः ; — — —
[4]क्षुण्णः-क्षुण्णम्[A]-क्षुण्णवान् ; क्षोदितः, चुक्षुत्सितः, चोक्षुदितः-तवान् ;
[5]क्षुदः, [6]प्रक्षोदी, क्षोदः, चुक्षुत्सुः, चोक्षुदः ;
क्षोत्तव्यम्, क्षोदयितव्यम्, चुक्षुत्सितव्यम्, चोक्षुदितव्यम् ;
क्षोदनीयम्, क्षोदनीयम्, चुक्षुत्सनीयम्, चोक्षुदनीयम् ;
क्षोद्यम्, क्षोद्यम्, चुक्षुत्स्यम्, चोक्षुद्यम् ;
ईषत्क्षोदः-दुःक्षोदः-सुक्षोदः ; — —
क्षुद्यमानः, क्षोद्यमानः, चुक्षुत्स्यमानः, चोक्षुद्यमानः ;
क्षोदः, क्षोदः ; चुक्षुत्सः, चोक्षुदः ;
क्षोत्तुम्, क्षोदयितुम्, चुक्षुत्सितुम्, चोक्षुदितुम् ;
क्षुत्तिः, क्षोदना, चुक्षुत्सा, चोक्षुदा ;
क्षोदनम्, क्षोदनम्, चुक्षुत्सनम्, चोक्षुदनम् ;
क्षुत्त्वा, क्षोदयित्वा, चुक्षुत्सित्वा, चोक्षुदित्वा ;

---

1. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम् । चर्त्वम् ।
2. 'रुधादिभ्यः श्नम्, (3-1-78) इति श्नम्, श्नमो मित्त्वात् अन्त्यादचः परो भवति । 'श्नसोरल्लोपः' (6-4-111) इत्यकारलोपः ।
3. 'वाऽवसाने' (8-4-56) इति चर्त्वविकल्पः ।
4. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठातकारस्य, धातुदकारस्य च नत्वम् । णत्वम्, ष्टुत्वं च ।
5. 'इगुपध—' (3-1-135) इति कर्तरि कः ।
6. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये गम्यमाने णिनिः ।

A. 'तैर्वृक्णरुग्णसंभुग्नक्षुण्णभिन्नविपन्नकैः ।
निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी ॥' भ. का. 4-42.

प्रक्षुध्य, प्रक्षोध्य, प्रचुक्षुत्स्य, प्रचोक्षुध्य ;
क्षोदम् २, क्षुत्त्वा २, क्षोदम् २, क्षोदयित्वा २, चुक्षुत्सम् २, चुक्षुत्सित्वा २, चोक्षुदम् २ ; चोक्षुदित्वा २.

(315) "क्षुध बुभुक्षायाम्" (IV-दिवादिः-1190. अक. अनि. पर.)

क्षोधकः-धिका, क्षोधकः-धिका, [1]चुक्षुत्सकः-त्सिका, चोक्षुधकः-धिका ;
क्षोद्धा-द्ध्री, क्षोधयिता-त्री, चुक्षुत्सिता-त्री, चोक्षुधिता-त्री ;
[2]क्षुध्यन्[A]-न्ती, क्षोधयन्-न्ती, चुक्षुत्सन्-न्ती ; —
क्षोत्स्यन्-न्ती-ती, क्षोधयिष्यन्-न्ती-ती, चुक्षुत्सिष्यन्-न्ती-ती ; —
— क्षोधयमानः, — चोक्षुध्यमानः ;
— क्षोधयिष्यमाणः, — चोक्षुधिष्यमाणः ;
क्षुत्-क्षुध्-क्षुधौ-क्षुधः ; — —
[3]क्षुधितम्-तः, क्षोधितः, चुक्षुत्सितः, चोक्षुधितः-तवान् ;
[4]क्षुधः, [5]क्षोधुकः, क्षोधः, चुक्षुत्सुः, चोक्षुधः ;
क्षोद्धव्यम्, क्षोधयितव्यम्, चुक्षुत्सितव्यम्, चोक्षुधितव्यम् ;
क्षोधनीयम्, क्षोधनीयम्, चुक्षुत्सनीयम्, चोक्षुधनीयम् ;
क्षोध्यम्, क्षोध्यम्, चुक्षुत्स्यम्, चोक्षुध्यम् ;
ईषत्क्षोधः-दुःक्षोधः-सुक्षोधः ; — —
क्षुध्यमानः, क्षोध्यमानः, चुक्षुत्स्यमानः, चोक्षुध्यमानः ;

---

1. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम्। तेनाङ्गस्य गुणो न। चर्त्वम्। एवमेव सर्वत्र सन्नन्ते प्रक्रिया बोध्या।
2. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन्। श्यनः ङिद्वद्भावात् अङ्गस्य गुणो न। 'शप्श्यनोर्नित्यम्' (7-1-81) इति नित्यं नुम्।
3. 'वसतिक्षुधोरिट्' (7-2-52) इति क्त्वानिष्ठयोः नित्यम् इट्।
4. 'इगुपध—' (3-1-135) लक्षणः कप्रत्ययः कर्तरि।
5. 'लषपत—' (3-2-154) इत्यादिना विहितः उकञ् अस्यापीष्यते—इति क्षीरस्वामी।

A. 'शक्यन् गर्वमशक्यमानमनसाम् आस्त्रियदास्योऽक्षुधं
क्षुध्यद्भक्तदमाप मालिकवरं शुद्धं स सिद्धेप्सितम्॥' धा. का. 2-63.
'का त्वमेकाकिनी भीरु निरन्वयजने वने।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा॥' भ. का. 5-66.

| | | | |
|---|---|---|---|
| क्षोधः, | क्षोधः, | चुक्षुत्सः, | चोक्षुधः ; |
| क्षोद्धुम्, | क्षोधयितुम्, | चुक्षुत्सितुम्, | चोक्षुधितुम् ; |
| [1]क्षुत्-क्षुधा, | क्षोधना, | चुक्षुत्सा, | चोक्षुधा ; |
| क्षोधनम्, | क्षोधनम्, | चुक्षुत्सनम्, | चोक्षुधनम् ; |
| [2]क्षुधित्वा[A] / क्षोधित्वा | क्षोधयित्वा, | चुक्षुत्सित्वा, | चोक्षुधित्वा ; |
| सङ्क्षुध्य, | प्रक्षोद्ध्य, | प्रचुक्षुत्स्य, | प्रचोक्षुध्य ; |
| क्षोधम् २ / क्षुधित्वा २-क्षोधित्वा २, | क्षोधम् २, / क्षोधयित्वा, | चुक्षुत्सम् २, / चुक्षुत्सित्वा २, | चोक्षुधम् २ ; / चोक्षुधित्वा २. |

(316) "क्षुभ सञ्चलने" (I-भ्वादिः-751. सक. सेट्. आत्म.)

सञ्चलनम्=प्रकृतिविपर्यासः, गमनं च। इति मा-धातुवृत्तौ।

'क्षुभ्नाति क्षोभते क्षुभ्येत्, इति संचलने क्षुभेः॥' (श्लो-144) इति देवः।

क्षोभकः-भिका, क्षोभकः-भिका, [3]चुक्षुभिषकः-चुक्षोभिषकः-षिका, चोक्षुभकः-भिका;

क्षोभिता-त्री, क्षोभयिता-त्री, चुक्षुभिषिता-चुक्षोभिषिता-त्री, चोक्षुभिता-त्री ;

— क्षोभयन्-न्ती ; क्षोभयिष्यन्-न्ती-ती ; —

क्षोभमाणः, क्षोभयमाणः, चुक्षुभिषमाणः-चुक्षोभिषमाणः, चोक्षुभ्यमाणः ;

क्षोभिष्यमाणः, क्षोभयिष्यमाणः, चुक्षुभिषिष्यमाणः-चुक्षोभिषिष्यमाणः, चोक्षुभिष्यमाणः ;

प्रक्षुप्-प्रक्षुब्-प्रक्षुभौ-प्रक्षुभः ; — —

---

1. 'स्त्रियां क्तिन्' (3-3-94) इत्यधिकारे 'सम्पदादिभ्यः क्विप्' (वा. 3-3-94) इति क्विप्, क्तिनोऽपवादः। 'आपं चैव हलन्तानाम्' इत्यनेन टाप्। 'या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता।' इति देवीमाहात्म्यम्।

2. 'वसतिक्षुधोरिट्' (7-2-52) इतीट् क्त्वायाम्। 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः। तेन रूपद्वयम्।

3. 'रलो व्युपधात्—' (1-2-26) इति सनः कित्त्वविकल्पः।

A. 'पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ। बभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम्॥' भ. का. 9-39.

[1]क्षुभितम्-[A]क्षोभितम्, [2]क्षुब्धः, क्षोभितः, चुक्षुभिषितः-चुक्षोभिषितः, चोक्षुभितः-तवान्;

क्षुभः, [3]क्षोभणः, [4]प्रक्षोभी, क्षोभः, चुक्षुभिषुः-चुक्षोभिषुः, चोक्षुभः;
क्षोभितव्यम्, क्षोभयितव्यम्, चुक्षुभिषितव्यम्-चुक्षोभिषितव्यम्, चोक्षुभितव्यम्;
क्षोभणीयम्, क्षोभणीयम्, चुक्षुभिषणीयम्-चुक्षोभिषणीयम्, चोक्षुभणीयम्;
क्षोभ्यम्, क्षोभ्यम्, चुक्षुभिष्यम्-चुक्षोभिष्यम्, चोक्षुभ्यम्;
ईषत्क्षोभः दुःक्षोभः-सुक्षोभः; — —
क्षुभ्यमाणः, क्षोभ्यमाणः, चुक्षुभिष्यमाणः-चुक्षोभिष्यमाणः, चोक्षुभ्यमाणः;
[B]क्षोभः, क्षोभः, चुक्षुभिषः-चुक्षोभिषः, चोक्षुभः;
क्षोभितुम्, क्षोभयितुम्, चुक्षुभिषितुम्-चुक्षोभिषितुम्, चोक्षुभितुम्;
[5]क्षुब्धिः, क्षोभणा, चुक्षुभिषा-चुक्षोभिषा, चोक्षुभा;
क्षोभणम्, क्षोभणम्, चुक्षुभिषणम्-चुक्षोभिषणम्, चोक्षुभणम्;
[6]क्षुभित्वा-क्षोभित्वा, क्षोभयित्वा, चुक्षुभिषित्वा-चुक्षोभिषित्वा, चोक्षुभित्वा;

---

1. 'उदुपधात् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति वा कित्त्वम्।
2. 'क्षुब्धस्वान्त—' (7-2-18) इत्यादिना मन्थे विवक्षिते सति निष्ठायाः इडभावो निपातितः।

   'क्षुब्धादयोऽनिटः क्लान्ता मन्थाद्यर्थे निपातिताः।
   मन्थो मथनदण्डः स्यात्, सक्तवो वा द्रवीकृताः॥
   तद्वाची क्षुब्धशब्दोऽयं तयोश्च चलितत्वतः।
   चलितेष्वपि सर्वेषु प्रयोगोऽस्योपचारतः॥' इति प्रक्रियासर्वस्वे।
3. 'अनुदात्तेतश्च हलादेः' (3-2-148) इति ताच्छीलिको युच्।
4. 'सुप्यजातौ—' (3-2-78) इति णिनिः ताच्छील्ये।
5. 'तितुत्र—' (7-2-9) इत्यादिना क्तिनि इण्णिषेधः।
6. 'रलो व्युपधात्—' (1-2-26) इति क्त्वायां कित्त्वविकल्पः। तेन रूपद्वयम्।

A. 'कृष्णोऽपि तापोल्लुठिताङ्गशोभा आश्वास्य मारक्षुभिता महेलाः।
   अनभ्यसन्तोभककंसजीवसंसाय पापध्वदयं प्रतस्थे॥' धा. का. 2-2.
   'क्षुभितस्य महीभृतस्त्वयि प्रशमोपन्यसनं वृथा मम।
   प्रलयोल्लसितस्य वारिधेः परिवाहो जगतः करोति किम्॥'

   शिशुपालवधे—16-51.

B. 'इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात्।
   क्षोभमगमदतिमात्रमथो शिशुपालपक्षपृथिवीभृतां गणः॥'

   शिशुपालवधे—15-47.

प्रक्षुभ्य, प्रक्षोभ्य, प्रचुक्षुभिष्य-प्रचुक्षोभिष्य, प्रचोक्षुभ्य;

क्षोभम् २, क्षुमित्वा २-क्षोभित्वा २, } क्षोभम् २, क्षोभयित्वा २, } चुक्षुभिषम् २-चुक्षोभिषम् २, चुक्षुभिषित्वा २-चुक्षोभिषित्वा २, } चोक्षुभम् २; चोक्षुभित्वा २. }

## (317) "क्षुभ सञ्चलने" (IV-दिवादिः-1239. सक. सेट्. पर.)

'क्षुभ्नाति क्षोभते क्षुभ्येत, इति संचलने क्षुभेः ॥' (श्लो. 144) इति देवः।

अस्य धातोर्दिवादित्वात् शतरि [A]क्षुभ्यन्-न्ती, क्षोभिष्यन्-न्ती-ती; इत्यादीनि रूपाणि। अन्यानि सर्वाणि रूपाणि भौवादिकक्षोभतिवत् (316), ज्ञेयानि। 'उदुपधात्—' (1-2-21) इति वैकल्पिककित्त्वं तु नात्र प्रवर्तते। 'शब्विकरणेभ्य एवेष्यते' (भाष्येष्टिः 1-2-21) इत्युक्तत्वात्।

## (318) "क्षुभ सञ्चलने" (IX-क्र्यादिः-1519. सक. सेट्. पर.)

'क्षुभ्नाति क्षोभते क्षुभ्येदिति संचलने क्षुभेः ॥' (श्लो. 144 इति देवः)

अस्य धातोः क्र्यादित्वात् [1]क्षुभ्नन्[B]-ती, इति रूपमिति विशेषः। अन्यानि रूपाणि भौवादिकक्षुभधातुवत् (316) बोध्यानि। 'उदुपधात्–' (1-2-21) इति अत्रापि न प्रवर्तते, क्रैयादिकत्वात्।

## (319) "क्षुर विलेखने" (VI-तुदादिः-1344. सक.सेट्. पर.)

विलेखनम्=छेदः।

क्षोरकः-रिका, क्षोरकः-रिका, चुक्षुरिषकः-चुक्षोरिषकः-षिका, चोक्षुरकः-रिका, इत्यादीनि रूपाणि तौदादिककुरतिवत् (229) ज्ञेयानि।

## (320) "क्षेवु निरसने" (I-भ्वादिः-568. सक. सेट्. पर.)

क्षेवकः-विका, क्षेवकः-विका, चिक्षेविषकः-षिका, चेक्षेवकः-विका;

---

1. 'क्र्यादिभ्यः श्ना'—(3-1-81) इति श्ना। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः। 'क्षुभ्नादिषु च' (8-4-39) इति णत्वनिषेधः।

A. 'ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः।
महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः ॥' भ. का. 9-118.

B. 'रोषभीममुखेनैवं क्षुभ्नतोक्तः प्लवङ्गमः।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥' भ. का. 9-109.

क्षेविता-त्री, क्षेवयिता-त्री, चिक्षेविषिता-त्री, चेक्षेविता-त्री ;
क्षेवन्-न्ती, क्षेवयन्-न्ती, चिक्षेविषन्-न्ती ; —
क्षेविष्यन्-न्ती-ती, क्षेवयिष्यन्-न्ती-ती, चिक्षेविषिष्यन्-न्ती-ती ;
— क्षेवयमाणः, क्षेवयिष्यमाणः, चेक्षेव्यमाणः, चेक्षेविष्यमाणः ;
[1]क्षयूः-क्षय्वौ-क्षय्वः ; — —
[2]क्षयूतम्[A]तः, क्षेवितः, चिक्षेविषितः, चेक्षेवितः-तवान् ;
क्षेवः, क्षेवः, चिक्षेविषुः, चेक्षेवः ;
क्षेवितव्यम्, क्षेवयितव्यम्, चिक्षेविषितव्यम्, चेक्षेवितव्यम् ;
क्षेवणीयम्, क्षेवणीयम्, चिक्षेविषणीयम्, चेक्षेवणीयम् ;
क्षेव्यम्, क्षेव्यम्, चिक्षेविष्यम्, चेक्षेव्यम् ;
क्षेव्यमाणः, क्षेव्यमाणः, चेक्षेविष्यमाणः, चेक्षेव्यमाणः ;
ईषत्क्षेवः-दुःक्षेवः-सुक्षेवः ; — — —
क्षेवः, क्षेवः, चिक्षेविषः, चेक्षेवः ;
क्षेवितुम्, क्षेवयितुम्, चिक्षेविषितुम्, चेक्षेवितुम् ;
[3]क्षेवा, क्षेवणा, चिक्षेविषा, चेक्षेवा ;
क्षेवणम्, क्षेवणम्, चिक्षेविषणम्, चेक्षेवणम् ;
[4]क्षयूत्वा-क्षेवित्वा, क्षेवयित्वा, चिक्षेविषित्वा, चेक्षेवित्वा ;
प्रक्षेव्य, प्रक्षेव्य, प्रचिक्षेविष्य, प्रचेक्षेव्य ;
क्षेवम् २, क्षयूत्वा २-क्षेवित्वा २, } क्षेवम् २, क्षेवयित्वा २, } चिक्षेविषम् २, चिक्षेविषित्वा २, } चेक्षेवम् ; चेक्षेवित्वा. }

---

1. क्विपि 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति ऊठ्। एकारस्य अयादेशः। द्विवचनादिषु 'ओः सुपि' (6-4-83) इति यणादेशः।
2. उदित्त्वेन क्त्वायामिड्विकल्पात्—'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधः। ऊठ्। अयादेशः।
3. 'गुरोश्च हलः' (3-3-103) इत्यकारप्रत्ययः।
4. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इडभावपक्षे ऊठ्। अयादेशः।

A. 'प्रक्ष्यूतगोपीशुचमूर्णपूतनं तूर्णानसं थूर्णबकादिदानवम्।
दुदूर्विषून् धूर्वितुमेव गूर्वणं मूर्वन्तमापूर्वितपर्वताध्वरम् ॥' धा. का. 1-73.
अस्मिन् श्लोके 'क्षयूतगोपीशुचम्' इति कश्चन पाठः। तदानीमस्माद्धातोः कर्मणि क्तप्रत्यये 'क्षयूत' इति रूपम्। यथाश्रुतपाठे 'क्षिवु' धातोः निष्ठायां कर्मणि रूपम्।

## (321) "क्षै क्षये" (I-भ्वादिः-913. अक. अनि. पर.)

[1]क्षायकः-यिका, - क्षापकः-[2]क्षपकः-पिका, चिक्षासकः-सिका, चाक्षायकः-यिका ;

क्षाता-त्री, क्षपयिता-त्री, चिक्षासिता-त्री, चाक्षायिता-त्री ;

[3]क्षायन्-न्ती, क्षपयन्-न्ती, चिक्षासन्-न्ती; —

क्षास्यन्-न्ती-ती, क्षपयिष्यन्-न्ती-ती, चिक्षासिष्यन्-न्ती-ती ; —

— क्षपयमाणः, — चाक्षायमाणः ;

— क्षपयिष्यमाणः, — चाक्षायिष्यमाणः ;

विक्षाः-विक्षौ-विक्षाः ; — — —

[4]क्षामम्-क्षामः-क्षामवान्, क्षपितः, चिक्षासितः, चाक्षायितः-तवान् ;

[5]प्रक्षः, [6]क्षायः, क्षपः-[7]क्षपा, चिक्षासुः, चाक्षाः ;

क्षातव्यम्, क्षपयितव्यम्, चिक्षासितव्यम्, चाक्षायितव्यम् ;

क्षाणीयम्, क्षपणीयम्, चिक्षासनीयम्, चाक्षायणीयम् ;

[8]क्षेयम्, क्षप्यम्, चिक्षास्यम्, चाक्षाय्यम् ;

[9]ईषत्क्षाणः-दुःक्षाणः-सुक्षाणः ; — —

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यात्वे, 'आतो युक् चिण्कृतोः' (7-3-33) इति युक्। एवं घञि, णमुलि च ज्ञेयम्।
2. ण्यन्तस्य 'क्षै' धातोः भोजमते घटादिषु पाठः। तदानीम् 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति पुकि, घटादित्वेन मित्त्वात्, 'मितां ह्रस्वः' (6-4-92) इत्युपधाया ह्रस्वः। अन्येषां मते घटादिपाठाभावात् क्षापकः-क्षापिका इत्यादीनि रूपाणि यथायथमूह्यानि।
3. शपि, 'एचोऽयवायावः' (6-1-78) इत्यायादेशे च रूपम्।
4. 'क्षायो मः' (8-2-53) इति निष्ठातकारस्य मकारः।
5. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कः प्रत्ययः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः।
6. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इत्यादिना कर्तरि वा णः प्रत्ययः। युगागमः।
7. ण्यन्तात् पचाद्यचि टाप्। क्षपयति=वारयति इन्द्रियाणां चेष्टामिति क्षपा=रात्रिः। 'राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वनाः। आश्वासयन्तो विप्राग्र्याः क्षपां सर्वां व्यनोदयन्॥' (महाभारते-आरण्यपर्वणि 1-43) इति शब्दकल्पद्रुमे।
8. यत्प्रत्यये, 'ईद् यति' (6-4-65) इत्याकारस्य ईकारे गुणे च रूपम्।
9. ईषदाद्युपपदेषु 'आतो युच्' (3-3-128) इति खलपवादो युच्।

क्षायमाणः, क्षप्यमाणः, चिक्षास्यमानः, चाक्षाय्यमाणः ;

क्षायः, क्षपः, चिक्षासः, चाक्षायः ;

क्षातुम्, क्षपयितुम्, चिक्षासितुम्, चाक्षायितुम् ;

क्षातिः, [1]प्रक्षा, क्षपणा, चिक्षासा, चाक्षाया ;

क्षाणम्, क्षपणम्, चिक्षासनम्, चाक्षायणम् ;

क्षात्वा, क्षपयित्वा, चिक्षासित्वा, चाक्षायित्वा ;

प्रक्षाय, [2]प्रक्षपय्य, प्रचिक्षास्य, प्रचाक्षाय्य ;

क्षायम् २, क्षात्वा २, } [3]क्षपम् २-क्षापम् २, क्षपयित्वा २, } चिक्षासम् २, चिक्षासित्वा २, } चाक्षायम् २ ; चाक्षायित्वा २. }

(322) " क्षोट क्षेपे " (X-चुरादिः-1876. सक. सेट्. उभ.) अदन्तः ।

'क्षये' इति धातुकाव्ये (3-55.) पाठः ।

क्षोटकः-टिका, चुक्षोटयिषकः-षिका ;

क्षोटयिता-त्री, चुक्षोटयिषिता-त्री ;

क्षोटयन्-न्ती, चुक्षोटयिषन्-न्ती ;

क्षोटयिष्यन्-न्ती-ती, चुक्षोटयिषिष्यन्-न्ती-ती ;

क्षोटयिष्यमाणः, चुक्षोटयिषिष्यमाणः ;

क्षोट्-क्षोटौ-क्षोटः ; —

[A]क्षोटितः, चुक्षोटयिषितः-तवान् ;

क्षोटयितव्यम्, चुक्षोटयिषितव्यम् ;

---

1. 'आतश्चोपसर्गे' (3-3-106) इति स्त्रियामङ् ।
2. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
3. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ उपधाया दीर्घ-विकल्पः ।

A. 'यो मरक्षयं स्पृहयते मयि भामितेऽपि
संसूचयत्यरिगुणांश्च मदक्षखेटी ।
तं क्षोटितौजसमगोमितभूमिबन्धं (द्धं)
राज्ञो कुमारयति मारयतोप्रसेनम् ॥' धा. का. 3. 55.

क्षोटनीयम्, चुक्षोटयिषणीयम्;
क्षोट्यम्, चुक्षोटयिष्यम्;
ईषत्क्षोटः-दुःक्षोटः-सुक्षोटः; —
क्षोट्यमानः, चुक्षोटयिष्यमाणः;
क्षोटः, चुक्षोटयिषः;
क्षोटयितुम्, चुक्षोटयिषितुम्;
क्षोटना, चुक्षोटयिषा;
क्षोटयित्वा, चुक्षोटयिषित्वा;
प्रक्षोट्य, प्रचुक्षोटयिष्य;
क्षोटम् २, क्षोटयित्वा २, } चुक्षोटयिषम् २; चुक्षोटयिषित्वा २; }

## (323) "क्ष्णु तेजने" (II-अदादिः. 1037. अक. सेट्. पर.)

क्ष्णावकः-विका, क्ष्णावकः-विका, [1]चुक्ष्णूषकः-षिका, [2]चोक्ष्णूयकः-यिका;
क्ष्णविता-त्री, क्ष्णावयिता-त्री, चुक्ष्णूषिता-त्री, चोक्ष्णूयिता-त्री;
[3]क्ष्णुवन्-ती, क्ष्णावयन्-न्ती, चुक्ष्णूषन्-न्ती; —
क्ष्णविष्यन्-न्ती-ती, क्ष्णावयिष्यन्-न्ती-ती, चुक्ष्णूषिष्यन्-न्ती-ती; —
[4]संक्ष्णुवानः[A], क्ष्णावयमानः, संचुक्ष्णूषमाणः, चोक्ष्णूयमानः;
संक्ष्णविष्यमाणः, क्ष्णावयिष्यमाणः, संचुक्ष्णूषिष्यमाणः, चोक्ष्णूयिष्यमाणः;
[5]प्रक्ष्णुत्-प्रक्ष्णुतौ-प्रक्ष्णुतः; — — —

---

1. 'इको झल्' (1-2-9) इति सनः कित्त्वम्। 'श्र्युकः किति' (7-2-11) इति इण्णिषेधः। 'अज्झनगमां सनि' (6-4-16) इति दीर्घः।
2. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः।
3. 'अदिप्रभृतिभ्यः—' (2-4-72) इति शपो लुक्। 'अचि श्नुधातु—' (6-4-77) इत्युवङ्।
4. 'समः क्ष्णुवः' (1-3-65) इति शानच्।
5. 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्।

A. 'संक्ष्णुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम्।
ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः॥' भ. का. 8-40.

[1]क्ष्णुतम्-तः[A], क्ष्णावितः, चुक्ष्णूषितः, चोक्ष्णूयितः-तवान् ;
क्ष्णवः, क्ष्णावः, चुक्ष्णूषुः, चोक्ष्णुवः ;
क्ष्णवितव्यम्, क्ष्णावयितव्यम्, चुक्ष्णूषितव्यम्, चोक्ष्णूयितव्यम् ;
क्ष्णवनीयम्, क्ष्णावनीयम्, चुक्ष्णूषणीयम्, चोक्ष्णूयनीयम् ;
[2]क्ष्णव्यम्, [3]अवश्यक्ष्णाव्यम्, क्ष्णाव्यम्, चुक्ष्णूष्यम्, चोक्ष्णूय्यम् ;
ईषत्क्ष्णवः-दुःक्ष्णवः-सुक्ष्णवः ; — —
[4]क्ष्णूयमाणः, क्ष्णाव्यमानः, चुक्ष्णूष्यमाणः, चोक्ष्णूय्यमानः,
[5]क्ष्णवः, क्ष्णावः, चुक्ष्णूषः चोक्ष्णूयः ;
क्ष्णवितुम्, क्ष्णावयितुम्, चुक्ष्णूषितुम्, चोक्ष्णूयितुम् ;
[6]क्ष्णुतिः, क्ष्णावना, चुक्ष्णूषा, चोक्ष्णूया ;
क्ष्णवनम्, क्ष्णावनम्, चुक्ष्णूषणम्, चोक्ष्णूयनम् ;
क्ष्णुत्वा, क्ष्णावयित्वा, चुक्ष्णूषित्वा, चोक्ष्णूयित्वा ;
प्रक्ष्णुत्य, प्रक्ष्णाव्य, प्रचुक्ष्णूष्य, प्रचोक्ष्णूय्य ;
क्ष्णावम् २, क्ष्णुत्वा २, } क्ष्णावम् २, क्ष्णावयित्वा २, } चुक्ष्णूषम् २, चुक्ष्णूषित्वा, } चोक्ष्णूयम् २ ; चोक्ष्णूयित्वा २. }

## (324) "क्ष्मायी शब्दे विधूनने च" (I-भ्वादिः-486.सक.सेट्.आत्म.[अ]

क्ष्मायकः-यिका, [7]क्ष्मापकः-पिका, चिक्ष्मायिषकः-षिका, [8]चाक्ष्मायकः-यिका;
क्ष्मायिता-त्री, क्ष्मापयिता-त्री, चिक्ष्मायिषिता-त्री, चाक्ष्मायिता-त्री ;

---

1. 'श्र्युकः क्किति' (7-2-11) इतीण्णिषेधः ।
2. 'अचो यत्' (3-1-97) इति यत् । गुणावादेशौ ।
3. 'ओरावश्यके' (3-1-125) इति ण्यत् ।
4. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
5. 'ऋदोरप्' (3-3-57) इत्यप् ।
6. 'तितुत्र —' (7-2-9) इत्यादिना इण्णिषेधः ।
7. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' (7-3-36) इति पुक् । 'लोपो व्योर्वलि' (6-1-66) इति धातुयकारस्य लोपः । एवं ण्यन्ते सर्वत्र बोध्यम् ।
8. 'यस्य हलः' (6-4-49) इति यकारलोपः । 'अतो लोपः' (6-4-48) इति अलोपः ।

A. 'केऽप्यल्परावं जुक्षुवुः खलेषु क्षुरक्ष्णुतात्मानमसुं स्तुताश्चाः ।
सोऽनूर्णुतोऽद्यौज्जनधुत् क्षुवत्या काञ्च्येव क्ष्मामं स्तुवतां ब्रुवाणः ॥' धा.का. 2-47.

[अ] शब्दे अकर्मकः । विधूनने सकर्मकः ।

— क्ष्मापयन्-न्ती, क्ष्मापयिष्यन्-न्ती-ती ; —

क्ष्मायमाणः, क्ष्माप्यमाणः, चिक्ष्मायिषमाणः चाक्ष्माय्यमाणः ;

क्ष्मायिष्यमाणः, क्ष्मापयिष्यमाणः, चिक्ष्मायिषिष्यमाणः, चाक्ष्मायिष्यमाणः ;

[1]प्रक्ष्माः-प्रक्ष्मौ-प्रक्ष्माः; — — —

[2]क्ष्मातम्-तः, क्ष्मापितः, चिक्ष्मायिषितः, चाक्ष्मायितः-तवान् ;

क्ष्मायः, [3]भरक्ष्मायः[A], क्ष्मायः, चिक्ष्मायिषुः, चाक्ष्मायः ;

क्ष्मायितव्यम्, क्ष्मापयितव्यम्, चिक्ष्मायिषितव्यम्, चाक्ष्मायितव्यम् ;

क्ष्मायणीयम्, क्ष्मापणीयम्, चिक्ष्मायिषणीयम्, चाक्ष्मायणीयम् ;

क्ष्माय्यम्, क्ष्माप्यम्, चिक्ष्मायिष्यम्, चाक्ष्माय्यम् ;

ईषत्क्ष्मायः-दुःक्ष्मायः-सुक्ष्मायः ; — —

क्ष्माय्यमाणः, क्ष्माप्यमाणः, चिक्ष्मायिष्यमाणः, चाक्ष्माय्यमाणः ;

क्ष्मायः, क्ष्मापः, चिक्ष्मायिषः, चाक्ष्मायः ;

क्ष्मायितुम्, क्ष्मापयितुम्, चिक्ष्मायिषितुम्, चाक्ष्मायितुम् ;

[4]क्ष्माया, क्ष्मापणा, चिक्ष्मायिषा, चाक्ष्माया ;

क्ष्मायणम्, क्ष्मापणम्, चिक्ष्मायिषणम्, चाक्ष्मायणम् ;

क्ष्मायित्वा, क्ष्मापयित्वा, चिक्ष्मायिषित्वा, चाक्ष्मायित्वा ;

प्रक्ष्माय्य, प्रक्ष्माप्य, प्रचिक्ष्मायिष्य, प्रचाक्ष्माय्य ;

क्ष्मायम् २, क्ष्मायित्वा २, } क्ष्मापम् २, क्ष्मापयित्वा २, } चिक्ष्मायिषम् २, चिक्ष्मायिषित्वा २, } चाक्ष्मायम् २ ; चाक्ष्मायित्वा २. }

## (325) "क्ष्मील निमेषणे" (I-भ्वादिः. 520. सक. सेट्. पर.)

निमेषणम्=सङ्कोचनम् इति धातुकाव्ये । 'चान्द्रसम्मतः क्ष्मील इति पाठः' इति क्षीरस्वामी ।

क्ष्मीलकः-लिका, क्ष्मीलकः-लिका, चिक्ष्मीलिषकः-षिका, चेक्ष्मीलकः-लिका ;

---

1. क्विपि वलि लोपः ।
2. 'श्वीदितो निष्ठायाम्' (7-2-14) इति निष्ठायामिण्णिषेधः । वलि लोपः ।
3. 'कर्मण्यण्' (3-2-1) इत्यण्प्रत्ययो भवति ।
4. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययो भवति ।

A. 'प्रक्षोपयन्तं मुरलीं महीभरक्ष्मायं बलस्फीतसुपीनदोर्युगम् ।
अशेषतां भ्रूशलनैर्वलद्दृशा प्रवल्गमानं प्रियवल्लवीशुचम् ॥' धा. का. 1-63.

क्ष्मीलिता-त्री, क्ष्मीलयिता-त्री, चिक्ष्मीलिषिता-त्री, चेक्ष्मीलिता-त्री ;
क्ष्मीलन्-न्ती, क्ष्मीलयन्-न्ती, चिक्ष्मीलिषन्-न्ती ; —
क्ष्मीलिष्यन्-न्ती-ती, क्ष्मीलयिष्यन्-न्ती-ती, चिक्ष्मीलिषिष्यन्-न्ती-ती ; —
व्यतिक्ष्मीलमानः, क्ष्मीलयमानः, — चेक्ष्मील्यमानः ;
व्यतिक्ष्मीलिष्यमाणः, क्ष्मीलयिष्यमाणः, — चेक्ष्मीलिष्यमाणः ;
क्ष्मील्-क्ष्मीलौ-क्ष्मीलः ; — —
क्ष्मीलितम्-तः, [1]क्ष्मीलितः[A], चिक्ष्मीलिषितः, चेक्ष्मीलितः-तवान् ;
क्ष्मीलः, क्ष्मीलः, चिक्ष्मीलिषुः, चेक्ष्मीलः ;
क्ष्मीलितव्यम्, क्ष्मीलयितव्यम्, चिक्ष्मीलिषितव्यम्, चेक्ष्मीलितव्यम् ;
क्ष्मीलनीयम्, [2]क्ष्मीलनीयम्, चिक्ष्मीलिषणीयम्, चेक्ष्मीलनीयम् ;
क्ष्मील्यम्, क्ष्मील्यम्, चिक्ष्मीलिष्यम्, चेक्ष्मील्यम् ;
ईषत्क्ष्मीलः-दुःक्ष्मीलः-सुक्ष्मीलः ; — —
क्ष्मील्यमानः, क्ष्मील्यमानः, चिक्ष्मीलिष्यमाणः, चेक्ष्मील्यमानः ;
क्ष्मीलः, क्ष्मीलः, चिक्ष्मीलिषः, चेक्ष्मीलः ;
क्ष्मीलितुम्, क्ष्मीलयितुम्, चिक्ष्मीलिषितुम्, चेक्ष्मीलितुम् ;
क्ष्मीला, क्ष्मीलना, चिक्ष्मीलिषा. चेक्ष्मीला ;
क्ष्मीलनम्, क्ष्मीलनम्, चिक्ष्मीलिषणम्, चेक्ष्मीलनम् ;
क्ष्मीलित्वा, क्ष्मीलयित्वा, चिक्ष्मीलिषित्वा, चेक्ष्मीलित्वा ;
प्रक्ष्मील्य, सङ्क्ष्मील्य, सञ्चिक्ष्मीलिष्य, सञ्चेक्ष्मील्य ;
क्ष्मीलम् २, } क्ष्मीलम् २, } चिक्ष्मीलिषम् २, } चेक्ष्मीलम् २ ; }
क्ष्मीलित्वा २, } क्ष्मीलयित्वा २, } चिक्ष्मीलिषित्वा २, } चेक्ष्मीलित्वा २. }

## (326) "ञि क्ष्विदा अव्यक्ते शब्दे"

(I-भ्वादिः-744. अक. सेट्. पर.) [अ.]

'ञि क्ष्विडा—' इत्यार्हतः। क्ष्वेडो=विषम्। क्ष्वेडो=रवः। 'ञि ष्विदा—' इति नन्दी—इति क्षीरतरङ्गिण्यां क्षीरस्वामी।

---

1. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः।
2. 'णेरनिटि' (6-4-51) इति णेर्लोपः।

A. 'उन्मीलनक्ष्मीलनलीलया दृशोः उत्स्मीलितक्ष्मीलितविश्वविष्टपम्।
पिच्छस्रजा पीलितनीलकुन्तलं शीलेन सङ्कीलितलोकमानसम्॥' धा. का. 1-67.

[अ] अयमेव धातुर्वृत्तादावपि क्षीरस्वामिना क्षीरतरङ्गिण्यां पठितः। तस्य प्रयोजनं तु लुङि 'अक्ष्विदत्—अक्ष्वेदिष्ट—' इति रूपद्वयसिद्धिः।

'क्ष्वेदत्यव्यक्तशब्दार्थे, क्ष्विद्यति स्नेहमोक्षयोः ॥' (श्लो. 107) इति देवः । 'मोहनयोः—' इत्यपि—इति पुरुषकारः ।

क्ष्वेदकः-दिका, क्ष्वेदकः-दिका, [1]चिक्ष्विदिषकः-चिक्ष्वेदिषकः-षिका, चेक्ष्विदकः-दिका ;

क्ष्वेदिता-त्री, क्ष्वेदयिता-त्री, चिक्ष्विदिषिता-चिक्ष्वेदिषिता-त्री, चेक्ष्विदिता-त्री ;

क्ष्वेदन्-न्ती, क्ष्वेदयन्-न्ती, चिक्ष्विदिषन्-चिक्ष्वेदिषन्-न्ती ; —

क्ष्वेदिष्यन्-न्ती-ती, क्ष्वेदयिष्यन्-न्ती-ती, चिक्ष्विदिषिष्यन्-चिक्ष्वेदिषिष्यन्-न्ती-ती ;

— क्ष्वेदयमानः, क्ष्वेदयिष्यमाणः, चेक्ष्विद्यमानः, चेक्ष्विदिष्यमाणः ;

क्ष्वित्-क्ष्विद्-क्ष्विदौ-क्ष्विदः ; — —

[2]क्ष्विण्णः-क्ष्विण्णवान्, [3]प्रक्ष्विण्णम्-[A]प्रक्ष्वेदितं [वा अनेन], क्ष्वेदितः, चिक्ष्विदिषितः-चिक्ष्वेदिषितः, चेक्ष्विदितः-तवान् ;

क्ष्विदः, क्ष्वेदः, चिक्ष्विदिषुः-चिक्ष्वेदिषुः, चेक्ष्विदः ;

क्ष्वेदितव्यम्, क्ष्वेदयितव्यम्, चिक्ष्विदिषितव्यम्-चिक्ष्वेदिषितव्यम्, चेक्ष्विदितव्यम् ;

क्ष्वेदनीयम्, क्ष्वेदनीयम्, चिक्ष्विदिषणीयम्-चिक्ष्वेदिषणीयम्, चेक्ष्विदनीयम् ;

क्ष्वेद्यम्, क्ष्वेद्यम्, चिक्ष्विदिष्यम् चिक्ष्वेदिष्यम्, चेक्ष्विद्यम् ;

ईषत्क्ष्वेदः-दुःक्ष्वेदः-सुक्ष्वेदः ; — —

क्ष्विद्यमानः, क्ष्वेद्यमानः, चिक्ष्विदिष्यमाणः-चिक्ष्वेदिष्यमाणः, चेक्ष्विद्यमानः ;

क्ष्वेदः, क्ष्वेदः, चिक्ष्विदिषः-चिक्ष्वेदिषः, चेक्ष्विदः ;

---

1. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति क्त्वासनोः कित्त्वविकल्पाद्रूपद्वयम् ।
2. 'ञीतः क्तः' (3-2-187) इति वर्तमाने कर्तरि क्तः । 'आदितश्च' (7-2-16) इति निष्ठायामिण्णिषेधः । 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वम् । 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (8-4-2) इति णत्वम् । 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वम् ।
3. 'विभाषा भावादिकर्मणोः' (7-2-17) इतीड्विकल्पः । इट्पक्षे, 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' (1-2-19) इति कित्त्वनिषेधः । तेन गुणः ।

A. 'निकुञ्जे तस्य वर्तित्वा रम्ये प्रक्ष्वेदिताः परम् ।
मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥' भ. का. 7-103.

क्ष्वेदितुम्, क्ष्वेदयितुम्, चिक्ष्विदिषितुम्-चिक्ष्वेदिषितुम, चेक्ष्विदितुम्;
क्ष्वित्तिः, क्ष्वेदना, चिक्ष्विदिषा-चिक्ष्वेदिषा, चेक्ष्विदा;
क्ष्वेदनम्, क्ष्वेदनम्, चिक्ष्विदिषणम्-चिक्ष्वेदिषणम्, चेक्ष्विदनम्;
क्ष्विदित्वा-क्ष्वेदित्वा, क्ष्वेदयित्वा, चिक्ष्विदिषित्वा-चिक्ष्वेदिषित्वा, चेक्ष्विदित्वा;
प्रक्ष्विद्य, प्रक्ष्वेद्य, सञ्चिक्ष्विदिष्य-सञ्चिक्ष्वेदिष्य, सञ्चेक्ष्विद्य;
क्ष्वेदम् २, क्ष्विदित्वा २-क्ष्वेदित्वा २, } क्ष्वेदम् २, क्ष्वेदयित्वा २, } चिक्ष्विदिषम् २- चिक्ष्विदिषित्वा २-
चिक्ष्वेदिषम् २, चिक्ष्वेदिषित्वा २, } चेक्ष्विदम् २; चेक्ष्विदित्वा २. }

## (327) "ञि क्ष्विदा स्नेहनमोचनयोः"

(IV-दिवादिः-1244. सक. सेट्. पर.)

'क्ष्वेदत्यव्यक्तशब्दार्थे, क्ष्विद्यति स्नेहमोक्षयोः ॥' (श्लो. 107) इति देवः। अस्य धातोर्दैवादिकत्वात् क्ष्विद्यन्-न्ती, इति शतरि रूपमिति विशेषः। अन्यानि सर्वाण्यपि रूपाणि भौवादिकक्ष्विद (326) धातुवत् ज्ञेयानि।

## (328) "क्ष्वेलृ चलने" (I-भ्वादिः-539. सक. सेट्. पर.)

क्ष्वेलकः-लिका, क्ष्वेलकः-लिका, चिक्ष्वेलिषकः-षिका, चेक्ष्वेलकः-लिका;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेलतिवत् (262) ज्ञेयानि।

## (329) "खच भूतप्रादुर्भावे" (IX-क्र्यादिः-1531 अक. सेट्. पर.) [अ]

भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः।

खाचकः-चिका, खाचकः-चिका, चिखचिषकः-षिका, चाखचकः-चिका;
खचिता-त्री, खाचयिता-त्री, चिखचिषिता-त्री, चाखचिता-त्री;
[1]खच्नन्-ती, खाचयन्-न्ती, चिखचिषन्-न्ती; —
खचिष्यन्-न्ती-ती, खाचयिष्यन्-न्ती-ती, चिखचिषिष्यन्-न्ती-ती; —
— खाचयमानः, खाचयिष्यमाणः, चाखच्यमानः, चाखचिष्यमाणः;

---

1. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्नाप्रत्ययः। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः। 'स्तोः श्चुना श्चुः' (8-4-40) इति श्चुत्वम्।

[अ] 'खध—' इति धकारान्तं क्षीरस्वामी पपाठ। धकारान्तस्य रूपाणि उत्तरत्र प्रदर्शिष्यन्ते।

| | | | |
|---|---|---|---|
| [1]खक्-खग्-खचौ-खचः ; | — | — | |
| [A]खचितम्-तः, | खाचितः, | चिखचिषितः, | चाखचितः-तवान् ; |
| खचः, | खाचः, | चिखचिषुः, | चाखचः ; |
| खचितव्यम्, | खाचयितव्यम्, | चिखचिषितव्यम्, | चाखचितव्यम् ; |
| खचनीयम्, | खाचनीयम्, | चिखचिषणीयम्, | चाखचनीयम् ; |
| खाच्यम्, | खाच्यम्, | चिखचिष्यम्, | चाखच्यम् ; |
| ईषत्खचः-दुष्खचः-सुखचः ; | — | — | |
| खच्यमानः, | खाच्यमानः, | चिखचिष्यमाणः, | चाखच्यमानः ; |
| खाचः, | खाचः, | चिखचिषः, | चाखचः ; |
| खचितुम्, | खाचयितुम्, | चिखचिषितुम्, | चाखचितुम् ; |
| खक्तिः, | खाचना, | चिखचिषा, | चाखचा ; |
| खचनम् | खाचनम्, | चिखचिषणम्, | चाखचनम् ; |
| खचित्वा, | खाचयित्वा, | चिखचिषित्वा, | चाखचित्वा ; |
| प्रखच्य, | प्रखाच्य, | प्रचिखचिष्य, | प्रचाखच्य ; |
| खाचम् २, खचित्वा २, | खाचम् २, खाचयित्वा २, | चिखचिषम् २, चिखचिषित्वा २, | चाखचम् २ ; चाखचित्वा २. |

## (330) "खक्ख हसने" (I-भ्वादिः-88. अक. सेट्. पर.)

'खर्खे' इति क्षीरस्वामी । अन्ये तु 'कख हसने' इत्यस्यैव पाठान्तरमिदम् इति मन्यन्ते । भौवादिककर्जतिवत् (169) सर्वाणि रूपाणि ज्ञेयानि । धातुरयं सिद्धान्तकौमुद्यां तु नोपलभ्यते ।

## (331) "खज मन्थे" (I-भ्वादिः 232. सक. सेट्. पर.)

मन्थः = विलोडनम् ।

खाजकः-जिका, खाजकः-जिका, चिखजिषकः-षिका, चाखजकः-जिका ; इत्यादीनि सर्वाण्यपि रूपाणि क्रैयादिक (329) खचधातुवत् ज्ञेयानि ।

---

1. 'चोः कुः' (8-2-30) इति कुत्वम् ।

A. 'प्रुष्णन् सतां प्रियमयं प्लुषिताङ्गरागः पुष्णन् मुदं मृगदृशां रिपुधाम मुष्णन् ।
वक्त्रारविन्दखचितस्मितखौनदाभो रङ्गं गतोऽसभुवि दन्तवरं प्रगृह्णन् ॥'
धा. का. 3-12.

(332) " खजि वैकल्ये " (I-भ्वादिः-233. अक. सेट्. पर.)

'गतिवैकल्ये' इति क्षीरस्वामि-माधवादयः ।

खञ्जकः-ञ्जिका, खञ्जकः-ञ्जिका, चिखञ्जिषकः-षिका, चाखञ्जकः-ञ्जिका; इत्यादीनि सर्वाणि रूपाणि भौवादिक 'कदि' धातुवत (163) ज्ञेयानि । [1]खञ्जनः=पक्षी ।

(333) " खट काङ्क्षायाम् " (I-भ्वादिः-309. सक. सेट्. पर.)

खाटकः-टिका, खाटकः-टिका, चिखटिषकः-षिका, चाखटकः-टिका; इत्यादीनि सर्वाणि रूपाणि भौवादिक 'कख' (141) धातुवत् बोध्यानि ।

खटः=तृणविशेषः ।

(334) " खट्टसंवरणे " (X-चुरादिः-1633. सक.सेट्. उभ.)

खट्टकः-ट्टिका, चिखट्टयिषकः-षिका; इत्यादीनि,

'कुट्ट च्छेदनभर्त्सनयोः' (207) इति चौरादिकधातुवत् सर्वाणि रूपाण्यूह्यानि ।

(335) " खड भेदने " (X-चुरादिः-1580. सक. सेट्.उभ.)

खाडकः-डिका, चिखाडयिषकः-षिका; इत्यादीनि सर्वाणि रूपाणि चौरादिककाणयतिवत् (159) बोध्यानि ।

(336) " खडि भेदने " (I-भ्वादिः-283. सक. सेट्. आत्म.)

'मन्थे—' इति पुरुषकारसम्मतः पाठः ।

'मन्थार्थे खण्डते खण्डेः, भेदार्थे खण्डयेण्णिचि ।' (श्लो.85) इति देवः ।

खण्डकः-ण्डिका, खण्डकः-ण्डिका, चिखण्डिषकः-षिका, चाखण्डकः ण्डिका; इत्यादीनि सर्वाणि रूपाणि भौवादिककण्डतिवत् (153) ज्ञेयानि ।

(337) " खडि भेदने " (X-चुरादिः-1581. सक. सेट्. उभ.)

'मन्थार्थे खण्डते खण्डेः, भेदार्थे खण्डयेण्णिचि ।' (श्लो. 85) इति देवः ।

खण्डकः-ण्डिका, चिखण्डयिषकः-षिका; इत्यादीनि सर्वाणि रूपाणि चौरादिककण्डयतिवत् (155) ज्ञेयानि ।

---

1. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छीलिको युच् ।

(338) "खद स्थैर्ये हिंसायां च" ([. भ्वादिः-50. सक. सेट्. पर.)

चकारात् भक्षणेऽपि। स्थैर्येऽकर्मकः ।

खादकः-दिका, खादकः-दिका, चिखदिषकः-षिका, चाखदकः-दिका ;
खदिता-त्री, खादयिता-त्री, चिखदिषिता-त्री, चाखदिता-त्री ;
[A]खदन्-न्ती, [1]खादयन्-न्ती, चिखदिषन्-न्ती ; —
खदिष्यन्-न्ती-ती, खादयिष्यन्-न्ती-ती, चिखदिषिष्यन्-न्ती-ती ; —
— खादयमानः, खादयिष्यमाणः, चाखद्यमानः, चाखदिष्यमाणः ;
खत्-खद्-खदौ-खदः ; — —
खदितम्-तः, खादितः, चिखदिषितः, चाखदितः-तवान् ;
खदः, [2]यवखदा, खादः, चिखदिषुः, चाखदः ;
खदितव्यम्, खादयितव्यम्, चिखदिषितव्यम्, चाखदितव्यम् ;
खदनीयम्, खादनीयम्, चिखदिषणीयम्, चाखदनीयम् ;
खाद्यम्, खाद्यम्, चिखदिष्यम्, चाखद्यम् ;
ईषत्खदः-दुष्खदः-सुखदः ; — —
खद्यमानः, खाद्यमानः, चिखदिष्यमाणः, चाखद्यमानः ;
खादः, खादः, चिखदिषः, चाखदः ;
खदितुम्, खादयितुम्, चिखदिषितुम्, चाखदितुम् ;
खत्तिः, खादना, चिखदिषा, चाखदा ;
खदनम्, खादनम्, चिखदिषणम्, चाखदनम् ;
खदित्वा, खादयित्वा, चिखदिषित्वा, चाखदित्वा ;
प्रखद्य, प्रखाद्य, प्रचिखदिष्य, प्रचाखद्य ;
खादम् २, खादम् २, चिखदिषम् २, चाखदम् २ ;
खदित्वा २, खादयित्वा २, चिखदिषित्वा २, चाखदित्वा २ ;
[3]खदिरः.

---

1. 'निगरणचलनार्थेभ्यः—' (1-3-87) इति निषेधात् अस्य धातोः भक्षणार्थे ण्यन्तात् शतैव ; न शानच्। भक्षणादन्यत्र तु शानच् स्यादेव ।
2. यवस्य सारः इत्यर्थः। स्त्रीत्वं स्वभावात्।
3. 'अजिरशिशिर—' [द. उ. 8-27] इत्यादिना किरच् प्रत्ययः। खदिरः= वृक्षविशेषः ।

A. 'पलान्यखाद्यानि खदन् यदद्वपुः गदन् अवाच्यानि रदन् सतां मनः ।
नदन् मदार्दितसंक्षयोऽधुना क्षणं खलो नर्दतु गर्दभस्वरैः॥' धा: का. 1-8.

(339) "खनु अवदारणे" (1-भ्वादिः-878. सक. सेट्. उभ.)

खानकः-निका, खानकः-निका, [1]चिखनिषकः-षिका, [2]चाखायकः-यिका, चङ्खनकः-चंखनकः-निका;

खनिता-त्री, खानयिता-त्री, चिखनिषिता-त्री, चङ्खनिता-त्री, चाखायिता-त्री;

खनन्-न्ती, खानयन्-न्ती, चिखनिषन्-न्ती, —

खनिष्यन्-न्ती-ती, खानयिष्यन्-न्ती-ती, चिखनिषिष्यन्-न्ती-ती; —

[3]प्रनिखनमानः, खानयमानः, चिखनिषमाणः, चाखायमानः-चङ्खन्यमानः;

प्रनिखनिष्यमाणः, खानयिष्यमाणः, चिखनिषिष्यमाणः, चाखायिष्य-माणः-चङ्खनिष्यमाणः;

[4]सुखाः-सुखौ-सुखाः; — — —

---

1. 'जनसनखनां सञ्झलोः' (6-4-42) इति प्राप्तमात्वं, क्ङित्सन्परकत्वाभावात् न भवति। एवं सन्नन्ते सर्वत्र बोध्यम्।

2. 'ये विभाषा' (6-4-43) इति वैकल्पिके आत्वे, चाखायकः इति रूपम्। आत्वाभावपक्षे 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुगागमः। 'स च पदान्तवद्वाच्यः' (वा. 7-4-85) इति वचनात् परसवर्णविकल्पः। एवं यङन्ते सर्वत्र रूपत्रयं बोध्यम्। एवं यक्यपि ज्ञेयम्। यङ्वयवाकारलोपस्य स्थानिवद्भावेनाजादिक्ङित्प्रत्ययपरकत्वात् 'गमहन–' (6-4-98) इत्युपधालोपो न शङ्क्यः; तत्र, 'अनङि' इति पर्युदासेन, औपदेशिकाजादिप्रत्यये एव लोप इति भट्टोजिदीक्षितैः 'न धातुलोप—' (1-1-4) इत्यत्रोक्तत्वात्, तदनुसारेण अकारलोपाघटितानि रूपाणि प्रदर्शितानि। नागेशभट्टैस्तु— औपदेशिकाजादावित्यर्थो नाश्रितः। अतः 'जङ्गमकः' इति रूपं 'न धातुलोप—' (1-1-4) सूत्रे उद्योते प्रदर्शितम्। प्राचीननवीनयोर्बहुषु लक्ष्येषु आशयभेदो यथा भवति— तथाऽत्रापीति बोध्यम्।

3. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इत्यत्र, 'अकखादौ' इत्युक्तेः वैकल्पिकं णत्वं न।

4. 'जनसनखनक्रमगमो विट्' (3-2-67) इति विट्प्रत्यये, 'विड्वनोरनुनासिकस्यात्' (6-4-41) इति धातुनकारस्य आत्वे, सवर्णदीर्घे च रूपम्।

[1]खातम्-[A]खातः-खातवान्, खानितः, चिखनिषितः, चाखायितः-चङ्खनितः-तवान्;

खनः, [2]खनित्रम्, [3]परिखा-खम्, [4]कूपखानः, [5]खनकः-खनिकी, खानः, चिखनिषुः, [6]चङ्खनः;

खनितव्यम्, खानयितव्यम्, चिखनिषितव्यम्, चाखायितव्यम्-चङ्खनितव्यम्;

खननीयम्, खाननीयम्, चिखनिषणीयम्, चाखायनीयम्-चङ्खननीयम्;

[7]खेयम्[B], खान्यम्, चिखनिष्यम्, चाखाय्यम्-चङ्खन्यम्;

ईषत्खनः-दुष्खनः-सुखनः; — —

खायमानः-खन्यमानः, खान्यमानः, चिखनिष्यमाणः, चाखाय्यमानः-चङ्खन्यमानः;

---

1. उदित्त्वेन क्त्वायामिड्विकल्पात्, 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधः। 'जनसनखनां सञ्झलोः' (6-4-42) इत्यात्वम्। एवं क्तिन्यपि आत्वं ज्ञेयम्।
2. 'अर्तिलूधूसूखनसहचर इत्रः' (3-2-184) इति करणे इत्रप्रत्ययः।
3. 'अन्येष्वपि दृश्यते' (3-2-101) इति कर्मणि डः प्रत्ययः। एवम्, 'खम्' इत्यत्रापि ज्ञेयम्।
4. 'कर्मण्यण्' (3-2-1) इत्यण् प्रत्ययो भवति।
5. 'शिल्पिनि ष्वुन्' (3-1-145) इत्यत्र, 'नृतिखनिरञ्जिभ्य एव' (वा. 3-1-145) इति वचनात् कर्तरि ष्वुन्। षित्वात्, 'षिद्गौरादिभ्यः—' (4-1-41) इति स्त्रियां ङीष्।
6. यङन्तात् पचाद्यचि (3-1-134), 'यङोऽचि च' (2-4-74) इति लुकि यादिप्रत्ययपरकत्वाभावादात्वं न भवति।
7. 'ई च खनः' (3-1-111) इति क्यप्सन्नियोगेन धातुनकारस्य ईकारादेशः। गुणः।

A. 'हृता जनस्थानसदो निकायाः कृता जितोत्खातभटद्रुमा पूः।
सदांसि दग्धानि विधेयमस्मिन् यद् बन्धुना तद् घटयस्व तस्मिन्॥' भ.का. 12-5.
'प्रवुन्यवेणीजववेनमाना खातान्तिका चीवरिभिर्निषादैः।
वाप्या व्ययद्दाशविलोकमेषप्रेषज्झषा यासदघं स्पशन्ती॥' धा. का. 2-27.

B. 'नाखेयः सागरोऽप्यन्यः तस्य सद्भृत्यशालिनः।
मन्युस्तस्य त्वया मार्ग्यः मृज्यः शोकश्च तेन ते॥' भ. का. 6-56.

आखानः, [1]खनः-[A]आखनः-खानः, [2]आखः-आखरः-आखनिकः-आखनिकवकः, खानः, चिखनिषः, चाखायः-चङ्खनः ;
खनितुम्, खानयितुम्, चिखनिषितुम्, चाखायितुम्-चङ्खनितुम् ;
खातिः, खानना, चिखनिषा, चाखाया-चङ्खना ;
खननम्, खाननम्, चिखनिषणम्, चाखायनम्-चङ्खननम् ;
[3]खनित्वा-खात्वा, खानयित्वा, चिखनिषित्वा, चाखायित्वा-चङ्खनित्वा ;
[4]प्रखाय-प्रखन्य, प्रखान्य, प्रचिखनिष्य, प्रचाखाय्य-प्रचङ्खन्य ;
खानम् २, खनित्वा२, खात्वा २, } खानम् २, खानयित्वा २, } चिखनिषम् २, चिखनिषित्वा २, }
[5]आखुः, [6]मुखम्, [7]खनिः. चाखायम् २-चङ्खनम् २ ; चाखायित्वा २-चङ्खनित्वा २; }

## (340) "खर्ज पूजने च" (I-भ्वादिः-229. सक. सेट्. पर.)

चकारात् व्यथने । 'खर्ज मार्जने' इति क्षीरस्वामी ।
खर्जकः-र्जिका, खर्जकः-र्जिका, चिखर्जिषकः-षिका, चाखर्जकः-र्जिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिक-व्यथनार्थककर्जतिवत् (169) ज्ञेयानि । [B]खर्जनम् ।

---

1. 'खनो घ च' (3-3-125) इति अकर्तरि कारके घः प्रत्ययः । सूत्रे चकारात् घञि 'खानः' इत्यपि भवति ।
2. 'खनेः डडरेकेकवका वाच्याः' (वा. 3-3-125) इति वचनेन ड-डर-इक-इकवकप्रत्ययाः क्रमेण भवन्ति । आखादयः खनित्रवाचकाः ।
3. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इडभावपक्षे आत्वे रूपम् ।
4. 'ये विभाषा' (6-4-43) इत्यात्वविकल्पः । तेन रूपद्वयम् ।
5. औणादिके [द. उ. 1-118] कुप्रत्यये, तस्य डिद्वद्भावाट्टिलोपे च रूपम् । आ= समन्तात् खनतीति आखुः=मूषकः ।
6. 'डस् खनेर्मुट् चोदात्तः [द. उ. 3-51] इति डस्प्रत्यये, मुडागमे च रूपम् । —'प्राक् खनो मुडुदात्तश्च ततोऽच्च प्रत्ययो भवेत् । प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः ॥' इति निरुक्तम्—' इत्यमरव्याख्यायां सुधायाम् ।
7. 'खनिकष्यज्यसि—' [द. उ. 1-68] इति इः प्रत्ययः । खन्यते इति खनिः= आकरः । 'खनिः स्त्रियामाकरः स्यात्—' इत्यमरः ।

A. 'हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभम् ।
शरीराखनतुण्डाग्रं प्राप्याशु शर्म दुर्लभम् ॥' भ. का. 7-83.

B. 'अकर्जितोऽसौ हरिखर्जनोत्कधीः अजत्पशुव्रातमजेन तेजितम् ।
लसत्खजाकं व्रजमासदत् क्षमात् अखञ्जितै रेजितचामरैर्हयैः ॥' धा. का. 1-31.

### (341) "खर्द दन्दशूके" (I-भ्वादिः-60. सक. सेट्. पर.)

दन्दशूके=दन्दशूककर्तृकक्रियायामित्यर्थः।

खर्दकः-र्दिका, खर्दकः-र्दिका, चिखर्दिषकः-षिका, चाखर्दकः-र्दिका ; इत्यादीनि सर्वाण्यपि रूपाणि व्यथनार्थककर्जतिवत् (169) ज्ञेयानि। [A]खर्दः।

### (342) "खर्ब गतौ" (I-भ्वादिः-421. सक. सेट्. पर.)

खर्बकः-र्बिका, खर्बकः-र्बिका, चिखर्बिषकः-षिका, चाखर्बकः-र्बिका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककर्बतिवत् (173) ज्ञेयानि।

### (343) "खर्व दर्पे" (I-भ्वादिः-582. अक. सेट्. पर.)

खर्वकः-र्विका, खर्वकः-र्विका, चिखर्विषकः-षिका, चाखर्वकः-र्विका ; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककर्वतिवत् (173-A) ज्ञेयानि। [B]खर्वितः।

### (344) "खल सञ्चये च" (I-भ्वादिः-545. सक. सेट्. पर.)

चकारात् चलने च—इति क्षीरस्वामी।

खालकः-लिका, खालकः-लिका, चिखलिषकः-षिका, चाखलकः-लिका ;
खलिता-त्री, खालयिता-त्री, चिखलिषिता-त्री, चाखलिता-त्री ;
खलन्-न्ती, खालयन्-न्ती, चिखलिषन्-न्ती ; —
खलिष्यन्-न्ती-ती, खालयिष्यन्-न्ती-ती, चिखलिषिष्यन्-न्ती-ती ; —
— खाल्यमानः, खालयिष्यमाणः, चाखल्यमानः, चाखलिष्यमाणः ;
सुखल्-सुखलौ-सुखलः ; — — —
खलितम्-तः, खालितः, चिखलिषितः, चाखलितः-तवान् ;
[1]खलः[C], खालः, चिखलिषुः, चाखलः ;
खलितव्यम्, खालयितव्यम्, चिखलिषितव्यम्, चाखलितव्यम् ;

---

1. खलति=सञ्चिनोति पापादिकमिति खलः=मूर्खः। पचाद्यच्।

A. 'अतर्दकास्त्वथ विकर्दमाशयाः प्रखर्द्वृत्तैरसमन्वितान्तिकाः।
श्रुतान्दुकैः चित्तगजेन्द्ररोधिनस्तुष्यन्तु सन्तो गुणबिन्दुलोलुपाः॥' धा. का. 1-9.

B. 'अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसम्बर्वकदुष्टगर्वकम्।
कर्वद्भ्रूकेलिरसेन खर्वितं गर्वविकं शर्वपरेण सर्वताम्॥' धा. का. 1-74.

C. 'सुमार्गशेलात् स्खलतां खलात्मनां गलच्छिदार्थं सलितं महीतलम्।
दलत्तनुप्रश्वलितान् परान् प्रति प्रश्वल्लिताखोडमुदर्शनायुधम्॥' धा. का. 1-70.

खलनीयम्, खालनीयम्, चिखलिषणीयम्, चाखलनीयम्;
खाल्यम्, खाल्यम्, चिखलिष्यम्, चाखल्यम्;
ईषत्खलः-दुष्खलः-सुखलः; — —
खल्यमानः, खाल्यमानः, चिखलिष्यमाणः, चाखल्यमानः;
खालः, [1]खलः, [2]खलतिः, खालः, चिखलिषः, चाखलः;
खलितुम्, खालयितुम्, चिखलिषितुम्, चाखलितुम्;
[3]खलितिः, खालना, चिखलिषा, चाखला;
खलनम्, खालनम्, चिखलिषणम्, चाखलनम्;
खलित्वा, खालयित्वा, चिखलिषित्वा, चाखलित्वा;
प्रखल्य, प्रखाल्य, प्रचिखलिष्य, प्रचाखल्य;
खालम् २, } खालम् २, } चिखलिषम् २, } चाखलम् २; }
खलित्वा २, } खालयित्वा २, } चिखलिषित्वा २, } चाखलित्वा २. }

## (345) "खव [च] भूतप्रादुर्भावे" (IX-क्र्यादिः-1531.अक. सेट्. पर.)

भूतप्रादुर्भावः=अतिक्रान्तोत्पत्तिः। [अ]

खावकः-विका, खावकः-विका, चिखविषकः-षिका, चाखवकः-विका;
खविता-त्री, खावयिता-त्री, चिखविषिता-त्री, चाखविता-त्री;
[4]खौनन्-[A]ती, खावयन्-न्ती, चिखविषन्-न्ती; —

---

1. 'खनो घ च' (3-3-125) इत्यत्र चकारात् घोऽन्यत्रापीति वृत्तिकारादिभिर्व्याख्यातम्। तेन घप्रत्यये खलः—इति भवति। खल्यते=सञ्चीयते धान्यादिकमिति अधिकरणे घः।.धान्यसञ्चयाधिकरणस्थानम्।
2. 'भीमादयोऽपादाने' (3-4-74) इत्यत्र पाठात् अपादाने अतिप्रत्यये खलतिः। खर्वाटः। धातूनामनेकार्थत्वात् स्खलन्ति=गलन्ति केशादिकमस्मादिति व्युत्पत्तिः।
3 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति पर्युदासादिड् भवति।
4. क्र्यादित्वात् 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्नाप्रत्ययः। 'सार्वधातुकमपित्' (1-2-4) इति तस्य ङिद्वद्भावः। 'च्छ्वोः शूडनुनासिके च' (6-4-19) इति वकारस्य ऊठ्। 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धिः। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः।

A. 'प्रुष्णन् सतां प्रियमयं प्लुषिताङ्गरागः पुष्णन् मुदं मृगदृशां रिपुधाम मुष्णन्।
वक्त्रारविन्दखचितस्मितखौनदाभः रङ्गं गतोऽप्रभुवि दन्तवरं प्रगृह्णन्॥'

धा. का. 3. 12.

[अ] 'खच' (329) इत्यस्य क्षीरस्वामिसम्मतः पाठोऽयम्।

खविष्यन्-न्ती-ती, खावयिष्यन्-न्ती-ती, चिखविषिष्यन्-न्ती-ती ; —

खावयमानः, खावयिष्यमाणः, चाखव्यमानः, चाखविष्यमाणः ;

[1]खौः-खावौ-खावः ; — —

खवितम्-तः, खावितः, चिखविषितः, चाखवितः-तवान् ;

खवः, खावः, चिखविषुः, चाखवः ;

खवितव्यम्, खावयितव्यम्, चिखविषितव्यम्, चाखवितव्यम् ;

खवनीयम्, खावनीयम्, चिखविषणीयम्, चाखवनीयम् ;

खाव्यम्, खाव्यम्, चिखविष्यम्, चाखव्यम् ;

ईषत्खवः-दुष्खवः-सुखवः ; — —

खव्यमानः, खाव्यमानः, चिखविष्यमाणः, चाखव्यमानः ;

खावः, खावः, चिखविषः, चाखवः ;

खवितुम्, खावयितुम्, चिखविषितुम्, चाखवितुम् ;

[2]खौतिः, खावना, चिखविषा, चाखवा ;

खवनम्, खावनम्, चिखविषणम्, चाखवनम् ;

खवित्वा, खावयित्वा, चिखविषित्वा, चाखवित्वा ;

प्रखव्य, प्रखाव्य, प्रचिखविष्य, प्रचाखव्य ;

खावम् २, } खावम् २, } चिखविषम् २, } चाखवम् २ ; }
खवित्वा २, } खावयित्वा २, } चिखविषित्वा २, } चाखवित्वा २. }

(346) “खष हिंसार्थाः” (I-भ्वादिः-686. सक. सेट्. पर.)

खाषकः-षिका, खाषकः-षिका, चिखषिषकः-षिका, चाखषकः-षिका ;

खषिता-त्री, खाषयिता-त्री, चिखषिषिता-त्री, चाखषिता-त्री ;

खषन्-न्ती, खाषयन्-न्ती, चिखषिषन्-न्ती ; —

खषिष्यन्-न्ती-ती, खाषयिष्यन्-न्ती-ती, चिखषिषिष्यन्-न्ती-ती ; —

— खाषयमाणः, खाषयिष्यमाणः, चाखष्यमाणः, चाखषिष्यमाणः ;

---

1. क्विपि, ऊठ्। वृद्धिः। रुत्वविसर्गौ।

2. 'तितुत्रतथ—' (7-2-9) इत्यादिना इण्णिषेधः। ऊठ्। वृद्धिः।

[1]खट्-खड्-खषौ-खष: ; — — —
खषितम्-त:, खाषित:, चिखषिषित:, चाखषित:-तवान् ;
खष:, [2]सुरकाषिखाषी[A], खाष:, चिखषिषु:, चाखष: ;
खषितव्यम्, खाषयितव्यम्, चिखषिषितव्यम्, चाखषितव्यम् ;
खषणीयम्, खाषणीयम्, चिखषिषणीयम्, चाखषणीयम् ;
खाष्यम्, खाष्यम्, चिखषिष्यम्, चाखष्यम् ;
ईषत्खष:-दुष्खष:-सुखष: ; — —
खष्यमाण:, खाष्यमाण:, चिखषिष्यमाण:, चाखष्यमाण: ;
खाष:, खाष:, चिखषिष:, चाखष: ;
खषितुम्, खाषयितुम्, चिखषिषितुम्, चाखषितुम् ;
खष्टि:, खाषणा, चिखषिषा, चाखषा ;
खषणम्, खाषणम्, चिखषिषणम्, चाखषणम् ;
खषित्वा, खाषयित्वा, चिखषिषित्वा, चाखषित्वा ;
विखष्य, विखाष्य, विचिखषिष्य, प्रचाखष्य ;
खाषम् २, } खाषम् २, } चिखषिषम् २, } चाखषम् २ ; }
खषित्वा २, } खाषयित्वा २, } चिखषिषित्वा २, } चाखषित्वा २. }

## (347) " खाद्द भक्षणे " (I-भ्वादि:-49. सक. सेट्. पर.)

खादक:-दिका, खादक:-दिका, चिखादिषक:-षिका, चाखादक:-दिका ;
खादिता-त्री, खादयिता-त्री, चिखादिषिता-त्री, चाखादिता-त्री ;
खादन्-न्ती, [3]खादयन् [ अन्नं वटुना ]-न्ती, चिखादिषन्-न्ती ; —

---

1. 'वाऽवसाने' (8-4-56) इति चर्त्वविकल्प: ।
2. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनि: ।
3. 'निगरणचलनार्थेभ्यश्च' (1-3-87) इति ण्यन्तात् शतैव । 'आदिखाद्योर्न' इति अणौ कर्तु: णौ कर्मसंज्ञा न भवति ।

A. 'इत्युक्त: सुरकाषिखाषिणमसावूचे जगच्छेषकान्
नित्यं ते जषते झषादिवपुषे रक्षश्वमूशाषिणे ।
केश्यादीन् वषणोत्सुकान् प्रशमते भूयोऽपि रोषिष्यते
रेखोऽन्यान् भषतो नमोऽस्तु कमलाकोष्णस्तनं जोषते ॥' धा. का. 1-87.

खादिष्यन्-न्ती-ती, खादयिष्यन्-न्ती-ती, चिखादिषिष्यन्-न्ती-ती ; —

— — चाखाद्यमानः, चाखादिष्यमाणः ;

सुखात्-सुखाद्-सुखादौ-सुखादः ; — —

[1]खादितः-[A]तम्, [2]खादितः, चिखादिषितः, चाखादितः-तवान् ;

खादः, [3]खादकः, [4]सर्पखादी, खादः, चिखादिषुः, चाखादः ;

खादितव्यम्, खादयितव्यम्, चिखादिषितव्यम्, चाखादितव्यम् ;

खादनीयम्, खादनीयम्, चिखादिषणीयम्, चाखादनीयम् ;

[B]खाद्यम्, खाद्यम्, चिखादिष्यम्, चाखाद्यम् ;

ईषत्खादः-दुष्खादः-सुखादः ; — —

खाद्यमानः, खाद्यमानः, चिखादिष्यमाणः, चाखाद्यमानः;

खादितुम्, खादयितुम्, चिखादिषितुम्, चाखादितुम्;

[5]खादा, खादना, चिखादिषा, चाखादा ;

खादनम्, खादनम्, चिखादिषणम्, चाखादनम् ;

खादित्वा, खादयित्वा, चिखादिषित्वा, चाखादित्वा ;

सङ्खाद्य, प्रखाद्य, सञ्चिखादिष्य, सञ्चाखाद्य ;

खादम् २, खादित्वा २, } खादम् २, खादयित्वा २, } चिखादिषम् २, चिखादिषित्वा २, } चाखादम् २ ; चाखादित्वा २. }

---

1. 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (3-4-76) इति अधिकरणेऽपि क्तः। इदमेषां खादितम्। प्रत्यवसानम्=भक्षणम्। एवं कर्तर्यपि।
2. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः।
3. 'निन्दहिंसक्लिशखाद—' (3-2-146) इत्यादिना तच्छीलादिषु कर्तृषु वुञ्।
4. णिनिस्ताच्छील्ये।
5. 'गुरोश्च हलः' (3-3-103) इति स्त्रियाम् अकारप्रत्ययः।

A. 'आशङ्कमानो वैदेहीं खादितां निहतां मृताम्।
स शत्रुघ्नस्य सोदर्यं दूरादायान्तमैक्षत ॥' भ. का. 6-6.

B. 'पलान्यखाद्यानि खदन् बदद्वपुः गदन् अवाच्यानि रदन् सतां मनः।
नदन् मदाद् अर्दितसंक्षयोऽधुना क्षणं खलो नर्दतु गर्दभस्वरैः ॥' धा. का. 1-8.

## (348) "खिट त्रासे" (I-भ्वादिः-302. अक. सेट्. पर.)

त्रासः=भयोत्पादनम् ।

खेटकः-टिका, खेटकः-टिका, चिखेटिषकः-चिखिटिषकः-षिका, चेखेटकः-टिका ; इत्यादीनि 'किट त्रासे' (190) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि । [A]प्रखेटकः । आखेटकम्=मृगया ।

## (349) "खिद दैन्ये" (IV-दिवादिः-1170. अक. अनि. आत्म.)

'दैन्येऽर्थे खिद्यते खिन्ते, परिघाते[तापे] तु खिन्दति ।' (श्लो. 112) इति देवः ।

खेदकः-दिका, खेदकः-दिका, [1]चिखित्सकः-त्सिका, [2]चेखिदकः-दिका ;
खेत्ता-त्त्री, खेदयिता-त्री, चिखित्सिता-त्री, चेखिदिता-त्री ;
खेदयन्-न्ती, खेदयिष्यन्-न्ती-ती ; — —
[3]खिद्यमानः, खेदयमानः, चिखित्समानः, चेखिद्यमानः ;
खेत्स्यमानः, खेदयिष्यमाणः, चिखित्सिष्यमाणः, चेखिदिष्यमाणः ;
खित्-खिद्-खिदौ-खिदः ; — —
[4]खिन्नम्-खिन्नः-खिन्नवान्, खेदितः, चिखित्सितः, चेखिदितः-तवान् ;
[5]खिदः, खेदनः[6], खेदः, चिखित्सुः, चेखिदः ;
खेत्तव्यम्, खेदयितव्यम्, चिखित्सितव्यम्, चेखिदितव्यम् ;
खेदनीयम्, खेदनीयम्, चिखित्सनीयम्, चेखिदनीयम् ;
खेद्यम्, खेद्यम्, चिखित्स्यम्, चेखिद्यम् ;
ईषत्खेदः-दुष्खेदः-सुखेदः ; — —

---

1. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम् । तेनाङ्गस्य गुणो न ।
2. 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणः ।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन्विकरणप्रत्ययः ।
4. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति धातुदकारनिष्ठातकारयोः नत्वम् ।
5. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः प्रत्ययः ।
6. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।

A. 'लाटाहेशाटीवटितैर्वटुव्रजैर्वृतान् खलैश्चाकिटितान् प्रखेटकैः ।
अशोटनीयैः सुधियामसेटकैर्युतान् जटाझाटधरैश्च केश्चन ॥' धा. का. 1-40.

| | | | |
|---|---|---|---|
| खिद्यमानः, | खेद्यमानः, | चिखित्स्यमानः, | चेखिद्यमानः ; |
| [A]खेदः, | खेदः, | चिखित्सः, | चेखिदः ; |
| खेत्तुम्, | खेदयितुम्, | चिखित्सितुम्, | चेखिदितुम् ; |
| [1]खिदा, | खेदना, | चिखित्सा, | चेखिदा ; |
| खेदनम्, | खेदनम्, | चिखित्सनम्, | चेखिदनम् ; |
| खित्त्वा, | खेदयित्वा, | चिखित्सित्वा, | चेखिदित्वा ; |
| सङ्खिद्य, | सङ्खेद्य, | प्रचिखित्स्य, | प्रचेखिद्य ; |
| खेदम् २, खित्त्वा २, | खेदम् २, खेदयित्वा २, | चिखित्सम् २, चिखित्सित्वा २, | चेखिदम् २ ; चेखिदित्वा २. |

## (350) "खिद परिघाते" (VI-तुदादिः-1436. सक. अनि. पर.)

'परितापे' इति क्षीरस्वामी । मुचादिः ।

'दैन्येऽर्थे खिद्यते खिन्ते, परितापे (घाते) तु खिन्दति ।' (श्लो-112) इति देवः । [2]खिन्दन्-न्ती-ती, [B]खेत्स्यन्-न्ती-ती, [C]परिखेदितम्, इत्यादीनि रूपाण्यस्य धातोः विशेषः । अन्यानि सर्वाण्यपि रूपाणि दैवादिकदैन्यार्थक (349) खिद्यतिवत् ज्ञेयानि ।

## (351) "खिद दैन्ये" (VII-रुधादिः-1449. अक. अनि. आत्म.)

'दैन्येऽर्थे खिद्यते खिन्ते, परितापे (घाते) तु खिन्दति ।' (श्लो. 112) इति देवः ।

---

1. भिदादिपाठात् (3-3-104) खिदा इत्यत्राङ् ।
2. 'तुदादिभ्यः शः' (3-1-77) इति शः विकरणप्रत्ययः । 'शे मुचादीनाम्' (7-1-59) इति नुम् । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुमो वैकल्पिकत्वम् ।

A. 'तन्मृष्यमाणास्त्वथ शुच्यदङ्गकाः भृत्याः सुनद्धं बहुरक्तमंशुकम् ।
विसृज्य शप्यन्त इमं प्रदुद्रुवुः कृष्णः प्रपेदे वसनान्यखेद्वान् ॥' धा. का. 2-61.

B. 'मित्रैः संमिलमान एत्य नगरोद्यानं विमुञ्चन् भियं
गोपानां भयलोपिवाग्भिरबलाविज्ञानुलेपं वहन् ।
भुक्त्वा गोरससिक्तमन्नमजितः कंसस्य कृन्तन् मुदं
तं खेत्स्यन् पिशिताशदारुणमसौ मोदेन निन्ये निशाम् ॥' धाः काः 2-85.

C. 'परिखेदितविन्ध्यवीरुधः परिपीतामलनिर्झराम्भसः ।
दुधुवुर्मधुकाननं ततः कपिनागा मुदिताङ्गदाज्ञया ॥' भ. का. 10. 28.

[1]खिन्दानः,[A] खेत्स्यमानः, खेदः[B] ;

इति रूपाणीति विशेषः। अन्यानि सर्वाणि रूपाणि दैन्यार्थकदैवादिकखिद्यतिवत् (349) ज्ञेयानि।

(352) "खुङ् शब्दे" (I-भ्वादिः-954. अक. अनि. आत्म.)

खावकः-विका, खावकः-विका, [2]चुखूषकः-षिका, [3]चोखूयकः-यिका ;
खोता-त्री, खावयिता-त्री, चुखूषिता-त्री, चोखूयिता-त्री ;
— खावयन्-न्ती, खावयिष्यन्-न्ती-ती ; —
खवमानः, खावयमानः, चुखूषमाणः, चोखूयमानः ;
खोष्यमाणः, खावयिष्यमाणः, चुखूषिष्यमाणः, चोखूयिष्यमाणः ;
[4]सङ्खुत्-सङ्खुतौ-सङ्खुतः ; — —
खुतम्-तः, खावितः, चुखूषितः, चोखूयितः-तवान् ;
खवः, [5]खवनः, खावः, चुखूषुः, [6]चोखुवः ;
खोतव्यम्, खावयितव्यम्, चुखूषितव्यम्, चोखूयितव्यम् ;
खवनीयम्, खावनीयम्, चुखूषणीयम्, चोखूयनीयम् ;
[7]खव्यम्, [8]अवश्यखाव्यम्, खाव्यम्, चुखूष्यम्, चोखूय्यम् ;

---

1. शानचि, 'रुधादिभ्यः श्नम्' (3-1-78) इति श्नम्। 'श्नसोरल्लोपः' (6-4-111) इति लोपः।
2. 'इको झल्' (1-2-9) इति सनः कित्त्वान्न गुणः। 'अज्झनगमां सनि' (6-4-16) इति दीर्घः।
3. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः। 'गुणो यङ्लुकोः' (7-4-82) इति अभ्यासस्य गुणः।
4. क्विपि 'ह्रस्वस्य पिति कृति तुक्' (6-1-71) इति तुक्।
5. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति तच्छीलादिषु कर्तृषु युच्।
6. 'यङोऽचि च' (2-4-74) इति पचाद्यचि लुक्। 'अचि श्नुधातु—' (6-4-77) इत्युवङ्।
7. 'अचो यत्' (3-1-97) इति यत्।
8. 'ओरावश्यके' (3-1-125) इति ण्यत्।

A. 'यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलम्।
शुष्कपेषं पिनष्म्युर्वीम् अखिन्दानः स्वतेजसा॥' भ. का. 6.37.

B. 'सञ्छृण्णगात्रमथ शात्रवतर्दिनस्ते चाणूरमुष्टिकमुखा वसनान्यकृन्तन्।
इन्धानखेदमुदविन्त विशिष्टलोकः पेक्ष्यत्सु माधवमभञ्जभुजेषु तेषु॥' धा. का. 3.2.

| ईषत्खवः-दुष्खवः-सुखवः ; | — | — | — |
|---|---|---|---|
| [1]खूयमानः, | खाव्यमानः, | चुखुष्यमाणः, | चोखूय्यमानः, |
| [2]खवः, | खावः, | चुखूषः, | चोखूयः ; |
| खोतुम्, | खावयितुम्, | चुखूषितुम्, | चोखूयितुम् ; |
| खुतिः, | खावना, | चुखूषा, | चोखूया ; |
| खवनम्, | खावनम्, | चुखूषणम्, | चोखूयनम् ; |
| खुत्वा, | खावयित्वा, | चुखूषित्वा, | चोखूयित्वा ; |
| प्रखुत्य, | प्रखाव्य, | प्रचुखूष्य, | प्रचोखूय्य ; |
| खावम् २, } खुत्वा २, } | खावम् २, } खावयित्वा २, } | चुखूषम् २, } चुखूषित्वा २, } | चोखूयम् २ ; } चोखूयित्वा २. } |

(352-A) "खुजु स्तेयकरणे" (I-भ्वादिः. 200. सक. सेट्. पर.)

'कुजु स्तेयकरणे' (203) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि ।

(353) "खुड संवरणे" (VI-तुदादिः-1387. सक. सेट्. पर.) कुटादिः ।

खोडकः-डिका, खोडकः-डिका, चुखुडिषकः-षिका, चोखुडकः-डिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककौटिल्यार्थककुटतिवत् (204) ज्ञेयानि ।

(354) "खुडि खण्डने" (X-चुरादिः-1585. सक. सेट्. उभ.)

इदित्करणात् णिचो वैकल्पिकत्वम् । वेष्टनार्थकचौरादिककुण्ठयतिवत् (210) सर्वाणि रूपाणि ज्ञेयानि ।

(355) "खुर छेदने" (VI-तुदादिः-1342. सक. सेट्. पर.) [अ]

खोरकः-रिका, खोरकः-रिका, चुखुरिषकः-चुखोरिषकः-षिका, चोखुरकः-रिका; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककुरतिवत् (229) ज्ञेयानि। [A]खुरन् ।

---

1. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
2. 'ऋदोरप्' (3-3-57) इत्यप् भावे ।

[अ] 'खुर विलेखने' विलेखनम्=छेदः । इति क्षीरस्वामी ।

A. 'ईशस्य पुण्यसुगमस्य वधं मुणन्तो मल्लाश्च यत्र चुकुणुः शुनका इवोच्चैः । विद्रोणनेष्वघुणिता मदघूर्णदक्षा युद्धे सुरानपि खरोत्कुरिताः खुरन्तः ॥' धा. का. 2-76.

(356) "खुर्द क्रीडायामेव" (I-भ्वादिः-22. अक. सेट्. आत्म.)

खूर्दकः-र्दिका, खूर्दकः-र्दिका, चुखूर्दिषकः-षिका, चोखूर्दकः-र्दिका ;

इत्यादीनि 'कुर्द क्रीडायामेव' (230) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि । [A]खूर्दकः ।

(357) "खेट भक्षणे" (X-चुरादिः-1875. सक. सेट्. उभ.) अदन्तः ।

खेटकः-टिका, चिखेटयिषकः-षिका ;

इत्यादीनि 'केत श्रावणे आमन्त्रणे निमन्त्रणे च' (260) इति चौरादिकधातुवत् सर्वाणि रूपाण्यूह्यानि । [B]मदन्नखेटी । 'सुप्यजातौ—' (3-2-78) इति णिनिः ।

(358) "खेड भक्षणे" (X-चुरादिः-1875. सक. सेट्. उभ.) अदन्तः ।

'खेट' इत्यस्य पाठान्तरमिदम् ।

खेडकः-डिका, चिखेडयिषकः-षिका ;

इत्यादीनि चौरादिककेतयतिवत् (260) सर्वाणि रूपाण्यस्य ज्ञेयानि ।

(359) "खेलृ चलने" (I-भ्वादिः-538. अक. सेट्. पर.)

खेलकः-लिका, खेलकः-लिका, चिखेलिषकः-षिका, चेखेलकः-लिका ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककेलतिवत् (262) ज्ञेयानि । खेलनम्[C] ।

(360) "खेवृ सेवने" (I-भ्वादिः-506. सक. सेट्. आत्म.)

खेवकः-विका, खेवकः-विका, चिखेविषकः-षिका, चेखेवकः-विका ;

इत्यादीनि सर्वाण्यपि रूपाणि केपृ (261) धातुवत् बोध्यानि । 'पेवृ' धातोः मैत्रेयरक्षितसम्मतः पाठोऽयम् । 'केवृ' इति क्षीरस्वाम्यादयः ।

---

A. 'मुदा स चेतो ददर्दे चिरं हरौ स्वादात् सुरैः स्वर्दितमङ्गलोर्दने ।
अकूर्दतेवास्य पुरः स्वखूर्दकैः वनान्तगूर्दी रिपुगोदसूद्यसौ ॥' धा. का. 1-4.

B. 'यो मत्क्षयं स्पृहयते मयि भामितेऽपि संसूचयत्यरिगुणांश्च मदन्नखेटी ।
तं क्षोटितौजसमगोमितभूमिबन्धं(द्धं)शत्रौ कुमारयति मारयतोग्रसेनम् ॥'
धा. का. 3-55.

C. 'अचेलितानां प्रतिचेलधारिणामकेलिलोले हृदि बद्धखेलनम् ।
फणीश्वरक्ष्वेलरुधं प्रवेल्लितस्रजं मुहुः पेलववातफेलनात् ॥' धा. का. 1. 69.

## (361) "खै खेदने" (I-भ्वादिः-913. अक. अनि. पर.) [अ]

[1]खायकः-यिका, [2]खापकः-पिका, चिखासकः-सिका, [3]चाखायकः-यिका ;
खाता-त्री, खापयिता-त्री, चिखासिता-त्री, चाखायिता-त्री ;
[4]खायन्-न्ती, खापयन्-न्ती, चिखासन्-न्ती ; —
खास्यन्-न्ती, खापयिष्यन्-न्ती-ती, चिखासिष्यन्-न्ती-ती ; —
खापयमानः, खापयिष्यमाणः, चाखायमानः, चाखायिष्यमाणः ;
प्रखाः-प्रखौ-प्रखः ; — — —
खातम्-तः,[A] खापितः, चिखासितः, चाखायितः-तवान् ;
[5]आखाः, [6]शत्रुखः, [7]खायः, खापः, चिखासुः, [8]चाखाः ;
खातव्यम्, खापयितव्यम्, चिखासितव्यम्, चाखायितव्यम् ;
खानीयम्, खापनीयम्, चिखासनीयम्, चाखायनीयम् ;
[9]खेयम्, खाप्यम्, चिखास्यम्, चाखाय्यम् ;

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इति आत्वम् । 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः । एवं घञि, णमुल्यपि ज्ञेयम् ।
2. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति पुक् । एवं सर्वत्र ण्यन्ते बोध्यम् ।
3. 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः ।
4. शतरि, 'एचोऽयवायावः' (6-1-78) इत्यायादेशः ।
5. 'आतश्चोपसर्गे', (3-1-136) इति कर्तरि कः । 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः ।
6. 'आतोऽनुपसर्गे कः, (3-2-3) इति कप्रत्ययः ।
7. 'श्याद्व्यधास्रु—' (3-1-141) इति कर्तरि णो वा ।
8. 'यङोऽचि च' (2-4-74) इति यङो लुक् भवति ।
9. 'अचो यत्' (3-1-97) इति यत्प्रत्ययः । 'ईद्यति' (6-4-65) इति अङ्गस्य ईकारो भवति । गुणः ।

[अ]. 'खदने' इति क्षीरस्वामि - माधवादयः । भक्षणे च, इति च । खदनम्-स्थैर्यं हिंसा च इति माधवः । 'खै खादने' इति काशकृत्स्नीयधातुपाठे पठ्यते, 'भक्षणार्थत्वं च' इति तट्टीकायाम्' — इति क्षीरतरङ्गिणीटीका । 'खनने' इति श्रीशङ्कराचार्याः इति धातुकाव्यव्याख्यायाम् (2-31) ।

A. 'रायद्वयस्त्यानरुचौ रथेऽपि तं भक्तितिष्ठ्यापयिषुं स दृष्ट्वा ।
खाताशयोऽक्षामुदा पुनश्च मग्नोऽन्यथाऽपश्यदजानमीशम् ॥' धा. का. 2-31.

[1]ईषत्खानः-दुष्खानः-सुखानः ; — —

खायमानः, खाप्यमानः, चिखास्यमानः, चाखाय्यमानः ;

खायः, खापः, चिखासः, चाखायः ;

खातुम्, खापयितुम्, चिखासितुम्, चाखायितुम् ;

खातिः, [2]आखा, खापना, चिखासा, चाखाया ;

खानम्, खापनम्, चिखासनम्, चाखायनम् ;

खात्वा, खापयित्वा, चिखासित्वा, चाखायित्वा ;

प्रखाय, प्रखाप्य, प्रचिखास्य, प्रचाखाय्य ;

खायम् २, } खापम् २, } चिखासम् २, } चाखायम् २ ; }
खात्वा २, } खापयित्वा २, } चिखासित्वा २, } चाखायित्वा २. }

(362) "खोट भक्षणे" (X-चुरादिः-1875. सक. सेट्. उभ.) अदन्तः ।

'खेट भक्षणे' इत्यस्य मैत्रेयसम्मतः पाठोऽयम् । 'खोड' इति तृतीयान्तं केचित् पठन्ति । 'केत आमन्त्रणे निमन्त्रणे च' (260) इति चौरादिकधातुवत् सर्वाण्यपि रूपाणि ऊह्यानि ।

(363) "खोर्ऋ गतिप्रतिघाते" (I-भ्वादिः-552. सक. सेट्. पर.) [अ]

खोरकः-रिका, खोरकः-रिका, चुखोरिषकः-षिका, चोखोरकः-रिका ;

खोरिता-त्री, खोरयिता-त्री, चुखोरिषिता-त्री, चोखोरिता-त्री ;

खोरन्-न्ती, खोरयन्-न्ती, चुखोरिषन्-न्ती ; —

खोरिष्यन्-न्ती-ती, खोरयिष्यन्-न्ती-ती, चुखोरिषिष्यन्-न्ती-ती ; —

[3]सुखोः-सुखोरौ-सुखोरः ; — — —

खोरितम्-तः, खोरितः, चुखोरिषितः, चोखोरितः-तवान् ;

खोरः,[A] खोरः, चुखोरिषुः, चोखोरः ;

---

1. 'आतो युच्' (3-3-128) इति खलपवादो युच् भवति ।
2. 'आतश्चोपसर्गे' (3-3-106) इत्यङ्प्रत्ययो भवति ।
3. 'खरवसानयोः—' (8-3-15) इति विसर्गः ।

[अ] 'खोर्ड—' इति केचित् पठन्ति ।

A. 'अखोरघौरत्पतगेन्द्रवाहनं स्वसेविनां तित्सरिषां निराडिनम् ।
क्ष्मरन् मनोदुर्गममभ्रमेचकं वभ्रद्वधूविभ्रमत्रष्टिमश्रितम् ॥' धा. का. 1-71.

| | | | |
|---|---|---|---|
| खोरितव्यम्, | खोरयितव्यम्, | चुखोरिषितव्यम्, | चोखोरितव्यम्; |
| खोरणीयम्, | [1]खोरणीयम्, | चुखोरिषणीयम्, | चोखोरणीयम्; |
| खोर्यम्, | खोर्यम्, | चुखोरिष्यम्, | चोखोर्यम्; |
| ईषत्खोरः-दुष्खोरः-सुखोरः; | — | — | — |
| खोर्यमाणः, | खोर्यमाणः, | चुखोरिष्यमाणः, | चोखोर्यमाणः; |
| खोरः, [खोडः] | खोरः, | चुखोरिषः, | चोखोरः; |
| खोरितुम्, | खोरयितुम्, | चुखोरिषितुम्, | चोखोरितुम्; |
| खोरणम्, | खोरणम्, | चुखोरिषणम्, | चोखोरणम्; |
| [2]खोरा, | खोरणा, | चुखोरिषा, | चोखोरा; |
| खोरित्वा, | खोरयित्वा, | चुखोरिषित्वा, | चोखोरित्वा; |
| सङ्खोर्य, | सङ्खोर्य, | सञ्चुखोरिष्य, | सञ्चोखोर्य; |
| खोरम् २, खोरित्वा २, | खोरम् २, खोरयित्वा २, | चुखोरिषम् २, चुखोरिषित्वा २, | चोखोरम् २; चोखोरित्वा २. |

(364) "**खोलृ गतिप्रतीघाते**" (I-भ्वादिः-551. सक. सेट्. पर.)

खोलकः-लिका, खोलकः-लिका, चुखोलिषकः-षिका, चोखोलकः-लिका;

इत्यादीनि (363) खोर्ऋधातुवत् सर्वाण्यपि रूपाणि ज्ञेयानि। लडयोरभेदात् [A]खोडः।

(365) "**ख्या प्रकथने**" (II-अदादिः-1060. सक. अनि. पर.)

"अयं सार्वधातुकमात्रविषयः। 'सस्थानत्वम्; नमः ख्यात्रे' (वा. 2-4-54) इति वार्तिकम्, तद्भाष्यञ्चेह लिङ्गम्। सस्थानः=जिह्वामूलीयः, स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः। 'सम्पूर्वस्य ख्यातेः प्रयोगो न' इति न्यासकारः।" इति सिद्धान्तकौमुदी। 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायमाश्रित्य, आर्धधातुकमात्रेऽनभिधानमङ्गीक्रियते।

---

1. 'णेरनिटि' (6-4-51) इति णिलोपः।
2. 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः।

A. 'सुमार्गशैलात् स्खलतां खलात्मनां गलच्छिदार्थं सलितं महीतलम्।
दलत्तनुप्रस्खलितान् परान् प्रति प्रस्खलिताखोडपुदर्शनायुधम्॥' धा. का. 1-70.

वस्तुतस्तु, 'न ध्याख्यापॄमूर्च्छिमदाम्' (8-2-57) इति सूत्रे ख्या-ग्रहणेन, आर्धधातुकेऽपि प्रयोगोऽभ्युपगन्तव्यो भवति। अत एव 'ख्याआदेशो न' (धा. 8-3-6) इत्येवोक्तम्। न तु, एतत्साधारण्येन, 'ख्याशब्दे न' इति। अतः, आर्धधातुकेऽपि रूपाणि प्रदर्श्यन्ते। धातुरूपप्रकाशिकायामपि, आर्धधातुकविषयेऽपि रूपाण्यस्य धातोः प्रदर्शितानि। 'नमः ख्याते' (वा. 2-4-54) इति भाष्यवार्तिकपर्यालोचनया, तृजन्ते परमनभिधानं कल्प्यते।

[1]ख्यायकः-यिका, [2]ख्यापकः-पिका, चिख्यासकः-सिका, चाख्यायकः-यिका;
— ख्यापयिता-त्री, चिख्यासिता-त्री, चाख्यायिता-त्री;
[3]ख्यान्-न्ती[A]-ती, ख्यापयन्-न्ती, चिख्यासन्-न्ती; —
ख्यास्यन्-न्ती-ती, ख्यापयिष्यन्-न्ती-ती, चिख्यासिष्यन्-न्ती-ती; —.
— ख्यापयमानः, ख्यापयिष्यमाणः, चाख्यायमानः, चाख्यायिष्यमाणः;
आख्याः-आख्यौ-आख्याः; — —
[4]ख्यातम्-तः-तवान्, ख्यापितः, चिख्यासितः, चाख्यायितः-तवान्;
[5]गोप्रख्यायः, [6]गोसंख्यः, [7]गोख्यः, [8]ख्यायः, [9]गोख्यायो [व्रजति], ख्यापः,

---

1. 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवं घञि णमुलि च युगागमो ज्ञेयः।
2. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति पुगागमः। एवं ण्यन्ते सर्वत्र ज्ञेयम्।
3. आदादिकत्वात्, 'अदिप्रभृतिभ्यः शपः' (2-4-72) इति शपो लुक्। सवर्ण-दीर्घः। 'उगिदचाम्—' (7-1-70) इति नुम्। स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः।
4. 'न ध्याख्यापॄमूर्च्छिमदाम्' (8-2-57) इति निष्ठानत्वनिषेधः।
5. 'कर्मण्यण्' (3-2-1) इत्यणि युगागमः।
6. 'समि ख्यः' (3-2-7) इति कर्तरि कप्रत्ययः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः।
7. 'आतोऽनुपसर्गे कः' (3-2-3) इति कर्तरि कः। आकारलोपः।
8. 'श्याद्व्यधास्रु—' (3-1-141) इत्यादिना कर्तरि णप्रत्ययः। युगागमः।
9. 'अण् कर्मणि च' (3-3-12) इति भविष्यत्यर्थे क्रियाफलकक्रियायामण्।

A. 'ख्यान्त्यः कथाः प्राणमुदां पतीनां निर्मान्त्य इष्टानि चद्रून् वचस्यः। नार्यो विदित्वोपगमं मुरारेरासन् गता राजपथं सुमृष्टम्॥' धा. का. 2-50.

आचिख्यासुः, [1]चाख्याः ;

ख्यातव्यम्, ख्यापयितव्यम्, चिख्यासितव्यम्, चाख्यायितव्यम् ;

ख्यानीयम्, ख्यापनीयम्, चिख्यासनीयम्, चाख्यायनीयम् ;

[2]ख्येयम्, ख्याप्यम्, चिख्यास्यम्, चाख्याय्यम् ;

[3]ईषत्ख्यानः-दुष्ख्यानः-सुख्यानः ; — —

ख्यायमानः, ख्याप्यमानः, चिख्यास्यमानः, चाख्याय्यमानः ;

ख्यायः, ख्यापः, चिख्यासः, चाख्यायः ;

ख्यातुम्, ख्यापयितुम्, चिख्यासितुम्, चाख्यायितुम् ;

ख्यातिः, [4]आख्या, [5]प्रख्यातिः, ख्यापना, चिख्यासा, चाख्याया ;

[6]प्रख्यानम्, ख्यापनम्, चिख्यासनम्, चाख्यायनम् ;

ख्यात्वा, ख्यापयित्वा; चिख्यासित्वा, चाख्यायित्वा ;

आख्याय, आख्याप्य, प्रचिख्यास्य, प्रचाख्याय्य ;

ख्यायम् २, ख्यात्वा २, } ख्यापम् २, ख्यापयित्वा २, } चिख्यासम् २, चिख्यासित्वा २, } चाख्यायम् २ ; चाख्यायित्वा २; }

[7]सखा-सखायौ-सखायः.

## (366) "गज शब्दार्थः" (I-भ्वादिः-246. अक. सेट्. पर.)

## 'गज मदने च' इति श्रीकृष्णलीलाशुकः ।

---

1. 'यङोऽचि च' (2-4-74) इति यङो लुकि, सवर्णदीर्घे रुत्वविसर्गौ भवतः ।
2. 'अचो यत्' (3-1-97) इति यति, 'ईद्यति' (6-4-65) इति ईकारादेशे, गुणे च रूपम् ।
3. 'आतो युच्' (3-3-128) इत्यनेन, ईषदाद्युपपदेषु खलपवादो युच् ।
4. 'आतश्चोपसर्गे' (3-3-106) इति स्त्रियामङ् ।
5. प्रकृष्टा च सा ख्यातिश्च=प्रख्यातिः । तेन, 'आतश्चोपसर्गे' (3-3-106) इत्यङ् न ।
6. 'लुब्योगाप्रख्यानात्' (1-2-54) इति निर्देशात्, 'कृत्यचः' (8-4-29) इति णत्वं न । 'ख्शाञः शस्य यो वा' (वा. 8-4-40) इति वार्तिकादपि णत्वं नेति वक्तुं शक्यम् ।
7. 'समाने ख्यः स चोदात्तः' [द. उ. 1-65] इत्यनेन इण्प्रत्यये, डिद्वद्भावे यलोपे च रूपम् । समानशब्दस्य सभावश्च । समानं ख्यायते इति सखा=मित्रम् ।

'गर्जेत् गृञ्जेत् गजेत् गञ्जेत् शब्दने गाजयेण्णिचि ॥' (श्लो-59) इति देवः ।
'कख हसने' (141) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि ।

[A]गजः-पचाद्यच् ।

(367) "गज शब्दार्थः" (X-चुरादिः-1648. अक. सेट्. उभ.)

'गर्जेत् गृञ्जेत् गजेत् गञ्जेद् शब्दने गाजयेण्णिचि ॥' (श्लो-59) इति देवः ।
'कण निमीलने' (159) इति चौरादिकधातुवद्बोध्यानि । [B]गाजितः ।

(368) "गञ्जि शब्दार्थः" (I-भ्वादिः-247. सक. सेट्. पर.)

'गर्जेत् गृञ्जेत् गजेत् गञ्जेत् शब्दने गाजयेण्णिचि ॥' (श्लो-59) इति देवः ।
'कदि आह्वानरोदनयोः' (163) इति भौवादिकधातुवत् रूपाण्यूह्यानि ।
गञ्जा (मदिरागृहम्)। स्त्रियां 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः ।
[C]गजगञ्जी[1] ।

(369) "गड सेचने" (I-भ्वादिः-777. सक. सेट्. पर.) घटादिः ।

गाडकः-डिका, [2]गडकः-डिका, जिगडिषकः-षिका, [3]जागडकः-डिका ;
गडिता-त्री, गडयिता-त्री, जिगडिषिता-त्री, जागडिता-त्री ;
[D]गडन्-न्ती, गडयन्-न्ती, जिगडिषन्-न्ती ; —
गडिष्यन्-न्ती-ती, गडयिष्यन्-न्ती-ती, जिगडिषिष्यन्-न्ती-ती ; —

---

1. 'कर्तर्युपमाने' (3-2-79) इति णिनिः ।
2. घटादिपाठान्मित्त्वम् । णौ 'मितां ह्रस्वः' (6-4-92) इति उपधाह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः ।

A. 'जहर्ष जञ्जातुजितस्थलैरसौ गृधैरतुञ्जैर्गजगञ्जिभिर्वृतम् ।
गर्जत्खरं गृञ्जितधेनुमोमुजद्वत्सोत्करं मुञ्जदजं व्रजन् व्रजम् ॥' धा. का. 1-33.

B. 'इत्थं सुगाजितमृदङ्गविमार्जनानि संवार्य मर्वयति घारितशङ्कमस्मिन् ।
कृष्णः प्रपञ्चरहितां धृततेजितास्त्रैः वीरैः स्तुतां गिरमकीर्तदरातिवर्धी ॥'
धा. का. 3-28.

C. 'जहर्ष जञ्जातुजितस्थलैरसौ गृधैरतुञ्जैर्गजगञ्जिभिर्वृतम् ।
गर्जत्खरं गृञ्जितधेनुमोमुजद्वत्सोत्करं मुञ्जदजं व्रजन् व्रजम् ॥' धा. का. 1-33.

D. 'ताः संज्वरन्तीर्गड (ल) दश्रुधारा विमोहशक्त्या हिडयन् वियोगः ।
मिथो निजार्तिं वटयाञ्चकार हरेश्च चेष्टा भटयाञ्चकार ॥' धा. का. 2-6.
डलयोरभेदात् गल इति साधुः ।

| | | | |
|---|---|---|---|
| गड्यमानः, | गडयिष्यमाणः, — | जागड्यमानः, | जागडिष्यमाणः ; |
| गट्-गड्डु-गडौ-गडः ; | — | — | — |
| गडितम्-तः, | गडितः, | जिगडिषितः, | जागडितः-तवान् ; |
| गडः, | गडः, | जिगडिषुः, | जागडः ; |
| गडितव्यम्, | गडयितव्यम्, | जिगडिषितव्यम्, | जागडितव्यम् ; |
| गडनीयम्, | [1]गडनीयम्, | जिगडिषणीयम्, | जागडनीयम् ; |
| गाड्यम्, | गड्यम्, | चिगडिष्यम्, | जागड्यम् ; |
| ईषद्गडः-दुर्गडः-सुगडः ; | | — | — |
| गड्यमानः, | गड्यमानः, | जिगडिष्यमाणः, | जागड्यमानः ; |
| गाडः, | गडः, | जिगडिषः, | जागडः ; |
| गडितुम्, | गडयितुम्, | जिगडिषितुम्, | जागडितुम् ; |
| [2]गट्टिः, | गडना, | जिगडिषा, | जागडा ; |
| गडनम्, | गडनम्, | जिगडिषणम्, | जागडनम् ; |
| गडित्वा, | गडयित्वा, | जिगडिषित्वा, | जागडित्वा ; |
| सङ्गड्य, | [3]सङ्गडय्य, | सञ्जिगडिष्य, | सञ्जागड्य ; |
| गाडम् २, गडित्वा २, | [4]गडम् २-गाडम् २, गडयित्वा २, | जिगडिषम् २, जिगडिषित्वा २, | जागडम् २ ; जागडित्वा २. |

(370) "गडि वदनैकदेशे" (I-भ्वादिः-361. अक. सेट्. पर.)

वदनैकदेशे=वदनैकदेशक्रियायामित्यर्थः ।

गण्डकः-ण्डिका, गण्डकः-ण्डिका, जिगण्डिषकः-षिका, जागण्डकः-ण्डिका ; गण्डन्-न्ती, इत्यादीनि रूपाणि भौवादिककदिधातुवत् (163) सर्वत्र ज्ञेयानि । [A]गण्डः, पचाद्यच् ।

---

1. 'णेरनिटि' (6-4-57) इति णिलोपः ।
2. 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारे, 'खरि च' (8-4-55) इति चर्त्वे च रूपमेवम् ।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
4. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ, उपधायाः दीर्घविकल्पः ।

A. 'मनोज्ञगण्डं तमनिन्दिताननं नन्दात्मजं शारदचन्द्रशीतलम् ।
पराक्रमतन्दनकन्दितासुरं सङ्क्रन्दनक्रन्दितमीक्षितास्महे ॥' धा. का. 1-10.

## (371) "गण सङ्ख्याने"

(X-चुरादिः-1854. सक. सेट्. उभ. अदन्तः ।)

| | |
|---|---|
| [1]गणकः-गणिका,[2] | जिगणयिषकः-षिका ; |
| गणयिता-त्री, | जिगणयिषिता-त्री ; |
| गणयन्-न्ती, | जिगणयिषन्-न्ती ; |
| गणयिष्यन्-न्ती-ती, | जिगणयिषिष्यन्-न्ती-ती, |
| गणयमानः, | जिगणयिषमाणः ; |
| गणयिष्यमाणः, | जिगणयिषिष्यमाणः ; |
| [3]सुगण्-सुगणौ-सुगणः ; | [4]सुगाण्-सुगाणौ-सुगाणः ; |
| [5]गणितम्-तः, | जिगणयिषितः-तवान् ; |
| गणः, | जिगणयिषुः ; |
| गणयितव्यम्, | जिगणयिषितव्यम् ; |
| [6]गणनीयम्, | जिगणयिषणीयम् ; |
| [7]गण्यम्, | जिगणयिष्यम् ; |
| ईषद्गणः-दुर्गणः-सुगणः ; | — |
| गण्यमानः, | जिगणयिष्यमाणः ; |
| गणः, | जिगणयिषः ; |
| गणयितुम्, | जिगणयिषितुम् ; |
| गणना, | जिगणयिषा ; |

---

1. अल्लोपस्य स्थानिवत्त्वात् 'अत उपधायाः' (7-2-116) इति वृद्धिर्न । एवं सर्वत्र बोध्यम् ।
2. या गणयित्री सैवमुच्यते ; या तु वेश्या, तत्र गणः=लम्पटजनोऽस्याः भर्तृत्वेन अस्तीति मत्वर्थीये ठनि गणिका ।
3. क्विपि, एवं रूपम् ।
4. क्विपि तु 'क्वौ विधिं प्रति न स्थानिवत्—' (वा. 1-1-58) इति निषेधाद्दीर्घे रूपम् ।
5. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः ।
6. 'णेरनिटि' (6-4-51) इति णिलोपः ।
7. 'अचो यत्' (3-1-97) इति यत् ।

| | |
|---|---|
| [A]गणनम्, | जिगणयिषणम्; |
| गणयित्वा, | जिगणयिषित्वा; |
| [1]विगणय्य,[B] | विजिगणयिष्य; |
| गणम् २, } | जिगणयिषम् २; } |
| गणयित्वा २, } | जिगणयिषित्वा २. } |

(372) "गद व्यक्तायां वाचि" (I-भ्वादिः-52. सक. सेट्. पर.)

'णौ देवशब्दे गदयेत्, व्यक्तवाचि गदेच्छपि।' (श्लो. 110) इति देवः।

गादकः-दिका, गादकः-दिका, जिगदिषकः-षिका, जागदकः-दिका;
गदिता-त्री, गादयिता-त्री, जिगदिषिता-त्री, जागदिता-त्री;
[2]व्यतिगदन्[C]-न्ती, प्रणिगदन्-न्ती[3], गादयन्-न्ती, जिगदिषन्-न्ती;
गदिष्यन्-न्ती-ती, गादयिष्यन्-न्ती-ती, जिगदिषिष्यन्-न्ती-ती; —
— गादयमानः, गादयिष्यमाणः, — जागद्यमानः, जागदिष्यमाणः;
सुगद्-सुगदौ-सुगदः; — — —
गदितम्-तः-[D]तवान्, गादितः, जिगदिषितः, जागदितः-तवान्;
गदः, [4]आनुगादिकः, गादः, जिगदिषुः, जागदः;

---

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
2. 'प्रतिषेधे हसादीनाम्—' (वा. 1-3-15) इत्यत्रास्य धातोः ग्रहणान्न कर्मव्यतीहारे तङ्।
3. 'नेर्गदनद—' (8-4-17) इत्यादिना णत्वम्।
4. अनुगदतीत्यनुगादी। 'अनुगादिनष्ठक्' (5-4-13) इति स्वार्थे ठक्।

A. 'क्रुद्धेनाकथि चाप्यवर्यगणने शठयेन भोः श्वठयतां
मन्त्री तौ प्रपटय्य पाशवटनैः पापौ विरह्यौ पुरात्।
के मूढाः स्तनयित्नुनिर्गदनवत् तूर्यध्वनिं कुर्वते
मल्लौघोऽपतयद् रिपुर्न तु पतांचक्रे स पातोचितः॥' धा. का. 3-53.

B. 'विगणय्य कारणमनेकगुणं निजयाऽथ वा कथितमल्पतया।
असदप्यदः सहितुमर्हसि नः क्व वनेचराः क्व निपुणा मतयः॥'
किरातार्जुनीये-6-37.

C. 'पलान्यखाद्यानि खदन् बदद्वपुः गदन् अवाच्यानि रदन् सतां मनः।
नदन् मदादर्दितसज्जक्षयोऽधुना क्षणं खलो नर्दतु गर्दभस्वरैः॥' धा. का. 1-8.

D. 'इति निगदितवन्तं राघवस्तं जगाद व्रज भरत गृहीत्वा पादुके त्वं मदीये।
च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः सकलभुवनराज्यं कारयास्मन्मतेन॥'
भ. का, 3-56

गदितव्यम्, गादयितव्यम्, जिगदिषितव्यम्, जागदितव्यम्;
गदनीयम्, गादनीयम्, जिगदिषणीयम्, जागदनीयम्;
[1]गद्यम्,[A] प्रगाद्यम्, गाद्यम्, जिगदिष्यम्, जागद्यम्;
ईषद्गदः-दुर्गदः-सुगदः; — — —
गद्यमानः, गाद्यमानः, जिगदिष्यमाणः, जागद्यमानः;
[2]गदः, [3]गादः, [4]गद्गदः, [5]निगदः[B], निगादः, गादः, जिगदिषः, जागदः;
गदितुम्, गादयितुम्, जिगदिषितुम्, जागदितुम्;
[6]गदा, गादना, जिगदिषा, जागदा;
गदनम्, गादनम्, जिगदिषणम्, जागदनम्;
गदित्वा, गादयित्वा, जिगदिषित्वा, जागदित्वा;
प्रणिगद्य, प्रणिगाद्य, प्रजिगदिष्य, प्रजागद्य;
गादम् २, गदित्वा २, } गादम् २, गादयित्वा २, } जिगदिषम् २, जिगदिषित्वा २, } जागदम् २; जागदित्वा २. }

(373) "गद देवशब्दे" (X-चुरादिः-1861. अक. सेट्. उभ.) अदन्तः।

देवशब्दः=पर्जन्यध्वनिः।

'स्तन-गदी देवशब्दे' इति धातुपाठे दृश्यते। द्विवचननिर्देशोऽयं वैचित्र्यार्थः, इत्याहुः। अदन्तोऽयम्। 'स्तन गद—' इत्येव चान्द्राः पठन्ति।

---

1. 'गदमदचरयमश्चानुपसर्गे'—(3-1-100) इति यत्। सोपसर्गात् तु ण्यदेव। निगाद्यमिति यथा।
2. 'पुंसि संज्ञायां घः' (3-3-118) इति रोगार्थे घः।
3. 'हलश्च' (3-3-121) इति घञ्।
4. 'पृषोदरादीनि—' (6-3-109) इत्यत्र पाठात् गद्गद इति सिद्धिरिति क्षीरतरङ्गिणी। अस्पष्टाक्षरं यथा तथोच्चार्यमाण शब्दः गद्गद इत्युच्यते।
5. 'नौ गदनद—' (3-3-64) इत्यप्।
6. 'षिद्भिदादिभ्यः—' (3-3-104) इत्यत्र पाठात् अङ्।

A. 'लभ्या कथं नु वैदेही शक्यो द्रष्टुं कथं रिपुः।
सह्यः कथं वियोगश्च गद्यमेतत् त्वया मम॥' भ. का. 6-47.

B. 'संचेरुः सहसाः केचिदस्वनाः केचिदाटिपुः।
संयामवन्तो यतिवत् निगदानपरेऽमुचन्॥' भ. का. 7-57.

'णौ देवशब्दे गदयेत्, व्यक्तवाचि गदेच्छपि' इति देवः (110. श्लोकः)।
केचित्तु 'गदी—' इति, ईदितं धातुं पठन्ति। शाकटायनोऽप्येवमेव—
इत्यादिकं सर्वं पुरुषकारादिषु द्रष्टव्यम्। [A]गदनम्—ल्युट्।
'गण सङ्ख्याने' (371) इति चौरादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि।

### (374) "गदि वदनैकदेशे" (I-भ्वादिः-65. अक. सेट्. पर.)

गन्दकः-न्दिका, गन्दकः-न्दिका, जिगन्दिषकः-षिका, जागन्दकः-न्दिका;
इत्यादीनि कदिवत् (163) सर्वाण्यपि रूपाणि ऊह्यानि।

'गडि—' इत्यस्य पाठान्तरमिदमित्यन्ये।

### (375) "गन्ध अर्दने" (X-चुरादिः-1685. सक. सेट्. आत्म.)

आकुस्मीयः।

गन्धकः-न्धिका, जिगन्धयिषकः-षिका; गन्धयिता-त्री, जिगन्धयिषिता-त्री; [1]गन्धयमानः, [2]जिगन्धयिषमाणः; गन्धयिष्यमाणः, जिगन्धयिषिष्यमाणः; सुगन्-सुगन्धौ-सुगन्धः; गन्धितम्-तः, जिगन्धयिषितः-तवान्; गन्धः, जिगन्धयिषुः; गन्धयितव्यम्, जिगन्धयिषितव्यम्; [B]गन्धनीयम्, जिगन्धयिषणीयम्; गन्ध्यम्, जिगन्धयिष्यम्, ईषद्गन्धः-दुर्गन्धः-सुगन्धः; गन्ध्यमानः, जिगन्धयिष्यमाणः; गन्धः, जिगन्धयिषः; गन्धयितुम्, जिगन्धयिषितुम्; गन्धना, जिगन्धयिषा; गन्धनम्, जिगन्धयिषणम्; गन्धयित्वा, जिगन्धयिषित्वा; विगन्ध्य, विजिगन्धयिष्य; गन्धम् २, गन्धयित्वा २, जिगन्धयिषम् २; जिगन्धयिषित्वा २.

---

1. 'आकुस्मादात्मनेपदिनः' (गणसूत्रं चुरादौ) इत्यात्मनेपदमेव। तेन शानच्।
2. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तादपि आत्मनेपदमेव।

A. 'कुद्धेनाकथि चाप्यवर्यगणने शठयेन भोः श्वठयतां
मन्त्री तौ प्रपठय्य पाशवटनैः पापौ विरह्यौ पुरात्।
के मूढाः स्तनयित्नुनिर्गदनवत् तूर्यध्वनिं कुर्वते
मल्लौघोऽपतयद्रिपुर्न तु पतांचक्रे स पातोचितः॥' धा. का. 3-53.

B. 'प्रस्पाश्य मुष्टिमभितर्जयते प्रभर्त्स्यः मल्लो बिबस्तयिषुरेनमगन्धनीयम्।
किष्क्येत निष्कुपमनिष्कितकान्तिरेष बालोऽमुना नृपतिलालनयाऽद्य कष्टम्॥'
धा. का. 3-34.

## (376) " गम्लृ गतौ " ( I-भ्वादिः-982. अक. अनि. पर. )

गामकः-मिका, [1]गमकः-मिका, [2]जिगमिषकः-षिका, [3]जङ्गमकः-जंगमकः-मिका;
गन्ता-त्री, गमयिता-त्री, जिगमिषिता-त्री, जङ्गमिता-त्री ;
[4]गच्छन्-न्ती, गमयन्-न्ती, [A]जिगमिषन्-न्ती ; —
[5]गमिष्यन्-न्ती-ती, गमयिष्यन्-न्ती-ती, जिगमिषिष्यन्-न्ती-ती ;
[6]सङ्गच्छमानः, गमयमानः, [7]आगमयमानः, [8]सञ्जिगंसमानः, जङ्गम्यमानः;
सङ्गंस्यमानः, गमयिष्यमाणः, आगमयिष्यमाणः, सञ्जिगंसिष्यमाणः,
जङ्गमिष्यमाणः ;

---

1. 'जनीजॄष्क्नसु—' (ग. सू. भ्वादौ) इत्यादिना अमन्तत्वेनास्य धातोर्मित्त्वम् । 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाह्रस्वः । एवं ण्यन्ते सर्वत्र बोध्यम् ।
2. 'गमेरिट् परस्मैपदेषु' (7-2-58) इति सन इडागमः । तत्र 'परस्मैपदेषु' इत्यस्य तङानयोरभावे—इत्यर्थः । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।
3. 'यस्य हलः' (6-4-49) इति यङो यकारस्य लोपः । 'अतो लोपः' (6-4-48) इत्यकारलोपः । 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इत्यभ्यासस्य नुगागमः । यङवयवाकारलोपस्य स्थानिवद्भावेनाजादिक्ङित्प्रत्ययपरकत्वात् 'गमहन—' (6-4-98) इत्युपधालोपो न शङ्क्यः । तत्र, 'अनङि' इति पर्युदासेन, औपदेशिकाजादिप्रत्यये एव लोप इति भट्टोजिदीक्षितैः 'न धातुलोप—' (1-1-4) इत्यत्रोक्तत्वात् । तदनुसारेण अकारलोपाघटितानि रूपाणि प्रदर्शितानि । नागेशभट्टैस्तु—औपदेशिकाजादावित्यर्थो नाश्रितः । अतः 'जङ्ग्मकः' इति रूपं, 'न धातुलोप—' (1-1-4) इति सूत्रे उद्योते प्रदर्शितम् । प्राचीननवीनयोर्बहुषु लक्ष्येषु आशयभेदो यथा भवति, तथाऽत्रापीति बोध्यम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. 'इषुगमियमां छः' (7-3-77) इति शिति प्रत्यये धातोः छकारादेशः । 'छे च' (6-1-73) इति तुक् । तस्य चर्त्वेन चकारः ।
5. 'गमेरिट् परस्मैपदेषु' (7-2-58) इतीडागमः ।
6. 'समो गम्यृच्छिभ्याम्' (1-3-29) इति शानच् ।
7. 'आगमेः क्षमायामात्मनेपदं वक्तव्यम्' (वा. 1-3-21) इति ण्यन्तात् आङ्पूर्वकादस्मात् आत्मनेपदमेव ।
8. सम्पूर्वकत्वेन आत्मनेपदनिमित्तसद्भावादिडागमो न । 'अज्झनगमां सनि' (6-4-16) इति दीर्घस्तु—अजादेशगमेरेव, न त्वस्य ।

A. 'पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषाम् ।
मत्तद्विरदवद् रेमे वने लङ्कानिवासिनाम् ॥' भ. का. 9-43.

अङ्गगत्,[1] मार्गगत्, अग्रेगूः,[2] जगत्[3] [4]अग्रेगाः; [5]गतम्- [A]गतः- [6]प्रगतः-तवान्, [7]अन्तिकादागतः-अभ्याशादागतः-दूरादागतः- विप्रकृष्टादागतः, गमितः, जिगमिषितः, जङ्गमितः-तवान्; गमः, [8]सुतङ्गमः, [9]अन्तगः, [B]अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, अनन्तगः, सर्वत्रगः,[10] पन्नगः [11]उरगः, सुगः,[12] दुर्गः[C] निर्गः,[13]

---

1. 'गमः क्वौ' (6-4-40) इत्यनुनासिकलोपे 'ह्रस्वस्य पिति—' (6-1-71) इति तुक्।
2. 'ऊङ् च गमादीनाम्—' (वा. 6-4-40) इत्यनुनासिकलोपः ऊकारादेशश्च।
3. 'द्युतिगमिजुहोतीनां द्वे च' (वा. 3-2-178) इति क्विपि द्विर्वचनम्, अनुनासिकलोपः। तुक्।
4. 'जनसनखनक्रमगमो विट्' (3-2-67) इति विट्। 'विड्वनोरनुनासिकस्यात्' (6-4-41) इत्यनुनासिकस्याकारादेशः। सवर्णदीर्घः। अग्रगामी इत्यर्थः।
5. 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (3-4-76) इति अधिकरणे क्तः। 'इदमेषां गतम्' इत्यधिकरणे। 'गत्यर्थाकर्मक—' (3-4-72) इति कर्तरि क्तः 'देवदत्तो गतः' इत्यत्र। 'गतमनेन' इत्यत्र भावे क्तः। 'अनुदात्तोपदेश—' (6-4-37) इत्यनुनासिकलोपः। एवं क्तिन्यपि।
6. 'आदिकर्मणि क्तः कर्तरि च' (3-4-71) इति आदिकर्मणि क्तः। गन्तुमारब्धवान् इत्यर्थः।
7. 'पञ्चम्याः स्तोकादिभ्यः' (6-3-2) इति पञ्चम्या अलुक्।
8. 'गमश्च' (3-3-47) संज्ञायां खच्। 'खित्यनव्ययस्य' (6-3-66) इति वर्तमाने, 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति मुम्। एवं हृदयङ्गमः, जनङ्गमः इत्यादीनि ज्ञेयानि।
9. 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' (3-2-48) इति डप्रत्ययः। टेर्लोपः। एवम् अत्यन्तग इत्यादि अनन्तग इति पर्यन्तम्।
10. 'सर्वत्रपन्नयोरुपसंख्यानम्' (वा. 3-2-48) इति डः।
11. 'उरसो लोपश्च' (वा. 3-2-48) इति डः सकारलोपश्च। उरसा गच्छतीति उरगः सर्पः।
12. 'सुदुरोरधिकरणे' (वा. 3-2-48) इति डः। सुखेन दुःखेन चात्र गच्छन्तीति सुगः दुर्गः।
13. 'निसो देशे' (वा. 3-2-48) इति डः। देशविशेषस्य नाम। निरन्तरं गच्छन्त्यत्रेति अधिकरणे डः।

A. 'ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम्।
अशनीयमिवाशंसुः महानायादशोभनः॥' भ. का. 7-79.

B. 'दूरगैरन्तगैर्बाणैर्भवान् अत्यन्तगः श्रियः।
अपि सङ्क्रन्दनस्य स्यात् कद्धः किमुत वालिनः॥' भ. का. 6-110.

C. 'सुगेषु दुर्गेषु च तुल्यविक्रमैर्जवादहंपूर्विकया यियासुभिः।
गणैरविच्छेदनिरुद्धमावभौ वनं निरुच्छ्वासमिवाकुलाकुलम्॥'
किरातार्जुनीये—14-32.

[1]स्त्र्यगारग:-ग्रामग:, भुजङ्गः[2]-भुजङ्गमः-भुजगः, तुरङ्गमः-तुरगः-तुरङ्गः, हृदयङ्गमः, [3]विहङ्गः-विहङ्गमः, जग्मिः,[4] जग्मिवान्[5]-जगन्वान्, [6]गमी-[A]आगामी-गामी, [7]गत्वरः[B]-[C]गत्वरी, [व्रजं][8]गामी, [9]नगः,[D]

1. 'डप्रकरणे—डोऽन्यत्रापि दृश्यते' (वा. 3-2-48) इति डः। एवं **गुरुतल्पगः ग्रामगः** इत्यादिकं ज्ञेयम्।
2. 'खच्च डिद्वा वक्तव्यः' (वा. 3-2-38) इति वा डित्त्वेन टिलोपः। मुम्। एवं **प्लवङ्ग-तुरङ्ग-विहङ्गादयः।**
3. 'विहायसो विह च' (वा. 3-2-38) इति विहायसो '**विह**' इत्यादेशः, खचो डित्त्वं च वा भवति। मुम्। डित्त्वपक्षे '**विहग**' इति। एवं **तुरग-प्लवगादयः।**
4. 'भाषायां धाञ्कृसृजनिगमिनमिभ्यः—'(वा. 3-2-171) इति किः, किन् वा प्रत्ययः। तस्य लिड्वद्भावातिदेशात् द्वित्वादिकम्। '**गमहन—**' (6-4-98) इत्युपधालोपः।
5. 'क्वसुश्च' (3-2-107) इति लिटः क्वसुः। द्विर्वचनम्। 'विभाषा **गमहनविद-**विशाम्' (7-2-68) इतीड्विकल्पः। **जगन्वान्** इत्यत्र 'म्वोश्च' (8-2-65) इति मकारस्य नकारः।
6. 'भविष्यति **गम्यादयः**' (3-3-3) इति भविष्यत्काले इनिप्रत्ययः।
   "**गमी गामी** तथाऽऽ**गामी** प्रयायिप्रतियायिनौ।
   प्रबोधी प्रतिबोधी च भावी प्रस्थाय्यमी नव॥"
   इति **प्रक्रियासर्वस्वे गम्यादेः** परिगणनं कृतम्। 'आङि च णित्' (ग. सू. 3-3-3) इति इनिप्रत्ययस्य णिद्वद्भावात् 'अत उपधायाः' (7-2-116) इति वृद्धिः।
7. '**गत्वरश्च**' (3-2-164) इति **गमेः** क्वरपि अनुनासिकलोपे तुक् निपात्यते तच्छीलादिषु कर्तृषु। स्त्रियां 'टिड्ढाणञ्—' (4-1-15) इति ङीप्।
8. 'आवश्यकाधमर्ण्ययोर्णिनिः' (3-3-170) इति णिनिः। 'अकेनोर्भविष्यदाध-मर्ण्ययोः' (2-3-70) इति षष्ठीनिषेधः।
9. '**नगोऽ**प्राणिष्वन्यतरस्याम्' (6-3-77) इति नञ्समासे नलोपाभावो विकल्पेन। पक्षे—**अगः**। न गच्छतीति **नगः** पर्वतः। **वृक्षश्च**।

A. 'साधोरपि स्वः खलु **गामि**ताऽथो **गमी** न तु स्वर्गमितः प्रयाणे।
   इत्यायती चिन्तयतो हृदि द्वे द्वयोरुदर्कः किमु शर्करे न॥' **नैषधे** 6-99.

B. 'समरोऽभङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः।
   विदुरो जित्वरः प्राप लक्ष्मणो **गत्वरान्** कपीन्॥' भ. का. 7-22.

C. 'निद्रावशेन निभृतेक्षणमुत्थितानां द्वित्राणि मन्थरपदान्यप**गत्वरीणाम्**।
   काले गृहीतमुचिते रशनाः कथञ्चित् मौनव्रतं जहति मुग्धवधूजनानाम्॥'
   **यादवाभ्युदये** 19-6.

D. 'परिभावं मृगेन्द्राणां कुर्वन्तो **नगमूर्धसु**।
   विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे॥' भ. का. 7-54.

[A]पद्गः[1] प्लवङ्गः, विहगः,
[2]अध्वगामी, [3]अग्रेगावा[B], [4]गामुकः,[C] [5]हंसगामिनी,[D] [6]सुगन्मा, [E]जनङ्गमः,
गमः, जिगमिषुः, [F]जङ्गमः ;[7]
गन्तव्यम्, गमयितव्यम्, जिगमिषितव्यम्, जङ्गमितव्यम् ;
[8]प्रगमनीयम्, [9]प्रगमनीयम्, जिगमिषणीयम्, जङ्गमनीयम् ;

---

1. 'डोऽन्यत्रापि दृश्यते' (वा. 3-2-48) इति गमेर्डप्रत्ययः। 'पादस्य पदाज्यातिगोपहतेषु' (6-3-52) इति पद्भावः। पादाभ्यां गच्छन्तीति **पद्गाः**= पदातयः।
2. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति ताच्छील्ये णिनिः।
3. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति वनिप्। 'विड्वनोरनुनासिकस्य—' (6-4-41) इत्यात्वे रूपम्। स्त्रियाम् अग्रेगावा इति भवति। 'वनो न हशः' (वा. 4-1-7) इति ङीब्रेफादेशनिषेधात्।
4. 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्' (3-2-154) इति तच्छीलादिषु कर्तृषु उकञ्। स्त्रियां गामुका इति रूपम्।
5. 'कर्तर्युपमाने' (3-2-79) इति णिनिः। हंस इव गच्छतीति **हंसगामिनी**।
6. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति मनिन्। 'नेड् वशि कृति' (7-2-8) इतीण्णिषेधः। 'म्वोश्च' (8-2-65) इति मकारस्य नकारः।
7. यङन्तात् पचाद्यच् (3-1-134)। 'यङोऽचि च' (2-4-74) इति यङो लुक्।
8. 'न भाभूपूकमिगमि—' (8-4-34) इति निषेधात् 'कृत्यचः' (8-4-29) इति णत्वं न।
9. 'ण्यन्तभादीनामुपसंख्यानम्—' (वा. 8-4-34) इति वार्तिकात् ण्यन्तादपि णत्वं न।

A. 'वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून्।
अध्यापयन्तं विनयात्प्रणेमुः **पद्गाः** भरद्वाजमुनिं सशिष्यम् ॥ भ. का. 3-41.

B. 'अग्रेगावा च शूराणाम् अभिभूः सर्वविद्विषाम्।
शंस्थरूपः स्थिरप्रज्ञः पपात सहसा भुवि ॥' भ. का. 6-125.

C. 'अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे।
गामुको ध्रुवमध्वानं सुग्रीवो वालिना **गतम्** ॥' भ. का. 7-18.

D. 'योषिद्वृन्दारिका तस्य दयिता **हंसगामिनी**।
दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥' भ. का. 5-18.

E. 'औदुम्बरे वैदिशनैम्बमुख्ये देशेऽवसन् ये स **जनङ्गमौघाः**।
ये चाधिकौशाम्बि जनास्तदानीमाकस्मिकीं प्रीतिमयासिषुस्ते ॥'
**वासुदेवविजये** 3-19.

F. 'आ त्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत्।'
दशग्रीव कथं ब्रूषे तानवध्यान् महीपतेः ॥' भ. का. 9-126.

[1]गम्यम्, गम्यम्, जिगमिष्यम्, जङ्गम्यम्;
ईषद्गमः-[A]दुर्गमः-दुरधिगमः-सुगमः; — —
गम्यमानः, गम्यमानः, जिगंस्यमानः, जङ्गम्यमानः;
[2]गमः, [3]एकाहगमः, [4]निगमः, [B]अभिगमः, [C]आगमः, गमः, जिगमिषः, जङ्गमः;
गन्तुम्, गमयितुम्, जिगमिषितुम्, जङ्गमितुम्;
गतिः, [5]अग्रगामिका, गमना, जिगमिषा, जङ्गमा;
[D]प्रगमनम्, प्रगमनम्, जिगमिषणम्, जङ्गमनम्;
गत्वा, गमयित्वा, जिगमिषित्वा, जङ्गमित्वा;
अवगत्य- [6]अवगम्य, [7]अवगमय्य, सञ्जिगंस्य, प्रजिगमिष्य, सञ्जङ्गम्य;

---

1. 'पोरदुपधात्' (3-1-98) इति यत्प्रत्ययः।
2. 'प्रहृवृदनिश्चिगमश्च' (3-3-58) इति, भावे अकर्तरि च कारके घञपवादोऽप्-प्रत्ययः।
3. एकाहेन गम्यते इत्येकाहगमः=अध्वा। कर्मणि अप्। 'परिमाणाख्यायां सर्वेभ्यः' (3-3-20) इति प्राप्तस्य घञोऽपवादत्वेन 'अश्वस्यैकाहगमः' (5-2-19) इति सूत्रे निपातनादप्।
4. 'गोचरसंचरवहव्रजव्यजापणनिगमाश्च' (3-3-119) इति घञपवादः घप्रत्ययान्तो निपातः। निगम्यते=ज्ञायतेऽनेन—इति निगमः=वेदः। करणे घः। गत्यर्थानां ज्ञानार्थकत्वात् ज्ञायमानत्वम्।
5. 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (3-3-111) इति पर्यायार्थे ण्वुच् स्त्रियाम्। 'अग्रगामिका अद्य भवतः।' अग्रगामिका=अग्रगमनम्।
6. 'वा ल्यपि' (6-4-38) इति मान्तानिटां धातूनाम्, अनुनासिकलोपविकल्पः। लोपपक्षे तुक्। तेन रूपद्वयम्।
7. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।

A. 'बलिनावमुमद्रीन्द्रं युवां स्तम्बेरमाविव।
आचक्षाथामिथः कस्मात् शङ्करेणापि दुर्गमम्॥' भ. का—6-93.

B. 'ततः प्रविव्राजयिषुः कुमारम् आदिक्षदस्याभिगमं वनाय।
सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन्॥' भ. का. 3-9.

C. 'प्रग्राहैरिव पत्राणामन्वेष्या मैथिली कृतैः।
ज्ञातव्या चेङ्गितैर्धर्म्यैर्घर्षयन्ती राघवाऽऽगमम्॥' भ. का. 7-44.

D. 'हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः।
नातिप्रवेपनं वायोर्मया गोपायिते वने॥' भ. का—9-107.

गामम् २, } [1]गामम् २, गामम् २, } जिगमिषम् २, } जङ्गमम् २ ; }
गत्वा २, } गमयित्वा २, } जिगमिषित्वा २, } जङ्गमित्वा २; }

[2] गन्तुः-आगन्तुः, [3]गौः, [4]गात्रम्.

(377) "गर्ज शब्दे" (I-भ्वादिः-226. अक. सेट्. पर.)

'मेघशब्दे' इति कविकल्पद्रुमे। 'गर्जेद् गृञ्जेद् गजेद् गञ्जेच्छब्दने गाजयेण्णिचि।' (श्लो. 59) इति देवः। गर्जितम्=स्तनितम्। शतरि[A] गर्जन्-न्ती, इति रूपम्। अस्य धातोः सर्वाणि रूपाणि कर्जतिवत् (169) ज्ञेयानि॥

(378) "गर्ज शब्दे" (X-चुरादिः-1665. अक. सेट्. उभ.)

केषाञ्चिन्मतेनास्य धातोः चुरादौ पाठः।

गर्जकः-र्जिका, जिगर्जयिषकः-षिका ;
गर्जयिता-त्री, जिगर्जयिषिता-त्री ;
गर्जयन्-न्ती, जिगर्जयिषन्-न्ती ;
गर्जयिष्यन्-न्ती-ती, जिगर्जयिषिष्यन्-न्ती-ती ;
गर्जयमानः, जिगर्जयिषमाणः ;
गर्जयिष्यमाणः, जिगर्जयिषिष्यमाणः ;
गर्ग्-गर्क्-गर्जौ-गर्जः ; —
[B]गर्जितम्-तः-तवान्, जिगर्जयिषितः-तवान् ;
गर्जः, जिगर्जयिषुः ;
गर्जयितव्यम्, जिगर्जयिषितव्यम् ;
गर्जनीयम्, जिगर्जयिषणीयम् ;

---

1. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति ण्यन्ताण्णमुलि उपधादीर्घविकल्पः।
2. 'सितनिगमि—' [द. उ. 1-122] इत्यादिना तुन्प्रत्ययः। गन्तुः=पथिकः। आगन्तुः—अतिथिः।
3. 'गमेर्डोः' [द. उ. 2-11] इति डोप्रत्ययः। गच्छतीति गौः।
4. 'गमेरा च' [द. उ. 8-85] इति त्रन्प्रत्ययः। गात्रं=शरीरम्।

A. 'प्रभृज्य मोदं स दधृज्ञ तद्वनं ध्वजोद्गतिध्वञ्जितकूजदण्डजम्। स्वर्गोपमं सर्जितपुण्यसञ्चयो गभीरगर्जद्रथतर्जिताम्बुदः॥' धा. का. 1-30.

B. 'खेदस्त्वियान् पटहगर्दनगर्जिताशे रङ्गे सगर्धनगुगुर्दितवीरलोके। मन्द्याप्रपूर्वितद्रूपे शिशुना रणं वः स्यादेव मानपरिजंसकमीडयधाम्नाम्॥' धा. का. 3-31.

| | |
|---|---|
| गर्ज्यम्, | जिगर्जयिष्यम्; |
| ईषद्गर्जः-दुर्गर्जः-सुगर्जः; | — |
| गर्ज्यमानः, | जिगर्जयिष्यमाणः; |
| गर्जः, | जिगर्जयिषः; |
| गर्जयितुम्, | जिगर्जयिषितुम्; |
| गर्जना, | जिगर्जयिषा; |
| गर्जनम्, | जिगर्जयिषणम्; |
| गर्जयित्वा, | जिगर्जयिषित्वा; |
| सङ्गर्ज्य, | सञ्जिगर्जयिष्य; |
| गर्जम् २, } | जिगर्जयिषम् २; } |
| गर्जयित्वा २, } | जिगर्जयिषित्वा २. } |

(379) "गर्द शब्दे" (I-भ्वादिः-57. अक. सेट्. पर.)

गर्दकः-र्दिका, गर्दकः-र्दिका, जिगर्दिषकः-षिका, जागर्दकः-र्दिका; इत्यादीनि सर्वाण्यपि रूपाणि कर्जतिवत् (169) ज्ञेयानि। [1]गर्दभः[A]।

(380) "गर्द शब्दे" (X-चुरादिः-1665. अक. सेट्. उभ.)

केषाञ्चिन्मतेनास्याधिकः पाठः।

चौरादिकगर्जयतिवत् (378) धातोरस्य रूपाण्यवगन्तव्यानि॥

(381) "गर्ध अभिकाङ्क्षायाम्" (X-चुरादिः-1665. सक. सेट्. उभ.)

'गृधेर्गृध्यति काङ्क्षायां, गर्धेस्तत्रैव गर्धयेत्।' (श्लो. 123) इति देवः। गर्धकः-र्धिका, जिगर्धयिषकः-षिका, इत्यादीनि अस्यापि धातोः चौरादिकगर्जयतिवत् (378) सर्वाणि रूपाणि बोध्यानि। [B]गर्धनम्।

(382) "गर्ब गतौ" (I-भ्वादिः-422. अक. सेट्. पर.)

गर्बकः-र्बिका, गर्बकः-र्बिका, जिगर्बिषकः-षिका, जागर्बकः-र्बिका; इत्यादीनि सर्वाणि रूपाणि भौवादिककर्बतिवत् (173) ज्ञेयानि॥

---

1. 'कृशृशृशलिगर्दिभ्योऽभच्' [द. उ. 7-18] इति औणादिके अभच्प्रत्यये रूपम्।

A. 'पलान्यखाद्यानि खदन् बदद्वपुः गदन् अवाच्यानि रदन् सतां मनः।
मदन् मदादर्दितसंक्षयोऽधुना क्षणं खलो नर्दतु गर्दभस्वरैः॥' धा. का. 1. 8.

B. 'खेदस्त्वियान् पटहगर्दनगर्जिताशे रजे सगर्धनघुगुर्दितवीरलोके। धा. का. 3:31.

## (383) "गर्व दर्पे" (I-भ्वादि:-583. सक. सेट्. पर.)

'माने गर्वयते, दर्पे गर्वतीति भवेच्छपि ॥' (श्लो. 161) इति देवः।

गर्वकः-र्विका, गर्वकः-र्विका, जिगर्विषकः-षिका, जागर्वकः-र्विका; इत्यादीनि रूपाणि भौवादिककर्वतिवत् (173-A) ऊह्यानि। [A]गर्वः-घञ्।

## (384) "गर्व माने" (X-चुरादि:-1907. सक. सेट्. आत्म.)

आगर्वीयः, अदन्तश्चायं धातुः। मानम्=अभिमानः।
'माने गर्वयते, दर्पे गर्वतीति भवेच्छपि ॥' (श्लो. 161) इति देवः।

गर्वकः-र्विका, जिगर्वयिषकः-षिका, [1]गर्वकः-र्विका;
गर्वयिता-त्री, जिगर्वयिषिता-त्री, गर्विता-त्री;
—, [2]गर्वन्-न्ती, गर्विष्यन्-न्ती-ती;
[3]गर्वयमाणः, जिगर्वयिषमाणः; —
गर्वयिष्यमाणः, जिगर्वयिषिष्यमाणः; —
गर्व्-गर्वौ-गर्वः, —, गर्व्-गर्वौ-गर्वः;
गर्वितम्-[B]तः, जिगर्वयिषितः, गर्वितम्-तः-तवान्;
गर्वः, जिगर्वयिषुः, गर्वः;
गर्वयितव्यम्, जिगर्वयिषितव्यम्, गर्वितव्यम्;
गर्वणीयम्, जिगर्वयिषणीयम्, गर्वणीयम्;
गर्व्यम्, जिगर्वयिष्यम्, गर्व्यम्;
ईषद्गर्वः-दुर्गर्वः-सुगर्वः; —, —
गर्व्यमाणः, जिगर्वयिष्यमाणः, गर्व्यमाणः;
गर्वः, जिगर्वयिषः, गर्वः;

---

1. अदन्तपाठसामर्थ्यात् णिचो वैकल्पिकत्वम्। णिजभावपक्षे, सन्नन्ताद्यङन्ताच्च कर्वतिवत् (173-A) रूपाणि ज्ञेयानि।
2. णिजभावपक्षे 'शेषात् कर्तरि—' (1-3-78) इति शतैव।
3. 'आ गर्वादात्मनेपदिनः' (गणसूत्रं चुरादौ) इति आत्मनेपदम्। शानच्।

A. 'अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसर्वकदुष्टभर्वकम्।
कर्वद्वधूकेलिरसेन खर्वितं गर्वावकं शर्वपरेण सर्वताम् ॥' धा. का. 1-74.

B. 'द्रष्टॄणां कुहकोऽथ शूरयितृभिः स्तुत्योऽसिना वीरयां-
चक्रे स्थूलितभीतिरर्थितवधः सत्राशनैर्गर्वितैः ॥' धा. का. 3. 58.

गर्वयितुम्, ·जिगर्वयिषितुम्, गर्वितुम्;
गर्वणा, जिगर्वयिषा, गर्वा;
गर्वणम्, जिगर्वयिषणम्, गर्वणम्;
गर्वयित्वा, जिगर्वयिषित्वा, गर्वित्वा;
प्रगर्व्य, प्रजिगर्वयिष्य, सङ्गर्व्य;
गर्वम् २, } जिगर्वयिषम् २, } गर्वम् २; }
गर्वयित्वा २, } जिगर्वयिषित्वा २, } गर्वित्वा २. }

(385) "गर्ह कुत्सायाम्" (I-भ्वादिः-636. सक. सेट्. आत्म.)

"ण्यन्तस्य ग्रहणे गृहेर्गृहयते तत्रानदन्ताद् गृहेः
मूवादेः शपि गर्हते, श्नि तु पदे गृह्णात्यगृह्णीन च।
गर्हेर्वा णिचि निन्दनार्थविषये गर्हेत् तथा गर्हयेद्
मूवादेः शपि कुत्सनार्थविषये गर्हेर्भवेत् गर्हते॥" (श्लो. 194) इति देवः।

गर्हकः-र्हिका, गर्हकः-र्हिका, जिगर्हिषकः-षिका, [1]जागर्हकः-र्हिका;
गर्हिता-त्री, गर्हयिता-त्री, जिगर्हिषिता-त्री, जागर्हिता-त्री;
— गर्हयन्-न्ती, गर्हयिष्यन्-न्ती-ती; —
गर्हमाणः, गर्हयमाणः, जिगर्हिषमाणः, जागर्ह्यमाणः;
गर्हिष्यमाणः, गर्हयिष्यमाणः, जिगर्हिषिष्यमाणः, जागर्हिष्यमाणः;
[2]घर्ट्-घर्ड्-गर्हौ-गर्हः; — — —
गर्हितम्-तः, [A]विगर्हितम्, गर्हितः, जिगर्हिषितः, जागर्हितः-तवान्;
गर्हः, [3]गर्हणः, गर्हः, जिगर्हिषुः, जागर्हः;
गर्हितव्यम्, गर्हयितव्यम्, जिगर्हिषितव्यम्, जागर्हितव्यम्;
गर्हणीयम्, गर्हणीयम्, जिगर्हिषणीयम्, जागर्हणीयम्;

---

1. 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः।
2. पदान्ते 'हो ढः' (8-2-31) इति ढत्वम्। 'रात् सस्य' (8-2-24) इति नियमात् संयोगान्तलोपो न। 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (8-2-37) इति पदान्तनिमित्तको भष्भावः। चर्त्वं विकल्पेन।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिकः युच्।
A. 'मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम्।
मे? घ्नता भवताऽकारि निश्शङ्कं पापदृश्वना॥' भ. का. 6-132.

| | | | |
|---|---|---|---|
| गर्ह्यम्, | गर्ह्यम्, | जिगर्हिष्यम्, | जागर्ह्यम्; |
| ईषद्गर्हः-दुर्गर्हः-सुगर्हः; | | — | — |
| गर्ह्यमाणः, | गर्ह्यमाणः, | जिगर्हिष्यमाणः, | जागर्ह्यमाणः; |
| गर्हः, | गर्हः, | जिगर्हिषः, | जागर्हः; |
| गर्हितुम्, | गर्हयितुम्, | जिगर्हिषितुम्, | जागर्हितुम्; |
| [A]गर्हा, | गर्हणा, | जिगर्हिषा, | जागर्हा; |
| गर्हणम्, | गर्हणम्, | जिगर्हिषणम्, | जागर्हणम्; |
| गर्हित्वा, | गर्हयित्वा, | जिगर्हिषित्वा, | जागर्हित्वा; |
| विगर्ह्य, | प्रगर्ह्य, | सञ्जिगर्हिष्य, | सञ्जागर्ह्य; |
| गर्हम् २, गर्हित्वा २, | गर्हम् २, गर्हयित्वा २, | जिगर्हिषम् २, जिगर्हिषित्वा २, | जागर्हम् २; जागर्हित्वा २. |

## (386) "गर्ह निन्दायाम्" (X-चुरादिः-1846. अक. सेट्. उभ.)

### आधृषीयः ।

"ण्यन्तस्य ग्रहणे गृहेर्गृहयते तत्नानदन्ताद् गृहेः
भूवादेः शपि गर्हते, श्नि तु पदे गृह्णात्यगृह्णीत च ।
गर्हेर्वा णिचि निन्दनार्थविषये गर्हेत् तथा गर्हयेत्
भूवादेः शपि कुत्सनार्थविषये गर्हेर्भवेत् गर्हते ॥" (श्लो. 194) इति देवः ।

अस्य धातोराधृषीयत्वात् 'आधृषाद्वा' (ग. सू. चुरादौ) इति णिचो वैकल्पिकत्वम् । णिच्पक्षे, णिजभावपक्षे च कुत्सार्थकभौवादिकगर्हतिवत् (385) सर्वाणि रूपाणि ज्ञेयानि । णिजभावपक्षे शुद्धात् सनि, यङि च तत्र लिखितान्येव रूपाण्यस्यापि । शुद्धाद्धातोः 'शेषात् कर्तरि—' (1-3-78) इति शतैव । [B]गर्हन्-न्ती, इति रूपम् । ण्यन्तात् सनि तु—

---

A. 'आशंसितासिमुदितो भुवनप्रसिष्णुं विष्णुं तमेनमसतां ग्लसमानमीहाम् ।
अक्रूर एत्य बहुधा गदमर्हितांहा गर्होज्झितोऽपतदगल्भतमे पदाब्जे ॥'
धा. का. 1-80.

B. 'वचन्तो मानन्तो हरिविभवमानन्दमखिला
बभूवुर्गर्हन्तो मनसि नृपतिं मार्गितखलम् ।
स्त्रियश्चोत्कण्ठन्त्यो ददृशुरजितं मृष्टतनवः
नृपस्त्वेतन्नामर्षत रिपुजनाधर्षितबलः ॥' धा. का. 3. 52.

जिगर्हयिषकः-षिका, जिगर्हयिषितम्-तः-तवान्,
जिगर्हयिषिता-त्री, जिगर्हयिषुः,
जिगर्हयिषिषन्-न्ती, जिगर्हयिषितव्यम्,
जिगर्हयिषिष्यन्-न्ती-ती, जिगर्हयिषणीयम्,
जिगर्हयिषमाणः, जिगर्हयिष्यम्,
जिगर्हयिषिष्यमाणः, ईषज्जिगर्हयिषः-दुर्जिगर्हयिषः-
सुजिगर्हयिषः,
जिगर्हयिट्-[1]जिगर्हयिड्-यिषौ-यिषः, जिगर्हयिष्यमाणः,
जिगर्हयिषः; जिगर्हयिषित्वा;
जिगर्हयिषितुम्; सञ्जिगर्हयिष्य;
जिगर्हयिषा; जिगर्हयिषम् २; जिगर्हयिषित्वा २.
जिगर्हयिषणम्; इति रूपाणि इति विशेषः।

## (387) "गल अदने" (I-भ्वादिः-546. अक. सेट्. पर.)

धातूनामनेकार्थत्वात् स्रवणेऽप्ययं धातुः इति क्षीरस्वामी।

| | | | |
|---|---|---|---|
| गालकः-लिका, | गालकः-लिका, | जिगलिषकः-षिका, | जागलकः-लिका; |
| गलिता-त्री, | गालयिता-त्री, | जिगलिषिता-त्री, | जागलिता-त्री; |
| गलन्-न्ती, | [2]गालयन्-न्ती, | जिगलिषन्-न्ती; | — |
| गलिष्यन्-न्ती-ती, | गालयिष्यन्-न्ती-ती, | जिगलिषिष्यन्-न्ती-ती; | — |
| — | — | जागरयमानः, | जागलिष्यमाणः; |
| सुगल्-सुगलौ-सुगलः; | — | — | — |
| गलितम्-तः-तवान्, | गालितः, | जिगलिषितः, | जागलितः-तवान्; |

1. क्विपि अतो लोपे कृते, 'झलां जशोऽन्ते' (8-2-39) इति डकारः। चर्त्वविकल्पः
2. अस्य धातोः परस्मैपदित्वात् शानच् न। ण्यन्तात् 'निगरणचलनार्थेभ्यः—' (1-3-87) इति निषेधात् 'णिचश्च' (1-3-74) इति प्राप्तः शानजपि न। 'पूर्ववत् सनः' (1-3-62) इति वचनात् सन्नन्तादपि न।

[A]गलः[1], निगलः[B], [2]सुगाली, गालः, जिगलिषुः, जागलः ;

गलितव्यम्, गालयितव्यम्, जिगलिषितव्यम्, जागलितव्यम् ;

गलनीयम्, गालनीयम्, जिगलिषणीयम्, जागलनीयम् ;

गाल्यम्, गाल्यम्, जिगलिष्यम्, जागल्यम् ;

ईषद्गलः-दुर्गलः-सुगलः ; — —

गल्यमानः, गाल्यमानः, जिगलिष्यमाणः, जागल्यमानः ;

गालः, गालः, जिगलिषः, जागलः ;

गलितुम्, गालयितुम्, जिगलिषितुम्, जागलितुम् ;

[3]गलितिः, गालना, जिगलिषा, जागला ;

विगलनम्, गालनम्, जिगलिषणम्, जागलनम् ;

गलित्वा, गालयित्वा, जिगलिषित्वा, जागलित्वा ;

निगल्य, निगाल्य, प्रजिगलिष्य, प्रजागल्य ;

गालम् २, गलित्वा २, } गालम् २, गालयित्वा २, } जिगलिषम् २, जिगलिषित्वा २, } जागलम् २ ; जागलित्वा २. }

## (388) "गल स्रवणे" (X-चुरादिः-1700-सक. सेट्. आत्म. आकुस्मीयः।)

[4]गालकः-लिका, [5]जिगालयिषकः-षिका ;

गालयिता-त्री, जिगालयिषिता-त्री ;

---

1. गलति=भक्षयतीति कर्तरि पचाद्यच्। 'गोचरसञ्चर—' (3-3-119) इति सूत्रे चकारस्यानुक्तसमुच्चयार्थकत्वात् घञपवादो घः संज्ञायाम्—इति माधवधातुवृत्तौ।
2. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
3. 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति वचनात् इड् भवति, ग्रहादयो= ग्रहप्रकारा इत्युक्तत्वात्।
4. 'अत उपधायाः' (7-2-116) इति णौ वृद्धिः। 'णेरनिटि' (6-4-51) इति णिलोपः।
5. ण्यन्तात् सनि गुणायादेशौ। 'सन्यतः' (7-4-79) इतीत्त्वमभ्यासे।

A. 'सुमार्गशीलात् स्खलतां खलात्मनां गलच्छिदार्थं सलितं महीतलम्।
दलत्तनुप्रस्खलितान् परान् प्रति प्रस्खलिताखोडसुदर्शनायुधम्॥' धा. का. 1-70.

B. 'चरमतश्च ऋणादिव देवकीपतिरमुच्यत शृङ्खलतः स्थिरात्।
निखिलबन्धनिवर्तकसन्निधौ विगलनं निगलस्य किमद्भुतम्॥'
यादवाभ्युदये—3-11.

[1]गालयमान:, जिगालयिषमाण: ;
गालयिष्यमाण:, जिगालयिषिष्यमाण: ;
सुगाल्-सुगालौ-सुगाल: ; —
गालितम्-त:-तवान्, जिगालयिषित:-तवान् ;
गाल:, जिगालयिषु: ;
गालयितव्यम्, जिगालयिषितव्यम् ;
गालनीयम्, जिगालयिषणीयम् ;
गाल्यम्, जिगालयिष्यम् ;
ईषद्गाल:-दुर्गाल:-सुगाल:; —
गाल्यमान:, जिगालयिष्यमाण: ;
गाल:, जिगालयिष: ;
गालयितुम्, जिगालयिषितुम् ;
गालना, जिगालयिषा ;
[A]गालनम्, जिगालयिषणम् ;
गालयित्वा, जिगालयिषित्वा ;
निगाल्य, प्रजिगालयिष्य ;
गालम् २, } जिगालयिषम् २ ; }
गालयित्वा २, } जिगालयिषित्वा २ }

(389) " गल्भ धाष्टर्ये " (I-भ्वादि:-392. अक. सेट्. आत्म.)

गल्भक:-ल्भिका, गल्भक:-ल्भिका, जिगल्भिषक:-षिका, जागल्भक:-ल्भिका ;
गल्भिता-त्री, गल्भयिता-त्री, जिगल्भिषिता-त्री, जागल्भिता-त्री ;
— गल्भयन्-न्ती, गल्भयिष्यन्-न्ती-ती ; —
प्रगल्भमान:, [2]अवगल्भमान:, गल्भयमान:, जिगल्भिषमाण:, जागल्भ्यमान: ;

---

1. 'आकुस्मादात्मनेपदिन:' (ग. सू. चुरादौ) इति आत्मनेपदमेव ।

2. अवगल्भ इवाचरन्=अवगल्भमान: । 'आचारेऽवगल्भ—' (वा. 3-1-11)

A. 'कुत्स्या हि गालनपटा इव कष्टमेते दुष्कीर्तिमालनपरा: खलु कूटवृत्त्या ।
तद्वचनं निरसितुं न हि वर्षिता: स्म: किं कुर्महे खलजना इह मादयन्ताम् ॥'
धा. का. 3-36.

| | | | |
|---|---|---|---|
| गल्भिष्यमाणः, | गल्भयिष्यमाणः, | जिगल्भिषिष्यमाणः, | जागल्भिष्यमाणः, |
| | | — | — |
| [1]प्रगल्-प्रगल्भौ-प्रगल्भः; | | | |
| गल्भितम्-तः-तवान्, | गल्भितः, | जिगल्भिषितः, | जागल्भितः-तवान्; |
| गल्भः-प्रगल्भः-अवगल्भः, [2]प्रगल्भी, | [3]गल्भनः, गल्भः, | जिगल्भिषुः, | जागल्भः; |
| गल्भितव्यम्, | गल्भयितव्यम्, | जिगल्भिषितव्यम्, | जागल्भितव्यम्; |
| गल्भनीयम्, | गल्भनीयम्, | जिगल्भिषणीयम्, | जागल्भनीयम्; |
| गल्भ्यम्, | गल्भ्यम्, | जिगल्भिष्यम्, | जागल्भ्यम्; |
| | | — | — |
| ईषद्गल्भः-दुर्गल्भः-सुगल्भः; | | | |
| गल्भ्यमानः, | गल्भ्यमानः, | जिगल्भिष्यमाणः, | जागल्भ्यमानः; |
| गल्भः, | गल्भः | जिगल्भिषः, | जागल्भः; |
| गल्भितुम्, | गल्भयितुम्, | जिगल्भिषितुम्, | जागल्भितुम्; |
| [4]गल्भा, | गल्भना, | जिगल्भिषा, | जागल्भा; |
| गल्भनम्, | गल्भनम्, | जिगल्भिषणम्, | जागल्भनम्; |
| गल्भित्वा, | गल्भयित्वा, | जिगल्भिषित्वा, | जागल्भित्वा; |
| प्रगल्भ्य, | प्रगल्भ्य, | प्रजिगल्भिष्य, | प्रजागल्भ्य; |
| गल्भम् २, गल्भित्वा २, | गल्भम् २, गल्भयित्वा २, | जिगल्भिषम् २, जिगल्भिषित्वा २, | जागल्भम् २; जागल्भित्वा २. |

## (390) "गल्ह कुत्सायाम्" (I-भ्वादिः-637. सक. सेट्. आत्म.)

क्विपि, प्रगल्-प्रगल्हौ-प्रगल्हः, इति रूपम्। हकारस्य संयोगान्तलोपः। अन्यानि सर्वाणि रूपाणि-ण्यन्तात्-सन्नन्तात्-यङन्ताच्च गर्हतिवत् (385) बोध्यानि। यथा—गल्हकः-ल्हिका, गल्हकः-ल्हिका, जिगल्हिषकः-षिका, जागल्हकः-ल्हिका, इत्यादिकानि। ण्यति [A]गल्ह्यम्।

---

इति अकारस्य अनुदात्तत्वप्रतिज्ञानात् शानच् प्रत्ययः।

1. क्विपि भकारस्य संयोगान्तलोपः।
2. 'सुप्यजातौ'—(3-2-78) इति ताच्छील्ये णिनिः।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिकः युच्।
4. स्त्रियां भावादौ 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः।

A. अक्रूर एत्य बहुधा गतमंहितांहा
गर्होज्झितोऽपतदगल्ह्यतमे पदाब्जे ॥' धा. का. 1-80.

**(391) "गवेष मार्गणे"** (X-चुरादिः-1884. सक. सेट्. उभ.) अदन्तः।

गवेषकः-षिका, जिगवेषयिषकः-षिका ; गवेषयिता-त्री, जिगवेषयिषिता-त्री, क्विपि-गवेट्-गवेषौ-गवेषः, इत्यादीनि रूपाणि सर्वाण्यपि कथयतिवत् (162) ज्ञेयानि। तुमुनि—गवेषयितुम्।

**(392) "गा स्तुतौ"** (III-जुहोत्यादिः-1106. सक. अनि. पर.) छान्दसः।

'जनने च' इति क्षीरस्वामी।

[1]गायकः-यिका, [2]गापकः-पिका, जिगासकः-सिका, [3]जेगीयकः-यिका ;
गाता-त्री, गापयिता-त्री, जिगासिता-त्री, जेगीयिता-त्री ;
[4]जिगत्-जिगतौ-जिगतः, गापयन्-न्ती, जिगासन्-न्ती ; —
गास्यन्-न्ती-ती, गापयिष्यन्-न्ती-ती, जिगासिष्यन्-न्ती-ती ; —
— गापयमानः, गापयिष्यमाणः, — जेगीयमानः, जेगीयिष्यमाणः ;
सुगाः-सुगौ-सुगाः ; — — —
[5]गीतम्-तः-तवान्, गापितः, जिगासितः, जेगीयितः-तवान् ;
[6]गायः, [7]देवगः, [8]प्रगः, [9]सुगावा, सुगामा, गापः, जिगासुः, [10]जागः ;
गातव्यम्, गापयितव्यम्, जिगासितव्यम्, जेगीयितव्यम् ;
गानीयम्, गापनीयम्, जिगासनीयम्, जेगीयनीयम् ;

---

1. 'आतो युक् चिण्कृतोः' (7-3-33) इत्यङ्गस्य युगागमः। एवं गायः इत्यादिषु।
2. णौ परतः 'अर्तिह्री—' (7-3-36) इत्यादिना आदन्तलक्षणः पुक्।
3. 'घुमास्थागापा—' (6-4-66) इति ईत्वे, द्विर्वचने 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणः।
4. जुहोत्यादित्वात् 'श्लौ' (6-1-10) इति द्वित्वे, उत्तरखण्डे 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे, अभ्यासस्य 'बहुलं छन्दसि' (7-4-78) इति इत्वम्।
5. 'घुमास्थागापाजहातिसां हलि' (6-4-66) इति ईत्वम्। एवं हलादिक्ङिति प्रत्यये परतः—गीतिः-गीत्वा-सङ्गीय-गीयमानः इत्यादिषु ईत्वं ज्ञेयम्।
6. 'श्याऽऽद्व्यध—' (3-1-141) इत्यादिना आदन्तलक्षणः णः प्रत्ययः कर्तरि।
7. 'आतोऽनुपसर्गे कः' (3-2-3) इति, कप्रत्ययः कर्मण्युपपदे। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः। देवान् जिगाति=स्तौति इत्यर्थः।
8. 'आतश्चोपसर्गे' (3-1-136) इति कः प्रत्ययः। आकारलोपः।
9. 'आतो मनिन्क्वनिब्वनिपश्च' (3-2-74) इति वनिन्-मनिनौ प्रत्ययौ।
10. 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' (परिभाषा-52) इति न्यायेन ईत्वं न। द्वित्वं, अभ्यासदीर्घः। 'यङोऽचि च' (2-4-74) इति लुक्।

| | | | |
|---|---|---|---|
| [1]गेयम्, | गाप्यम्, | जिगास्यम्, | जेगीय्यम्; |
| [2]ईषद्गानः-दुर्गानः-सुगानः; | | — | — |
| गीयमानः, | गाप्यमानः, | जिगास्यमानः, | जेगीय्यमानः; |
| गायः, | गापः, | जिगासः, | जेगीयः; |
| गातुम्, | गापयितुम्, | जिगासितुम्, | जेगीयितुम्; |
| गीतिः, [3]सङ्गीतिः, | गापना, | जिगासा, | जेगीया; |
| गानम्, | गापनम्, | जिगासनम्, | जेगीयनम्; |
| गीत्वा, | गापयित्वा, | जिगासित्वा, | जेगीयित्वा; |
| सङ्गीय, | सङ्गाप्य, | सञ्जिगास्य, | सञ्जेगीय्य; |
| गायम् २, गीत्वा २, | गापम् २, गापयित्वा २, | जिगासम् २, जिगासित्वा २, | जेगीयम् २; जेगीयित्वा २. |

(393) **"गाङ् गतौ"** (I-भ्वादिः-950. सक. अनि. आत्म.) ★

'**गाते गाङो गतावर्थे, कै गै शब्देऽस्य गायति।**' (श्लो. 5) इति **देवः**।

| | | | |
|---|---|---|---|
| [4]गायकः-यिका, | [5]गापकः-पिका, | जिगासकः-सिका, | [6]जेगीयकः-यिका; |
| गाता-त्री, | गापयिता-त्री, | जिगासिता-त्री, | जेगीयिता-त्री; |
| — | गापयन्-न्ती, | गापयिष्यन्-न्ती-ती; | — |
| [7]गानः, | गापयमानः, | जिगासमानः, | जेगीयमानः; |
| गास्यमानः, | गापयिष्यमाणः, | जिगासिष्यमाणः, | जेगीयिष्यमाणः; |
| सुगाः-सुगौ-सुगाः; | — | — | — |
| गीतम्-तः-तवान्, | गापितः, | जिगासितः, | जेगीयितः-तवान्; |

---

1. 'अचो यत्' (3-1-97) इति यति, 'ईद् यति' (6-4-65) इति ईत्त्वे गुणः।
2. ईषदाद्युपपदेषु 'आतो युच्' (3-3-128) इति खलपवादो युच्।
3. सोपसर्गेऽपि 'स्थागापापचो भावे' (3-3-95) इति स्त्रियां भावादौ क्तिन्।
4. 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवं घञ्णमुलोरपि युक्।
5. णौ, आदन्तलक्षणः पुगागमःसर्वत्र।
6. 'घुमास्थागापा—' (6-4-66) इतीत्वम्। एवं **गीतम्** - **गीतिः**—इत्यादौ च ईत्वं ज्ञेयम्।
7. शानचि शपि प्रत्यये सवर्णदीर्घे च रूपमेवम्। अदन्ताङ्गाभावान्मुगागमो न।

★"—'गापोष्टक्' (3-2-8) इत्यत्र **न्यास-पदमञ्जर्योः**—'अयं धातुरादादिकः।' इति स्थितम्। शपि पाठे चास्य प्रयोजनं नास्ति। अस्माभिस्तु क्वापि पठितव्य इति **मैत्रेयाद्यनुसारेण** इह (भ्वादौ) पठितः।'' इति **माधवधातुवृत्तिः**।

गायः, सुगः, ग्रामगः, [1]सिंहगायी, गापः, जिगासुः, [2]जागाः ;

| | | | |
|---|---|---|---|
| गातव्यम्, | गापयितव्यम्, | जिगासितव्यम्, | जेगीयितव्यम् ; |
| गानीयम्, | गापनीयम्, | जिगासनीयम्, | जेगीयनीयम् ; |
| गेयम्, | गाप्यम्, | जिगास्यम्, | जेगीय्यम् ; |
| [3]ईषद्गानः-दुर्गानः-सुगानः ; | | — | — |
| गीयमानः, | गाप्यमानः, | जिगास्यमानः, | जेगीय्यमानः ; |
| गायः, | गापः, | जिगासः, | जेगीयः ; |
| गातुम्, | गापयितुम्, | जिगासितुम्, | जेगीयितुम् ; |
| गीतिः-[4]सङ्गीतिः, | गापना, | जिगासा, | जेगीया ; |
| गानम्, | गापनम्, | जिगासनम्, | जेगीयनम् ; |
| गीत्वा, | गापयित्वा, | जिगासित्वा, | जेगीयित्वा ; |
| प्रगीय, | प्रगाप्य, | प्रजिगास्य, | प्रजेगीय्य ; |
| गायम् २, गीत्वा २, | गापम् २, गापयित्वा २, | जिगासम् २, जिगासित्वा २, | जेगीयम् २ ; जेगीयित्वा २. |

## (394) "गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च"

(I-भ्वादिः-4. सक. सेट्. आत्म.) [अ]

"आत्मयापनं तत्साधनं च=प्रतिष्ठा। लब्धुमिच्छा=लिप्सा। एकत्र स्थापनं, सन्दर्भो वा ग्रन्थः। तत्र--आद्ये, अकर्मकः, इतरयोः सकर्मकः।" इति माधवधातुवृत्तौ।

| | | | |
|---|---|---|---|
| गाधकः-धिका, | गाधकः-धिका, | जिगाधिषकः-षिका, | [5]जागाधकः-धिका ; |
| गाधिता-त्री, | गाधयिता-त्री, | जिगाधिषिता-त्री, | जागाधिता-त्री ; |

---

1. 'कर्तर्युपमाने' (3-2-79) इति णिनिः।
2. यङन्तादचि, द्वित्वे, अभ्यासस्य दीर्घे च सति, 'यङोऽचि च' (2-4-74) इति यङो लुकि रूपमेवं भवति।
3. ईषदाद्युपपदेषु 'आतो युच्' (3-3-128) इति खलपवादो युच्।
4. सोपसर्गेऽपि 'स्थागापापचो भावे' (3-3-95) इति भावे क्तिन्।
5. यङन्तात् आर्धधातुकप्रत्यये परतः सर्वत्र यकारलोपः, 'अतो लोपः' (6-4-48) इत्यकारलोपः।

[अ]. 'ग्रन्थे च' इति पृथक्पाठो विरलप्रयोगार्थः। इति क्षीरस्वामी।

| | | | |
|---|---|---|---|
| — | [1]गाधयन्-न्ती, | गाधयिष्यन्-न्ती-ती ; | — |
| गाधमानः, | गाधयमानः, | जिगाधिषमाणः, | जागाध्यमानः ; |
| गाधिष्यमाणः, | गाधयिष्यमाणः, | जिगाधिषिष्यमाणः, | जागाधिष्यमाणः ; |
| [2]सुगात्-सुगाद्-सुगाधौ-सुगाधः ; | | — | — |
| [3]गाधितम्[A]-तः, | गाधितः, | जिगाधिषितः, | जागाधितः-तवान् ; |
| गाधः, [4]गाधनः, | [5]प्रगाधी, गाधः, | जिगाधिषुः, | जागाधः ; |
| गाधितव्यम्, | गाधयितव्यम्, | जिगाधिषितव्यम्, | जागाधितव्यम् ; |
| गाधनीयम्, | गाधनीयम्, | जिगाधिषणीयम्, | जागाधनीयम् ; |
| गाध्यम्, | गाध्यम्, | जिगाधिष्यम्, | जागाध्यम् ; |
| ईषद्गाधः-दुर्गाधः-सुगाधः ; | | — | — |
| गाध्यमानः, | गाध्यमानः, | जिगाधिष्यमाणः, | जागाध्यमानः ; |
| गाधः, | गाधः, | जिगाधिषः, | जागाधः ; |
| गाधितुम्, | गाधयितुम्, | जिगाधिषितुम्, | जागाधितुम् ; |
| [6]गाधा, | गाधना, | जिगाधिषा, | जागाधा ; |
| गाधनम्, | गाधनम्, | जिगाधिषणम्, | जागाधनम् ; |
| गाधित्वा, | गाधयित्वा, | जिगाधिषित्वा, | जागाधित्वा ; |
| प्रगाध्य, | प्रगाध्य, | प्रजिगाधिष्य, | प्रजागाध्य ; |
| गाधम् २, } गाधित्वा २, } | गाधम् २, } गाधयित्वा २, } | जिगाधिषम् २, } जिगाधिषित्वा २, } | जागाधम् २ ; } जागाधित्वा २. } |

## (395) " गाहू विलोडने " (I-भ्वादिः-649. सक. वेट्. आत्म.)

विलोडनम्=क्षोभणम् । 'विलोडनम्=परिमलनम् ।' इति क्षीरस्वामी ।

---

1. चित्तवत्कर्तृकत्वे 'अणावकर्मकात्—' (1-3-88) इति ण्यन्तात् परस्मैपदमेव ।
2. पदान्ते, 'एकाचो बशो भष्—' (8-2-37) इति भष्भावे चर्त्वविकल्पः ।
3. अस्याकर्मकत्वे, 'गत्यर्थाकर्मक—' (3-4-72) 'क्तोऽधिकरणे—' (3-4-76) इति सूत्राभ्यां कर्तरि, अधिकरणे च क्तप्रत्ययो भवति ।
4. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।
5. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।
6. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां अकारप्रत्ययः ।

A. 'स गान्दिनीभूरथ गोकुलैधितं स्पर्धालुधीगाधितकार्यबाधिनम् ।
ह्रस्यन् हरिं नाधितलोकनाथकं देधे मुदास्कुन्दितमन्तरिन्द्रियम् ॥'
धा. का. 1-2: (कर्तरि, कर्मणि, वा अत्र क्तः ॥)

गाहकः-हिका, गाहकः-हिका, [1]जिगाहिषकः-षिका-जिघाक्षकः-क्षिका,
जागाहकः-हिका ;

गाहिता-त्री [A]विगाढा[2]-ढ्री, गाहयिता-त्री, जिगाहिषिता-जिघाक्षिता-त्री,
जागाहिता-त्री ;

— गाहयन्-न्ती, गाहयिष्यन्-न्ती-ती ; —

गाहमानः, गाहयमानः, जिगाहिषमाणः-जिघाक्षमाणः, जागाह्यमानः ;

गाहिष्यमाणः-[3]घाक्ष्यमाणः, गाहयिष्यमाणः, जिगाहिषिष्यमाणः-
जिघाक्षिष्यमाणः, जागाहिष्यमाणः ;

[4]सुघाट्-सुघाड्-सुगाहौ-सुगाहः ; — —

[5]गाढम्-ढः-ढवान्, गाहितः, जिगाहिषितः-जिघाक्षितः, जागाहितः-तवान् ;

[6]गहः-गहा, गाहः-[7]गाही, [8]गाहनः, [9]अवगाही, गाहः, जिगाहिषुः-
जिघाक्षुः, जागाहः ;

गाहितव्यम्-गाढव्यम्, गाहयितव्यम्, जिगाहिषितव्यम्-जिघाक्षितव्यम्,
जागाहितव्यम् ;

गाहनीयम्, गाहनीयम्, जिगाहिषणीयम्-जिघाक्षणीयम्, जागाहनीयम् ;

गाह्यम्, गाह्यम्, जिगाहिष्यम्-जिघाक्ष्यम्, जागाह्यम् ;

ईषद्गाहः-दुर्गाहः-सुगाहः ; — —

अवगाह्यमानः, गाह्यमानः, जिगाहिष्यमाणः-जिघाक्ष्यमाणः, जागाह्यमानः ;

---

1. धातोरस्य ऊदित्त्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति वा इट्। इडभावपक्षे—हकारस्य ढत्वे, गकारस्य भष्भावे, 'षढोः कः सि' (8-2-41) इति कत्वे, षत्वे च जिघाक्षकः इति रूपम्। इडभावपक्षे सनि सर्वत्र एवमेव प्रक्रिया ज्ञेया।
2. इडभावपक्षे—ढत्व-धत्व-ष्टुत्व-ढलोप-दीर्घाः। एवमिडभावपक्षे तव्यदादिषु ज्ञेयम्।
3. इडभावपक्षे—ढत्व-भष्भाव-कत्व-षत्वेषु रूपमेवम्।
4. ढत्व-भष्भाव-चर्त्वेषु रूपम्।
5. ऊदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायां 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः।
6. 'गह्वादिभ्यश्च' (4-2-138) इति निपातनात् पचाद्यचि उपधायाः ह्रस्वे, साधुः।
7. 'गाहट्' इति पचादिषु (3-1-134) पाठात् टित्त्वेन स्त्रियां ङीप्।
8. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिके युचि अनादेशः।
9. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।

A. 'विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः।
अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनाम्॥' भ. का. 9-29.

गाहः, अवगाहः, गाहः, जिगाहिषः-जिघाक्षः, जागाहः ;

विगाहितुम्-गाढुम्, गाहयितुम्, जिगाहिषितुम्-जिघाक्षितुम्, जागाहितुम् ;

[1]गाहा, गाहना, जिगाहिषा-जिघाक्षा, जागाहा ;

गाहनम्- [2]गहनम्, गाहनम्, जिगाहिषणम्-जिघाक्षणम्, जागाहनम् ;

गाहित्वा-गाढ्वा, गाहयित्वा, जिगाहिषित्वा-जिघाक्षित्वा, जागाहित्वा ;

अवगाह्य, अवगाह्य, विजिगाहिष्य-विजिघाक्ष्य, विजागाह्य ;

गाहम् २, गाहित्वा २-गाढ्वा २, } गाहम् २, गाहयित्वा २, } जिगाहिषम् २-जिघाक्षम् २, जिगाहिषित्वा २-जिघाक्षित्वा २, } जागाहम् २ ; जागाहित्वा २; }

[3]गह्वरम्.

## (396) "गु पुरीषोत्सर्गे" (VI-तुदादिः-1399. अक. अनि. पर.)

### कुटादिः ।

[4]गावकः-विका, गावकः-विका, [5]जुगूषकः-षिका, [6]जोगूयकः-यिका ;

[7]गुता-त्री, गावयिता-त्री, जुगूषिता-त्री, जोगूयिता-त्री ;

[8]गुवन्[A]-न्ती, गावयन्-न्ती, जुगूषन्-न्ती ; —

---

1. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारप्रत्ययः ।

2. 'कृच्छ्रगहनयोः कषः' (7-2-22), 'सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्' (वा. 3-1-14) इति सूत्रवार्तिकनिर्देशात् ल्युटि उपधाया ह्रस्वो भवति ।

3. 'छित्वरगह्वर—' (द. उ. 8-49.) इति निपातनात् करचि उपधाह्रस्वः । इति मा. धा. वृत्तिः । गह्वरम् = गहनम् ।

4. अस्य कुटादित्वेऽपि, ण्वुलो णित्वात्, णिद्भिन्नस्यैव ङित्त्वविधानात् 'गाङ्कुटादिभ्यः—' (1-2-1) इति ङित्त्वं न ।

5. 'अज्झनगमां सनि' (6-4-16) इति दीर्घः ।

6. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः । अभ्यासस्य गुणः ।

7. तृचो ङिद्वद्भावाद् गुणो न । एवं ञ्णिद्भिन्ने सर्वत्र गुणवृद्धिनिषेधो बोध्यः ।

8. 'तुदादिभ्यः शः' (3-1-77) इति शः विकरणप्रत्ययः । 'अचि श्नुधातु—' (6-4-77) इत्युवङादेशः ।

A. 'नूत्या किं भयधूतविद्रुतगुवल्लोकं तदा तद्भुवत्-
कोदण्डं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥' धा. का. 8. 82.

गुष्यन्-न्ती-ती, गावयिष्यन्-न्ती-ती, जुगूषिष्यन्-न्ती-ती ; —
— गावयमानः ; गावयिष्यमाणः, — जोगूयमानः-जोगूयिष्यमाणः ;
प्रगुत्-प्रगुतौ-प्रगुतः ; — — —
[1]गूनम्-नः-नवान् ; गावितः, जुगूषितः, जोगूयितः-तवान् ;
गुवः, गावः, जुगूषुः, [2]जोगुवः ;
गुतव्यम्, गावयितव्यम्, जुगूषितव्यम्, जोगूयितव्यम् ;
गुवनीयम्, गावनीयम्, जुगूषणीयम्, जोगूयनीयम् ;
[3]गुयम्, [4]अवश्यगाव्यम्, गाव्यम्, जुगूष्यम्, जोगूय्यम् ;
ईषद्गुवः-दुर्गुवः-सुगुवः ; — —
[5]गूयमानः, गाव्यमानः, जुगूष्यमाणः, जोगूय्यमानः ;
[6]गुवः, गावः, जुगूषः, जोगूयः ;
गुतुम्, गावयितुम्, जुगूषितुम्, जोगूयितुम् ;
गुतिः, गावना, जुगूषा, जोगूया ;
गुवनम्, गावनम्, जुगूषणम्, जोगूयनम् ;
गुत्वा, गावयित्वा, जुगूषित्वा, जोगूयित्वा ;
सङ्गुत्य, सङ्गाव्य, सञ्जुगूष्य, सञ्जोगूय्य ;
गावम् २, } गावम् २, } जुगूषम् २, } जोगूयम् २ ; }
गुत्वा २, } गावयित्वा २, } जुगूषित्वा २, } जोगूयित्वा २. }

## (397) "गुङ् अव्यक्ते शब्दे" (I-भ्वादिः-949. सक. अनि. आत्म.)

गावकः-विका, गावकः-विका, जुगूषकः-षिका, जोगूयकः-यिका ;
[A]गवमानः, [7]गुतः, इत्यादीनि सर्वाण्यपि रूपाणि कुत्रतिवत् (198) ज्ञेयानि।

---

1. 'दुग्वोर्दीर्घश्च' (वा.8-2-44) इति निष्ठानत्वम् दीर्घश्च ।
2. यङो लुकि उवङादेशः ।
3. ङिद्वद्भावादङ्गस्य गुणो न ।
4. 'ओरावश्यके' (3-1-125) इति ण्यत् ।
5. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
6. 'ऋदोरप्' (3-3-57) इति अप् । उवङ् ।
7. 'दुग्वोर्दीर्घश्च' (वा. 8-2-44) इति निष्ठानत्वदीर्घे नास्य धातोर्भवतः—निरनुबन्धकपरिभाषया तौदादिकस्यैव तत्र ग्रहणात् ।

A. 'श्रुत्यन्तवाचा ध्रुवया प्रदूनं घोरद्रवच्चक्रजिताङ्गितारिम् ।
स्मितार्द्रवक्त्रं गवमानभूषं गै त्वां घुताशं कुतशङ्खघोषैः ॥' धा, का. 2. 35.

'न कवतेर्यङि' (7-4-63) इति निषेधस्तु नात्र प्रवर्तते—इति विशेषः ।

(398) "गुज शब्दे" (VI-तुदादिः-1369. सक. सेट्. पर.) कुटादिः ।

"गुञ्जेदव्यक्तशब्दे स्यात्, शब्दमात्रे गुजेदिति॥" (श्लो. 67) इति देवः ।

'अव्यक्ते शब्दे' इत्यात्रेयः ।

गोजकः-जिका गोजकः-जिका, जुगुजिषकः-षिका, जोगुजकः-जिका, [A]गुजन्-न्ती-ती, गोजः इत्यादीनि तौदादिककुचतिवत् (202) सर्वाणि रूपाणि बोध्यानि ।

(399) गुजि अव्यक्ते शब्दे" (I-भ्वादिः-203. सक. सेट्. पर.)

'गुञ्जेदव्यक्तशब्दे स्यात्, शब्दमात्रे गुजेदिति ॥' (श्लो. 67) इति देवः । 'गुज' इति केचित् पठन्ति । इदित्पक्षे गुञ्जकः-ञ्जिका, गुञ्जकः-ञ्जिका, जुगुञ्जिषकः-षिका, जोगुञ्जकः-ञ्जिका, गुञ्जन्-न्ती, गुञ्जा ; इत्यादीनि रूपाणि कुण्ठतिवत् (209)ज्ञेयानि । अनिदित्पक्षे गोजकः-जिका, इत्यादीनि रूपाणि भौवादिककोचतिवत् (200) ज्ञेयानि ।

(400) "गुठि वेष्टने" (X-चुरादिः-1584. सक. सेट्. उभ.)

'गुडि वेष्टने' इत्यस्य पाठान्तरम् ।

गुण्ठकः-ण्ठिका, जुगुण्ठयिषकः-षिका, गुण्ठयिता-त्री, जुगुण्ठयिषिता-त्री ; इत्यादीनि सर्वाणि रूपाणि चौरादिककुण्ठयतिवत् (210) ज्ञेयानि ।

(401) "गुड रक्षायाम्" (VI-तुदादिः-1370. अक. सेट्. पर.)

कुटादिः ।

गोडकः-डिका, गोडकः-डिका, जुगुडिषकः-षिका, जोगुडकः-डिका ; [A]सुगुडितम्-तः-तवान्, इत्यादीनि रूपाणि सर्वाण्यपि तौदादिककुटतिवत् (204) ज्ञेयानि ।

(402) "गुडि वेष्टने" (X-चुरादिः-1584. सक. सेट्. उभ.)

गुण्डकः-ण्डिका, जुगुण्डयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि

---

A. 'ततोऽतिकुटिलाशयैः प्रपुटितैः कुचज्जीवितैः

गुजद्भिरपि सैनिकैः सुगुडितां द्विपद्भिर्जनान् ।' धा. का. 2. 80.

चौरादिककुण्ठयतिवत् (210) ज्ञेयानि । [A]गुण्ठितः ।

**(403) "गुण आमन्त्रणे"** (X-चुरादिः-1895. सक. सेट्. उभ.) अदन्तः ।

गुणकः-णिका, जुगुणयिषकः-षिका, [B]गुणयन्-न्ती, जुगुणयिषन्-न्ती; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकादन्तकुणयतिवत् (216) ज्ञेयानि ।

**(404) "गुद क्रीडायामेव"** (I-भ्वादिः-24. अक. सेट्. आत्म.) [अ]

गोदकः-दिका, गोदकः-दिका, [1]जुगुदिषकः-जुगोदिषकः-षिका, जोगुदकः-दिका;

गोदिता-त्री, गोदयिता-त्री, जुगुदिषिता-जुगोदिषिता-त्री, जोगुदिता-त्री;

— गोदयन्-न्ती, गोदयिष्यन्-न्ती-ती; — —

गोदमानः, गोदयमानः, जुगुदिषमाणः-जुगोदिषमाणः, जोगुद्यमानः;

गोदिष्यमाणः, गोदयिष्यमाणः, जुगुदिषिष्यमाणः-जुगोदिषिष्यमाणः, जोगुदिष्यमाणः;

सुगुत्-सुगुद्-सुगुदौ-सुगुदः; — — —

[2]गुदितम्-गोदितम्-तः, गोदितः, जुगुदिषितः-जुगोदिषितः, जोगुदितः-तवान्;

[3]गुदम्, गोदः, जुगुदिषुः-जुगोदिषुः, जोगुदः;

गोदितव्यम्, गोदयितव्यम्, जुगुदिषितव्यम्-जुगोदिषितव्यम्, जोगुदितव्यम्;

---

1. 'रलोव्युपधात्—' (1-2-26) इति क्त्वासनोः कित्त्वविकल्पनात्, कदाचिद् गुणाभावः । एवं क्त्वायामपि कित्त्वविकल्पः ।

2. 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति कित्त्वविकल्पः ।

3. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः । क्लीबत्वं स्वभावात् ।

[अ] 'कुर्द खुर्द गुर्द गुद क्रीडायामेव' इति पठित्वा, माधवधातुवृत्तौ "—गुद-क्रीडा=गुदविहारः" इति चरके । मैत्रेयकाश्यपौ 'गुद' इत्यपि पृथग् धातुरिति । अत्र, एवकारो धातूनामनेकार्थत्वे ज्ञापक इत्युक्तम् ।" इति प्रोक्तम् । "उपाध्यायास्तु गुदक्रीडायाम्=पायुविहारे इति व्याख्यन् । तन्न इति सभ्याः ।" इति क्षीरतरङ्गिणी ।

A. 'अश्वे व्यखण्डदचखण्डदघाघुरादीन् धेनूरकुण्ठदभिगुण्ठितपीतचेलः ।' धा.का.3-19.

B. 'स्वामास्यान् कुणयन् भटांश्च गुणयन् नृणां मुदं स्तेनयन् ॥' धा. का. 3-57.

गोदनीयम्, गोदनीयम्, जुगुदिषणीयम्-जुगोदिषणीयम्, जोगुदनीयम्;
गोद्यम्, गोद्यम्, जुगुदिष्यम्-जुगोदिष्यम्, जोगुद्यम्;
— —
ईषद्गोदः-दुर्गोदः-सुगोदः;
गुद्यमानः, गोद्यमानः, जुगुदिष्यमाणः-जुगोदिष्यमाणः, जोगुद्यमानः;
[A]गोदः, गोदः, जुगुदिषः-जुगोदिषः, जोगुदः;
गोदितुम्, गोदयितुम्, जुगुदिषितुम्-जुगोदिषितुम्, जोगुदितुम्;
गुत्तिः, गोदना, जुगुदिषा-जुगोदिषा, जोगुदा;
गोदनम्, गोदनम्, जुगुदिषणम्-जुगोदिषणम्, जोगुदनम्;
गुदित्वा-गोदित्वा, गोदयित्वा, जुगुदिषित्वा-जुगोदिषित्वा, जोगुदित्वा;
प्रगुद्य, प्रगोद्य, प्रजुगुदिष्य-प्रजुगोदिष्य, प्रजोगुद्य;
गोदम् २, गुदित्वा-गोदित्वा २, } गोदम् २, गोदयित्वा २, } जुगुदिषम् २-जुगोदिषम् २, जुगुदिषित्वा २-जुगोदिषित्वा २, } जोगुदम् २; जोगुदित्वा २.

## (405) "गुध परिवेष्टने" (IV-दिवादिः-1120. अक. सेट्. पर.)

"गुधेर्गुध्नाति रोषेऽर्थे, गुध्येत तु परिवेष्टने।" (श्लो. 121.) इति देवः।

गोधकः-धिका, गोधकः-धिका, [1]जुगुधिषकः-जुगोधिषकः, जोगुधकः-धिका;
गोधिता-त्री, गोधयिता-त्री, जुगुधिषिता-जुगोधिषिता-त्री, जोगुधिता-त्री;
[2]गुध्यन्-न्ती, गोधयन्-न्ती, जुगुधिषन् जुगोधिषन्-न्ती; —
गोधिष्यन्-न्ती-ती, गोधयिष्यन्-न्ती-ती, जुगुधिषिष्यन्-जुगोधिषिष्यन्-न्ती-ती,
— गोधयमानः, गोधयिष्यमाणः, जोगुध्यमानः-जोगुधिष्यमाणः;
[3]सुघुत्-सुघुद्--सुगुधौ-सुगुधः; — — —

---

1. 'रलो व्युपधात्—' (1-2 26) इति सनः कित्वविकल्पनात् रूपद्वयम्।
2. 'दिवादिभ्यः—' (3-1-69) इति श्यन्। श्यनस्सार्वधातुकत्वात् ङिद्भावेनाङ्गस्य गुणो न।
3. भष्भावो झषन्तत्वेन।

A. 'अकूर्दतेवास्य पुरः स्वखूर्दकैः वनान्तगूर्दी रिपुगोदसूयसौ॥' धा. का. 1. 4.

[1]विगुधितम्-तः,[A] गोधितः, जुगुधिषितः-जुगोधिषितः, जोगुधितः-तवान् ;
[2]गुधः, [3]सुगोधी, गोधः, जुगुधिषुः-जुगोधिषुः, जोगुधः ;
गोधितव्यम्, गोधयितव्यम्, जुगुधिषितव्यम्-जुगोधिषितव्यम्, जोगुधितव्यम् ;
गोधनीयम्, गोधनीयम्, जुगुधिषणीयम्-जुगोधिषणीयम्, जोगुधनीयम् ;
गोध्यम्, गोध्यम्, जुगुधिष्यम्-जुगोधिष्यम्, जोगुध्यम् ;
ईषद्गोधः-दुर्गोधः-सुगोधः ; — —
गुध्यमानः, गोध्यमानः, जुगुधिष्यमाणः, जोगुध्यमानः ;
गोधः, गोधः, जुगुधिषः-जुगोधिषः, जोगुधः ;
गोधितुम्, गोधयितुम्, जुगुधिषितुम्-जुगोधिषितुम्, जोगुधितुम् ;
[4]गोधा, गोधना, जुगुधिषा-जुगोधिषा, जोगुधा ;
गोधनम्, गोधनम्, जुगुधिषणम्-जुगोधिषणम्, जोगुधनम् ;
[5]गुधित्वा, गोधयित्वा, जुगुधिषित्वा-जुगोधिषित्वा, जोगुधित्वा ;
प्रगुध्य, प्रगोध्य, सञ्जुगुधिष्य-सञ्जोगुधिष्य, प्रजोगुध्य ;
गोधम् २, गुधित्वा २, } गोधम् २, गोधयित्वा २, } जुगुधिषम् २-जुगोधिषम् २, जुगुधिषित्वा २-जुगोधिषित्वा २, } जोगुधम् २ ; जोगुधित्वा २ ; }
[6]गोधूमः.

---

1. 'शब्विकरणेभ्य एवेष्यते' (भाष्येष्टिः 1-2-21) इति इष्टेः, 'उदुपधात्—' (1-2-21) इति न कित्वविकल्पः।
2. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः।
3. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
4. गोधा=तलत्राणम्। भिदादौ (3-3-104) गुणविशिष्टपाठात्, 'गोधाया ढ्रक्' (4-1-129) इति निर्देशाच्च अङि गुणः।
5. 'मृडमृदगुध—' (1-2-7) इति नित्यं कित्वम्। 'न क्त्वा सेट्' (1-2-18) इत्यस्यापवादः।
6. 'गुधेरूमः' [द. उ. 7-42.] इति ऊमप्रत्ययः। त्वगादिभिः गुध्यते=आवेष्ट्यते इति गोधूमः।

A. 'तं प्लुष्यद्दृष्टिरत्यद्भुतमपि च गतत्रासमुत्क्रुध्यदङ्गे
पोथ्यं प्रोचे स्वरेण स्वजनविगुधितं क्षिप्यता पुष्पमाध्वीम् ॥' धा. का. 2-56.

(406) "गुध रोषे" (IX-क्र्यादिः-1517. अक. सेट्. पर.)

"गुधेर्गुध्नाति रोषेऽर्थे, गुध्येत् तु परिवेष्टने।" (श्लो. 121) इति देवः।

शतरि गुध्नन्-ती, गोधयिष्यन्-न्ती-ती, जुगुधिषिष्यन्-जुगोधिषिष्यन्-न्ती-ती, इत्यादीनि रूपाणि। अन्यानि सर्वाण्यपि दैवादिकगुध्यतिवत् (405) ज्ञेयानि। [A]गुध्नन्, इत्यत्र क्रैयादिकत्वात् 'क्र्यादिभ्यः—' (3-1-81) इति श्नाप्रत्ययः। श्नाप्रत्ययस्य सार्वधातुकत्वात् ङिद्वद्भावः। तेनाङ्गस्य गुणो न। 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः। [1]गोधा।

(407) "गुन्फ ग्रन्थे" (VI-तुदादिः-1318. सक. सेट्. पर.) तृम्फादिः।

गुम्फकः-म्फिका, गुम्फकः-म्फिका, जुगुम्फिषकः-षिका, [2]जोगुफकः-फिका;
गुम्फिता-त्री, गुम्फयिता-त्री, जुगुम्फिषिता-त्री, जोगुफिता-त्री;
[3]गुम्फन्-न्ती-ती, गुम्फयन्-न्ती, जुगुम्फिषन्-न्ती; —
गुम्फिष्यन्-न्ती-ती, गुम्फयिष्यन्-न्ती-ती, जुगुम्फिषिष्यन्-न्ती-ती; —
— गुम्फयमानः, गुम्फयिष्यमाणः, जोगुफ्यमानः, जोगुफिष्यमाणः;
[4]सुगुप्-सुगुब्-सुगुफौ-सुगुफः; — — —
[B]गुफितम्-तः, गुम्फितः, जुगुम्फिषितः, जोगुफितः-तवान्;
गुम्फः, गुम्फः, जुगुम्फिषुः, [5]जोगुम्फः;

---

1. भिदादिषु (3-3-104) पाठादङ्।
2. यङन्तात् ण्वुलि 'यस्य हलः' (6-4-49) इति यलोपे 'अतो लोपः' (6-4-48) इति अकारलोपे च कृते, 'अचः परस्मिन्—' (1-1-57) इत्यल्लोपस्य स्थानिवत्त्वात् ङित्परकत्वेन 'अनिदिताम्' (6-4-24) इत्युपधानकारस्य लोपो भवति। एवं यङन्ते सर्वत्र बोध्यम्।
3. 'तुदादिभ्यः शः' (3-1-77) इति शः। शस्य ङिद्वद्भावात् नकारलोपः। 'शे तृम्फादीनां नुम् वाच्यः' (वा. 7-1-59) इति नुम्। तृम्फादयः=तृम्फप्रकाराः।
4. 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति उपधानकारलोपः। एवं यङि।
5. 'यङोऽचि च' (2-4-7) इति यङो लुकि उपधानकारलोपाभावः।
A. 'भूयो निपात्य मृदितस्वजनः स गुध्नन्
दन्तौ विकुष्य गजमुत्क्षुभितं व्यनभ्नात्॥' धा. का. 3-10.
B. 'युद्धेषुद्दपिता हितेष्वदफिना यस्मिन् ऋफन्ती सुरान्
ऋम्फार्हा पृतना स्थिता सुगुफितैर्माल्यैः कचान् गुम्फती॥' धा. का. 2-74.

गुम्फितव्यम्, गुम्फयितव्यम्, जुगुम्फिषितव्यम्, जोगुफितव्यम्;
गुम्फनीयम्, गुम्फनीयम्, जुगुम्फिषणीयम्, जोगुफनीयम्;
गुम्फ्यम्, गुम्फ्यम्, जुगुम्फिष्यम्, जोगुफ्यम्;
ईषद्गुम्फः-दुर्गुम्फः-सुगुम्फः; — —
गुफ्यमानः, गुम्फ्यमानः, जुगुम्फिष्यमाणः, जोगुफ्यमानः;
गुम्फः, गुम्फः, जुगुम्फिषः, जोगुफः;
गुम्फितुम्, गुम्फयितुम्, जुगुम्फिषितुम्, जोगुफितुम्;
[1]गुम्फा, गुम्फना, जुगुम्फिषा, जोगुफा;
गुम्फनम्, गुम्फनम्, जुगुम्फिषणम्, जोगुफनम्;
[2]गुफित्वा-गुम्फित्वा, गुम्फयित्वा, जुगुम्फिषित्वा, जोगुफित्वा;
सङ्गुफ्य, प्रगुम्फ्य, सञ्जुगुम्फिष्य, सञ्जोगुफ्य;
गुम्फम् २, गुम्फित्वा २-गुफित्वा २, } गुम्फम् २, गुम्फयित्वा २, } जुगुम्फिषम् २, जुगुम्फिषित्वा २, } जोगुफम् २; जोगुफित्वा २. }

(408) "गुप गोपने" (I-भ्वादिः-970. सक. सेट्. आत्म.)

'णौ गोपयति भाषार्थे, निन्दायां से जुगुप्सते।
गोपायेद् रक्षणे त्वाये, व्याकुलत्वे तु गुप्यति॥' (श्लो. 129) इति देवः।
'गोपनकुत्सनयोः' इति मैत्रेयरक्षितः।

[3]जुगुप्सकः-प्सिका, [4]जुगुप्सकः-प्सिका, [5]जुगुप्सिषकः-षिका,

---

1. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारप्रत्ययः।
2. 'नोपधात् थफान्ताद्वा' (1-2-23) इति कित्त्वविकल्पः। कित्त्वपक्षे नलोपः।
3. 'गुप्तिज्किद्भ्यः सन्' (3-1-5) इति सन् 'गुपेर्निन्दायाम्' (वा. 3-1-5) इति वार्तिकात् स्वार्थे भवति। अस्य सनः 'धातोः' (3-1-91) इत्यधिकृत्य विहितत्वाभावात् न आर्धधातुकत्वम्। तेन, इडागमः प्रकृतेर्गुणश्च न भवतः। 'सन्यङोः' (6-1-9.) इति द्वित्वम्। अभ्यासकार्यादिकम्।
4. सन्नन्तात् णिचि 'णेरनिटि' (6-4-51) इति णेर्लोपे 'जुगुप्सकः' इति भवति।
5. स्वार्थसन्नन्तादिच्छार्थे सनि, द्वितीयस्य सन इडागमे 'अतो लोपः' (6-4-48) इत्यलोपे च रूपमिदम्।
"शैषिकान्मतुबर्थीयात् शैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः, सन्नन्तान्न सनिष्यते॥" (भाष्येष्टिः—3-1-7) इति सन्नन्तात् सन् न भवतीति तु न शङ्क्यम्—'सरूपः' इत्यस्य समानार्थक इति भाष्यकृतोक्तत्वेन स्वार्थसन्नन्तादिच्छासन् भवत्येव।

| — | — | [1]जो गुपकः-पिका ; |
|---|---|---|
| जुगुप्सिता-त्री, | जुगुप्सयिता-त्री, | जुगुप्सिषिता-त्री ; |
| — | जुगुप्सयन्-न्ती, | जुगुप्सयिष्यन्-न्ती-ती ;– |
| जुगुप्समानः, | जुगुप्सयमानः, | जुगुप्सिषमाणः ; |
| जुगुप्सिष्यमाणः, | जुगुप्सयिष्यमाणः, | जुगुप्सिषिष्यमाणः ; |
| [2]जुगुप्-जुगुप्सौ-जुगुप्सः ; | — | — |
| जुगुप्सितम्-तः-तवान्, | जुगुप्सितः, | जुगुप्सिषितः-तवान् ; |
| [3]जुगुप्सुः, | जुगुप्सयिषुः, | जुगुप्सिषुः ; |
| जुगुप्सितव्यम्, | जुगुप्सयितव्यम्, | जुगुप्सिषितव्यम् ; |
| जुगुप्सनीयम्, | जुगुप्सनीयम्, | जुगुप्सिषणीयम् ; |
| जुगुप्स्यम्, | जुगुप्स्यम्, | जुगुप्सिष्यम् ; |
| ईषज्जुप्सः-दुर्जुगुप्सः-सुजुगुप्सः ; | | — |
| जुगुप्स्यमानः, | जुगुप्स्यमानः, | जुगुप्सिष्यमाणः ; |
| जुगुप्सः,[A] | जुगुप्सः, | जुगुप्सिषः ; |
| जुगुप्सितुम्, | जुगुप्सयितुम्, | जुगुप्सिषितुम् ; |
| [4]जुगुप्सा, | जुगुप्सयिषा, | जुगुप्सिषा ; |
| जुगुप्सनम्, | जुगुप्सनम्, | जुगुप्सिषणम् ; |
| जुगुप्सित्वा, | जुगुप्सयित्वा, | जुगुप्सिषित्वा ; |
| प्रजुगुप्स्य, | प्रजुगुप्स्य, | प्रजुगुप्सिष्य ; |
| जुगुप्सम् २, } | जुगुप्सम् २, } | जुगुप्सिषम् २ ; } |
| जुगुप्सित्वा २, } | जुगुप्सयित्वा २, } | जुगुप्सिषित्वा २. } |

1. 'अर्थान्तरे त्वनुबन्धकाश्चुरादयो बोध्याः' इति वचनात्, निन्दाभिन्नार्थे, चुरादित्वमस्य धातोर्बोध्यम्। तदानीं ण्यन्तात् ण्वुलि रूपमेवम्। एवं तृजादिष्वपि 'गोपयिता-त्री' इत्यादीनि रूपाण्यूह्यानि।

2. 'अतो लोपः' (6-4-48) इत्यकारलोपे 'संयोगान्तस्य' (8-2-23) इति सकारस्य लोपे च रूपम्।

3. 'सनाशंसभिक्ष उः' (3-2-168) इति ताच्छीलिकः उप्रत्ययः।

4. 'अ प्रत्ययात्' (3-3-102) इति स्त्रियां भावादौ अकारप्रत्ययः। टाप्।

A. 'सा जुगुप्सान् प्रचक्रेऽसून् जगर्हे लक्षणानि च।
देहमांजि ततः केशान् लुलुञ्च लुलुठे मुहुः॥' भ. का. 14-59.

(409) " गुप व्याकुलत्वे " (IV-दिवादिः-1234. सक्. सेट्. पर.)

" णौ गोपयति भाषार्थे, निन्दायां से जुगुप्सते ।

गोपायेद् रक्षणे स्वाये, व्याकुलत्वे तु गुप्यति ॥" (श्लो. 129) इति देवः ।

गोपकः-पिका, गोपकः-पिका, [1]जुगोपिषकः-जुगुपिषकः, [2]जोगुपकः-पिका ;
गोपिता-त्री, गोपयिता-त्री, जुगोपिषिता-जुगुपिषिता-त्री, जोगुपिता-त्री ;
[3]गुप्यन्-न्ती, गोपयन्-न्ती, जुगोपिषन्-जुगुपिषन्-न्ती ; —
गोपिष्यन्-न्ती-ती, गोपयिष्यन्-न्ती-ती, जुगोपिषिष्यन्-जुगुपिषिष्यन्-न्ती-ती ;
—गोपयमानः, गोपयिष्यमाणः, जोगुप्यमानः, जोगुपिष्यमाणः ;
गुब्-गुप्-गुपौ-गुपः ; — — —
गुपितम्-तः-तवान् , गोपितः, जुगोपिषितः-जुगुपिषितः, जोगुपितः-तवान् ;
[4]गुपः, [5]प्रगोपी, गोपः जुगोपिषुः-जुगुपिषुः, जोगुपः ;
गोपितव्यम् , गोपयितव्यम् , जुगोपिषितव्यम्-जुगुपिषितव्यम् , जोगुपितव्यम् ;
गोपनीयम् , गोपनीयम् , जुगोपिषणीयम्-जुगुपिषणीयम् , जोगुपनीयम् ;
गोप्यम् , गोप्यम् , जुगोपिष्यम्-जुगुपिष्यम् , जोगुप्यम् ;
ईषद्गोपः-दुर्गोपः-सुगोपः ; — —
गुप्यमानः, गोप्यमानः, जुगोपिष्यमाणः-जुगुपिष्यमाणः, जोगुप्यमानः ;
गोपः, गोपः, जुगोपिषः-जुगुपिषः, जोगुपः ;
गोपितुम् , गोपयितुम् , जुगोपिषितुम्-जुगुपिषितुम् , जोगुपितुम् ;
गुप्तिः, गोपना, जुगोपिषा-जुगुपिषा, जोगुपा ;

---

1. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इत्यनेन सेटः सनः कित्त्वविकल्पः । तेन गुणतदभावयोः रूपद्वयम् । एवं सर्वत्र सन्नन्ते बोद्धयम् ।
2. यङन्ते, 'यस्य हलः' (6-4-49) इति यकारलोपे, 'अतो लोपः' (6-4-48) इत्यलोपे, अल्लोपस्य स्थानिवद्भावात् लघूपधगुणो न । एवं सर्वत्र यङन्ते बोध्यम् ।
3. 'दिवादिभ्यः—' (3-1-69) इति श्यन् । श्यनो ङिद्वद्भावान्नाङ्गस्य गुणः । 'शप्-श्यनोर्नित्यम्' (7-1-81) इति नित्यं नुम् ।
4. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः ।
5. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।

गोपनम्, गोपनम्, जुगोपिषणम्-जुगुपिषणम्, जोगुपनम्,
[1]गोपित्वा-गुपित्वा, गोपयित्वा, जुगोपिषित्वा-जुगुपिषित्वा, जोगुपित्वा;
सङ्गुप्य, सङ्गोप्य, सञ्जुगोपिष्य-सञ्जुगुपिष्य, सञ्जोगुप्य;

गोपम् २, गोपित्वा २, गुपित्वा २, } गोपम् २, गोपयित्वा २, } जुगोपिषम् २-जुगुपिषम् २, जुगोपिषित्वा २-जुगुपिषित्वा २, } जोगुपम् २; जोगुपित्वा २. }

(410) "गुप भाषार्थः" (X-चुरादिः-1772. अक. सेट्. उभ. आस्वदीयः।)

"णौ गोपयति भाषा(सा)र्थे, निन्दायां से जुगुप्सते।
गोपायेद् रक्षणे स्वाये, व्याकुलत्वे तु गुप्यति॥"

(श्लो. 129) इति देवः। 'भासार्थः' इति क्षीरस्वामी।

गोपकः-पिका, गोपयिता-त्री, इत्यादीनि रूपाणि पूर्वलिखितदैवादिक-गुपधातोः (409) ण्यन्तस्येव ज्ञेयानि। ण्यन्तात् सनि तु—

जुगोपयिषकः-षिका, जुगोपयिष्यम्,
जुगोपयिषिता-त्री, ईषज्जुगोपयिषः-दुर्जुगोपयिषः-सुजुगोपयिषः;
जुगोपयिषन्-न्ती, जुगोपयिष्यमाणः;
जुगोपयिषिष्यन्-न्ती-ती, जुगोपयिषः;
जुगोपयिषमाणः, जुगोपयिषितुम्;
जुगोपयिषिष्यमाणः, जुगोपयिषा;
जुगोपयिट्-जुगोपयिषौ-जुगोपयिषः, जुगोपयिषणम्;
जुगोपयिषितम्-तः-तवान्, जुगोपयिषित्वा;
जुगोपयिषुः, प्रजुगोपयिष्य;
जुगोपयिषितव्यम्, जुगोपयिषम् २; }
जुगोपयिषणीयम्, जुगोपयिषित्वा २. }

इति रूपाणि, इति विशेषः॥

---

1. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति क्त्वायाः वैकल्पिकं कित्त्वम्। तेन रूपद्वयम्।

## (411) "गुपू रक्षणे" (I-भ्वादिः-395. सक. वेट्. पर.)

'णौ गोपयति भाषा (सा) र्थे निन्दायां से जुगुप्सते ।
गोपायेद् रक्षणे त्वाये, व्याकुलत्वे तु गुप्यति ॥' (श्लो. 129) इति देवः ।

[1]गोपायकः[A]-यिका-गोपकः-गोपिका, [2]गोपायकः-पिका-गोपकः-पिका,
[3]जुगोपायिषकः-जुगोपिषकः-जुगुपिषकः-षिका-जुगुप्सकः-प्सिका,
[4]जोगुपकः-पिका ;
गोपायिता-[5]गोपिता-गोप्ता-त्री, गोपाययिता-गोपयिता-त्री, जुगोपायिषिता-जुगोपिषिता-जुगुपिषिता-जुगुप्सिता-त्री, जोगुपिता-त्री ;
[6]गोपायन्[B]-न्ती, गोपायन्-गोपयन्-न्ती, जुगोपायिषन्-जुगोपिषन्-जुगुपिषन्-जुगुप्सन्-न्ती ; —
गोपायिष्यन्-गोपिष्यन्-न्ती-ती, गोपाययिष्यन्-गोपयिष्यन्-न्ती-ती,
जुगोपायिषिष्यन्-जुगोपिषिष्यन्-जुगुपिषिष्यन्-जुगुप्सिष्यन्-न्ती-ती ; —
— गोपाययमानः-गोपयमानः, — जोगुप्यमानः ;
— गोपाययिष्यमाणः, गोपयिष्यमाणः, जोगुपिष्यमाणः;
[7]गोपाः-गोपौ-गोपाः, — गुप्-गुब्-गुपौ-गुपः ; —

---

1. 'गुपूधूपविच्छिपणिपनिभ्य आयः' (3-1-28) इति विहित आयप्रत्ययः, 'आयादय आर्धधातुके वा' (3-1-31) इत्यनेन, आर्धधातुके विकल्पितः । अतो रूपद्वयम् । एवमार्धधातुके सर्वत्र ज्ञेयम् ।
2. ण्यन्ताण्वुलि, 'णेरनिटि' (6-4-51) इति णिलोपे रूपम् । णिजन्ते सर्वत्र आयप्रत्ययविकल्पः ।
3. आयप्रत्ययान्तात् सनि इदं रूपम् । आयप्रत्ययाभावे ऊदित्त्वादिड्विकल्पे, 'रलो व्युपधात्—' (1-2-26) इति सनः कित्त्वविकल्पे च रूपत्रयम् । एवं सन्नन्ते सर्वत्र ।
4. आर्धधातुकविवक्षायामायप्रत्ययस्य वैकल्पिकत्वात्, आयप्रत्ययान्तस्यानेकाच्त्वान्न यङ् । आयाभावे तु—'जोगुपकः' इत्यादिरूपाणि यङन्तालिखितानि ।
5. ऊदित्त्वात् 'स्वरतिसूति—' (7-2-44) इत्यादिना इड्विकल्पः । आयप्रत्ययाभावपक्षे एवं तव्यदादिषु ज्ञेयम् ।
6. शतुः सार्वधातुकत्वान्नित्यमायादेशः ।
7. क्विपि, अल्लोपयलोपयोः सोः रुत्वविसर्गौ । आयाभावे 'गुप्' इति रूपम् ।

A. 'आसेदुषां गोत्रभिदोऽनुवृत्त्या गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैर्द्यौराचिता तारकितेव रेजे ॥' किरातार्जुनीये 18-18.

B. 'वल्भप्रगल्भाः पथिकाश्च तत्क्षणं मुश्रम्भणस्तोभयुतात् अगुर्गृहान् ।
गोपायतां धर्ममधूपितात्मनां जल्पान् विमुच्याभवदुद्यमो जपे ॥' धा. का. 1-51.

गोपायितम्-तः [1]गुप्तम्-गुप्तः-गुप्तवान्, [2]मनसागुप्ता, गोपायितः-गोपितः, जुगोपायिषितः-जुगोपिषितः-जुगुपिषितः-जुगुप्सितः, जोगुपितः-तवान्; गोपायः-गुपः, [3]शालिगोपः-[A]शालिगोपी, गोपायः-गोपः, जुगोपायिषुः-जुगोपिषुः-जुगुपिषुः-जुगुप्सुः, जोगुपः;

गोपायितव्यम्-गोपितव्यम्-गोप्तव्यम्, गोपाययितव्यम्-गोपयितव्यम्, जुगोपायिषितव्यम्-जुगोपिषितव्यम्-जुगुपिषितव्यम्-जुगुप्सितव्यम्, जोगुपितव्यम्;

गोपायनीयम्-गोपनीयम्, गोपायनीयम्-गोपनीयम्, जुगोपायिषणीयम्-जुगोपिषणीयम्-जुगुपिषणीयम्-जुगुप्सनीयम्, जोगुपनीयम्;

गोपाय्यम्-गोप्यम्-[4]कुप्यम्[B], गोपाय्यम्-गोप्यम्, जुगोपायिष्यम्-जुगोपिष्यम्-जुगुप्स्यम्, जोगुप्यम्;

ईषद्गोपायः-दुर्गोपायः-सुगोपायः, ईषद्गोपः-दुर्गोपः-सुगोपः; ——

गोपाय्यमानः-गुप्यमानः, गोपाय्यमानः-गोप्यमानः, जुगोपायिष्यमाणः-जुगोपिष्यमाणः-जुगुपिष्यमाणः-जुगुप्स्यमानः, जोगुप्यमानः;

गोपायः-गोपः, गोपायः-गोपः, जुगोपायिषः-जुगोपिषः-जुगुपिषः-जुगुप्सः, जोगुपः;

गोपायितुम्-गोपितुम्-गोप्तुम्, गोपाययितुम्-गोपयितुम्, जुगोपायिषितुम्-जुगोपिषितुम्-जुगुपिषितुम्-जुगुप्सितुम्-जोगुपितुम्;

---

1. आयाभावपक्षे—ऊदित्त्वात् विकल्पितेट्कत्वेन निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इति निषेधादिडागमो न।

2. 'मनसः संज्ञायाम्' (वा. 6-3-3) इति तृतीयाया अलुक्।

3. 'कर्मण्यण्' (3-2-1) इत्यणि शालिगोप इति रूपम्। स्त्रियां टित्त्वेन ङीपि शालिगोपी।

4. 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः' (3-1-114) इति सूत्रेण सुवर्णरजतादिभिन्ने धने बोध्ये क्यपि, गुपेरादेः ककारादेशश्च निपातितः।

A. 'इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः॥' रघुवंशे 4-20.

B. 'अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः।
रत्नानपानकुप्यानामाढतुर्नष्टसंस्मृती॥' भ. का. 6-58.

गोपाया-[1] गुप्तिः, गोपायना-गोपना, जुगोपायिषा-जुगोपिषा-जुगुपिषा-जुगुप्सा-जोगुपा ;

गोपायनम्- [2]प्रगोपणम्[A]-प्रगोपनम्, गोपायनम्-गोपनम्, जुगोपायिषणम्-जुगोपिषणम्-जुगुपिषणम्-जुगुप्सनम्, जोगुपनम् ;

प्रगोपायित्वा- [3]गोपित्वा-गुप्त्वा, गोपाययित्वा-गोपयित्वा, जुगोपायिषित्वा-जुगोपिषित्वा-जुगुपिषित्वा-जुगुप्सित्वा, जोगुपित्वा ;

प्रगोपाय्य-प्रगुप्य, प्रगोपाय्य-प्रगोप्य, प्रजुगोपायिष्य-प्रजुगोपिष्य-प्रजुगुपिष्य-प्रजुगुप्स्य, प्रजोगुप्य ;

गोपायम् २-गोपम् २,<br>गोपायित्वा २-गोपित्वा-गुप्त्वा २, } गोपायम् २-गोपम् २,<br>गोपाययित्वा २-गोपयित्वा २, }

जुगोपायिषम् २ - जुगोपिषम् २, - जुगुपिषम् २ - जुगुप्सम् - २,<br>जुगोपायिषित्वा २-जुगोपिषित्वा २, - जुगुपिषित्वा २ - जुगुप्सित्वा- २, }

जोगुपम् २ ;<br>जोगुपित्वा २. }

## (412) "गुफ ग्रन्थे" (VI-तुदादिः-1317. अक. सेट्. पर.)

गोफकः-फिका, गोफकः-फिका, [4]जुगोफिषकः-जुगुफिषकः-षिका, जोगुफकः-फिका ;

गोफिता-त्री, गोफयिता-त्री, जुगोफिषिता-जुगुफिषिता-त्री, जोगुफिता-त्री ;

[5]गुफन्-न्ती-ती, गोफयन्-न्ती, जुगोफिषन्-जुगुफिषन्-न्ती ; —

---

1. स्त्रियां भावादौ 'अ प्रत्ययात्' (3-3-102) इति आयप्रत्ययान्तादकार प्रत्ययः। आयाभावपक्षे-'तितुत्र—' (7-2-9) इतीण्णिषेधे रूपम्।
2. 'हलश्चेजुपधात्' (8-4-31) इति वा णत्वम्।
3. आयप्रत्ययाभावपक्षे ऊदित्त्वेनेड्विकल्पात्, इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणः।
4. 'रलो व्युपधात्—' (1-2-26) इति सेटः सनः कित्त्वविकल्पः। तेन रूपद्वयम्। एवं सन्नन्ते सर्वत्र, क्त्वायामपि बोध्यम्।
5. 'तुदादिभ्यः—' (3-1-77) इति शः। शस्य ङिद्वद्भावाद् अङ्गस्य गुणो न। नुम्विकल्पः।

A. 'कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः। शक्तो जगति शक्रोऽपि कर्तुमायुःप्रगोपणम् ॥' भ. का. 9-105.

गोफिष्यन्-न्ती-ती, गोफयिष्यन्-न्ती-ती, जुगोफिषिष्यन्-जुगुफिषिष्यन्-न्ती-ती ;

— गोफ्यमानः, गोफयिष्यमाणः, — जोगुफ्यमानः-जोगुफिष्यमाणः ;

सुगुप्-सुगुब्-सुगुफौ-सुगुफः ; — — —

[A]सुगुफितम्-तः-तवान्, गोफितः, जुगोफिषितः-जुगुफिषितः, जोगुफितः-तवान् ;

गुफः, सङ्गोफी, गोफः, जुगोफिषुः-जुगुफिषुः, जोगुफः ;

गोफितव्यम्, गोफयितव्यम्, जुगोफिषितव्यम्-जुगुफिषितव्यम्, जोगुफितव्यम् ;

गोफनीयम्, गोफनीयम्, जुगोफिषणीयम्-जुगुफिषणीयम्, जोगुफनीयम् ;

गोफ्यम्, गोफ्यम्, जुगोफिष्यम्-जुगुफिष्यम्, जोगुफ्यम् ;

ईषद्गोफः-दुर्गोफः-सुगोफः ; — —

गुफ्यमानः, गोफ्यमानः, जुगोफिष्यमाणः-जुगुफिष्यमाणः, जोगुफ्यमानः ;

गोफः, गोफः, जुगोफिषः-जुगुफिषः, जोगुफः ;

गोफितुम्, गोफयितुम्, जुगोफिषितुम्-जुगुफिषितुम्, जोगुफितुम् ;

[1]गुप्तिः, गोफना, जुगोफिषा-जुगुफिषा, जोगुफा ;

गोफनम्, गोफनम्, जुगोफिषणम्-जुगुफिषणम्, जोगुफनम् ;

गोफित्वा-गुफित्वा, गोफयित्वा, जुगोफिषित्वा-जुगुफिषित्वा, जोगुफित्वा ;

सङ्गुफ्य, सङ्गोफ्य, सञ्जुगोफिष्य-सञ्जुगुफिष्य, सञ्जोगुफ्य ;

गोफम् २, गोफित्वा २-गुफित्वा २, } गोफम् २, गोफयित्वा २, } जुगोफिषम् २-जुगुफिषम् २, जुगोफिषित्वा २-जुगुफिषित्वा २, } जोगुफम् २ ; जोगुफित्वा २. }

(413) "गुरी उद्यमने" (VI-तुदादिः-1396. अक. सेट्. आत्म. कुटादिः।)

" गुरते [ गू ] गुरयेतेति शे णौ उद्यमने तङि ।

श्यनि गूर्यत इत्येवं गतिहिंसनयोस्तङि ॥" (श्लो. 152) इति देवः ।

उद्यमनम्=उद्धरणमिति धा. का. व्याख्या (2-82) ।

---

1. 'तितुत्र—' (7-2-9) इति इण्णिषेधः । 'खरि च' (8-4-55) इति चर्त्वम् ।

A " युद्धेषूद्दर्पिता, हितेष्वदर्पिता यस्मिन् श्रृम्फन्ती सुरान्

श्रुम्फार्हा पूतना स्थिता सुगुम्फितैर्माल्यैः कचान् गुम्फती ॥ " धा. का. 2. 74.

| | | | |
|---|---|---|---|
| [1]गोरकः-रिका, | गोरकः-रिका, | जुगुरिषकः-षिका, | जोगुरकः-रिका ; |
| गुरिता-त्री, | गोरयिता-त्री, | जुगुरिषिता-त्री, | जोगुरिता-त्री ; |
| — | गोरयन्-न्ती, | गोरयिष्यन्-न्ती-ती ; | — |
| गुरमाणः, | गोरयमाणः, | जुगुरिषमाणः, | [2]जोगूर्यमाणः ; |
| गुरिष्यमाणः, | गोरयिष्यमाणः, | जुगुरिषिष्यमाणः, | जोगुरिष्यमाणः ; |
| [3]सङ्गूः-सङ्गूरौ-सङ्गुरः ; | — | — | — — |
| [4]गूर्णम्-गूर्णः-गूर्णवान्, | गोरितः, | जुगुरिषितः, | जोगुरितः-तवान् ; |
| गुरः, [5]गुरणः, [6]अपगोरी, | गोरः, | जुगुरिषुः, | जोगुरः ; |
| गुरितव्यम्, | गोरयितव्यम्, | जुगुरिषितव्यम्, | जोगुरितव्यम् ; |
| गुरणीयम्, | गोरणीयम्, | जुगुरिषणीयम्, | जोगुरणीयम् ; |
| [7]गोर्यम्, | गोर्यम्, | जुगुरिष्यम्, | जोगुर्यम् ; |
| ईषद्गुरः-दुर्गुरः-सुगुरः ; | — | — | — |
| गूर्यमाणः, | गोर्यमाणः, | जुगुरिष्यमाणः, | जोगूर्यमाणः ; |
| गोरः, | गोरः, | जुगुरिषः, | जोगुरः ; |
| गुरितुम्, | गोरयितुम्, | जुगुरिषितुम्, | जोगुरितुम् ; |
| गूर्त्तिः, | गोरणा, | जुगुरिषा, | जोगुरा ; |
| गुरणम्, | गोरणम्, | जुगुरिषणम्, | जोगुरणम् ; |
| गुरित्वा, | गोरयित्वा, | जुगुरिषित्वा, | जोगुरित्वा ; |
| सङ्गूर्य, | सङ्गोर्य, | सञ्जुगुरिष्य, | सञ्जोगूर्य ; |

---

1. अस्य धातोः कुटादिपाठात् 'गाङ्कुटादिभ्यः' (1-2-1) इति ञ्णिद्भिन्नस्य प्रत्ययस्य ङिद्वद्भावः। तेन सर्वत्र गुणाभावः। सनोऽपि ङिद्वद्भावातिदेशान्न गुणः।
2. 'हलि च' (8-2-77) इति दीर्घः।
3. 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति उपधादीर्घे विसर्गः।
4. धातोरीदित्त्वात् 'श्वीदितो निष्ठायाम्' (7-2-14) इति इण्णिषेधः। 'हलि च' (8-2-77) इति दीर्घे, 'रदाभ्यां—' (8-2-42) इति निष्ठानत्वे,णत्वम्।
5. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिकः युच्।
6. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः।
7. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत्। णित्त्वाद्गुणः।

[1]अस्यपगारं-अस्यपगोरम् [A]शस्त्रापगोरं-शस्त्रापगारं [वा युद्धयन्ते]।

गोरम् २, गुरित्वा २, } गोरम् २, गोरयित्वा २, } जुगुरिषम् २, जुगुरिषित्वा २, } जोगुरम् २; जोगुरित्वा २. }

(414) "गुर्द् क्रीडायामेव" (I-भ्वादिः-23. अक. सेट्. आत्म.)

गूर्दकः-र्दिका, गूर्दकः-र्दिका, जुगूर्दिषकः-षिका, जोगूर्दकः-र्दिका; [B]वनान्तगूर्दी[2], इत्यादीनि रूपाणि भौवादिककूर्दतिवत् (230) ज्ञेयानि।

(415) "गुर्द पूर्वनिकेतने" (X-चुरादिः-1666. अक. सेट्. उभ.)

'पूर्वनिकेनतम्=पूर्वव्यवहार इत्येके।' इति धा. का. व्याख्या। पूर्वनिकेतनम्=आद्यनिवासः, इति क्षीरस्वामी। 'पूर्व' इति धात्वन्तरमिति केचित्। गूर्दकः-गुर्दकः-र्दिका, गुर्द (गूर्द) यिता-त्री, गुर्दितम्-[C]तः-तवान्, इत्यादीनि रूपाणि भौवादिककूर्दधातौ (230) ण्यन्तरूपवत् ज्ञेयानि।

ण्यन्तात् सनि तु—

[3]जुगूर्दयिषकः-षिका, जुगूर्दयिषितः-तवान्;
जुगूर्दयिषिता-त्री, जुगूर्दयिषुः;
जुगूर्दयिषन्-न्ती, जुगूर्दयिषितव्यम्;
जुगूर्दयिषिष्यन्-न्ती-ती, जुगूर्दयिषणीयम्;
जुगूर्दयिषमाणः, जुगूर्दयिष्यम्;
जुगूर्दयिट्-जुगूर्दयिषौ-जुगूर्दयिषः, ईषज्जुगूर्दयिषः-

---

1. 'द्वितीयायां च' (3-4-53) इति णमुल्। 'अपगुरो णमुलि' (6-1-53) इति उपधाया आत्वं विकल्पेन भवति। त्वरया असिमुद्यम्य युध्यन्ते—इत्यर्थः।
2. 'सुप्यजातौ—' (3-2-78) इति ताच्छीलिको णिनिः।
3. 'उपधायां च' (8-2-78) इति सर्वत्र दीर्घः। 'ह्रस्वः' (7-4-59) इति अभ्यासह्रस्वः। 'र्वोरुपधायाः—'(8-2-78) इति दीर्घस्य वैकल्पिकत्वे 'जुगुर्दयिषकः-षिका' इति रूपमपि साधु। एवं सर्वत्र। दीर्घस्य वैकल्पिकत्वे प्रमाणं तु 230-धातुटिप्पणे निरूपितम्।

A. 'शस्त्रापगोरं (गारं) चलतां पदोद्धतं रजो भटानामदधत् प्रभां रवेः। क्ष्वेला च वादित्रनिनादमांसला घनाघनानां निनदं निरास्थत॥' वा. वि. 1-36.
B. 'मुदा स चेतो ददृदे चिरं हरौ स्वादात् सुरैः स्वर्दितमङ्गलोर्दने। अकूर्दतेवास्य पुरः स्वखूर्दकैर्वनान्तगूर्दी रिपुगोदसूयसौ॥' धा. का. 1-4.
C. 'खेदस्त्वियान् पटहगर्दनगर्जिताशे रङ्गे सगर्धनजुगुर्दितवीरलोके।' धा. का. 3-31.

दुर्जुगूर्दयिषः-सुजुगूर्दयिषः, जुगूर्दयिषणम् ;
जुगूर्दयिष्यमाणः, जुगूर्दयिषित्वा ;
जुगूर्दयिषः, प्रजुगूर्दयिष्य ;
जुगूर्दयिषितुम्, जुगूर्दयिषम् २ ;
जुगूर्दयिषा, जुगूर्दयिषित्वा २.
इति रूपाणि, इति विशेषः।

## (416) "गुर्वी उद्यमने" (I-भ्वादिः-574. अक. सेट्. पर.)

[1]गूर्वकः-र्विका, गूर्वकः-र्विकाः, जुगूर्विषकः-षिका, [2]जोगूर्वकः-र्विका ;
गूर्विता-त्री, गूर्वयिता-त्री, जुगूर्विषिता-त्री, जोगूर्विता-त्री ;
गूर्वन्-न्ती, गूर्वयन्-न्ती, जुगूर्विषन्-न्ती ; —
गूर्विष्यन्-न्ती-ती, गूर्वयिष्यन्-न्ती-ती, जुगूर्विषिष्यन्-न्ती-ती ; —
— गूर्वयमाणः, गूर्वयिष्यमाणः, जोगूर्व्यमाणः-जोगूर्विष्यमाणः ;
[3]गूः-गुरौ-गुरः ; — — —
[4]गूर्णः-गूर्णम्-गूर्णवान्, उद्गूर्णः, गूर्वितः, जुगूर्विषितः, जोगूर्वितः-तवान् ;
गूर्वः, प्रगूर्वी, गूर्वः, जुगूर्विषुः, जोगूर्वः ;
गूर्वितव्यम्, गूर्वयितव्यम्, जुगूर्विषितव्यम्, जोगूर्वितव्यम् ;
गूर्वणीयम्, गूर्वणीयम्, जुगूर्विषणीयम्, जोगूर्वणीयम् ;
गूर्व्यम्, गूर्व्यम्, जुगूर्विष्यम्, जोगूर्व्यम् ;
ईषद्गूर्वः-दुर्गूर्वः-सुगूर्वः ; — —
गूर्व्यमाणः, गूर्व्यमाणः, जुगूर्विष्यमाणः, जोगूर्व्यमाणः ;
गूर्वः, गूर्वः, जुगूर्विषः, जोगूर्वः ;
गूर्वितुम्, गूर्वयितुम्, जुगूर्विषितुम्, जोगूर्वितुम् ;

---

1. 'उपधायां च' (8-2-78) इति दीर्घः। एवं सर्वत्र दीर्घो ज्ञेयः।
2. 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासे गुणः। एवं यङन्ते सर्वत्र ज्ञेयम्।
3. 'राल्लोपः' (6-4-21) इति वकारस्य क्विति ङिति च प्रत्यये परतः लोपः। 'र्वोरुपधायाः—' (8-2-76) इति दीर्घः।
4. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेधे, 'राल्लोपः' (6-4-21) इति वकारलोपे, दीर्घे, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (8-2-42) इति निष्ठानत्वे णत्वे च रूपम्।

| | | | |
|---|---|---|---|
| [1]गूर्वा, | गूर्वणा, | जुगूर्विषा, | जोगूर्वा ; |
| [A]गूर्वणम्, | गूर्वणम्, | जुगूर्विषणम्, | जोगूर्वणम् ; |
| गूर्वित्वा, | गूर्वयित्वा, | जुगूर्विषित्वा, | जोगूर्वित्वा ; |
| प्रगूर्व्य, | प्रगूर्व्य, | प्रजुगूर्विष्य, | प्रजोगूर्व्य ; |
| गूर्वम् २, गूर्वित्वा २, | गूर्वम् २, गूर्वयित्वा २, | जुगूर्विषम् २, जुगूर्विषित्वा २, | जोगूर्वम् २ ; जोगूर्वित्वा २. |

## (417) "गुहू संवरणे" (I-भ्वादिः-896. सक. सेट्. उभ.)

| | | | |
|---|---|---|---|
| [2]गूहकः-हिका, | गूहकः-हिका, | [3]जुघुक्षकः-क्षिका, | [4]जोगुहकः-हिका ; |
| [5]गूहिता-त्री, गोढा-ढ्री, | गूहयिता-त्री, | जुघुक्षिता-त्री, | जोगुहिता-त्री ; |
| गूहन्-न्ती, | गूहयन्-न्ती, | जुघुक्षन्-न्ती, | — |
| गूहिष्यन्-[6]घोक्ष्यन्-न्ती-ती, | गूहयिष्यन्-न्ती-ती, | जुघुक्षिष्यन्-न्ती-ती ; | — |
| [B]गूहमानः, | गूहयमानः, | जुघुक्षमाणः, | जोगुह्यमानः ; |
| गूहिष्यमाणः-घोक्ष्यमाणः, | गूहयिष्यमाणः, | जुघुक्षिष्यमाणः, | जोगुहिष्यमाणः ; |
| [7]सङ्घुट्-संघुड्-संगुहौ-संगुहः ; | — | — | — |

---

1. 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः ।
2. 'ऊदुपधाया गोहः' (6-4-89) इति गुणहेतावजादौ प्रत्यये परतः सर्वत्र उपधाया ऊकारो भवति । एवं ण्यन्तेऽपि ।
3. 'सनि ग्रहगुहोश्च' (7-2-12) इति इण्णिषेधः । 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वम्, ढत्वम्, भष्भावश्च । 'षढोः कः सि' (8-2-41) इति कत्वम् । एवं सन्नन्ते सर्वत्र बोध्यम् ।
4. यङन्ते द्वित्वे, अभ्यासस्य गुणे, यङवयवस्याकारस्यातोलोपे, 'यस्य हलः' (6-4-49) इति लोपे च रूपम् । अल्लोपस्य स्थानिवद्भावाद्यङन्ते लघूपधगुणः सर्वत्र न ।
5. 'स्वरतिसूतिसूयतिधूञूदितो वा' (7-2-44) इति इड्विकल्पः । इडभावपक्षे, लघूपधगुणे, ढत्व-धत्व-ष्टुत्व-ढलोपदीर्घाः ।
6. इडभावपक्षे-गुणे-ढत्व-भष्भाव-कत्वेषु रूपम् ।
7. ढत्वे पदान्तनिमित्तकः भष्भावः । जश्त्वे चर्त्वविकल्पः ।

A. 'प्रक्ष्यूतगोपीशुचमूर्णपूतनं तूर्णानसं थूर्णवकादिदानवम् ।
दुदूर्विषून् धूर्वितुमेव गूर्वणं मूर्वन्तमापूर्वितपर्वताध्वरम् ॥' धा. का. 1-73.

B. 'गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।
तेभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥' भ. का. 8. 45.

[1]गूढम्-गूढः-गूढवान्, गूहितः, जुघुक्षितः, जोगुहितः-तवान्;

| | | | |
|---|---|---|---|
| गुहः, [2]काकगुहाः[तिलाः], निगूही[3], | गूहः, | [A]संजुघुक्षः, | जोगुहः; |
| गूहितव्यम्-गोढव्यम्, | गूहयितव्यम्, | जुघुक्षितव्यम्, | जोगुहितव्यम्; |
| गूहनीयम्, | गूहनीयम्, | जुघुक्षणीयम्, | जोगुहनीयम्; |
| [4]गुह्यम्-गूह्यम्, | गूह्यम्, | जुघुक्ष्यम्, | जोगुह्यम्; |
| ईषद्गूहः-दुर्गूहः-सुगूहः; | — | — | — |
| गुह्यमानः, | निगूह्यमानः, | जुघुक्ष्यमाणः, | जोगुह्यमानः; |
| गूहः, | गूहः, | जुघुक्षः, | जोगुहः; |
| गूहितुम्-गोढुम्, | गूहयितुम्, | जुघुक्षितुम्, | जोगुहितुम्; |
| [5]गुहा-गूढिः, | गूहना, | जुघुक्षा, | जोगुहा; |
| गूहनम्, | गूहनम्, | जुघुक्षणम्, | जोगुहनम्; |
| [6]गूहित्वा-गूढ्वा, | गूहयित्वा, | जुघुक्षित्वा, | जोगुहित्वा; |
| विगुह्य, | विगूह्य, | प्रजुघुक्ष्य, | प्रजोगुह्य; |
| गूहम् २, गूहित्वा २, गूढ्वा २, | गूहम् २, गूहयित्वा २, | जुघुक्षम् २, जुघुक्षित्वा २, | जोगुहम् २; जोगुहित्वा २. |

---

1. ऊदित्त्वेनेड्विकल्पात् निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः। ढत्व-धत्व-ष्टुत्व-ढलोपेषु कृतेषु 'ढ्रलोपे पूर्वस्य—' (6-3-111) इति दीर्घः।
2. काकेभ्यो गुह्यन्ते इति कर्मणि 'मूलविभुजादिभ्यः—' (वा. 3-2-5) इति क-प्रत्ययः।
3. 'साधुकारिण्युपसंख्यानम्' (वा. 3-2-78) इति णिनिः।
4. 'शंसिदुहिगुहिभ्यो वा' (वा. 3-1-109) इति क्यपि रूपम्। क्यपो वैकल्पिकत्वात् पक्षे ण्यति **गूह्यम्** इति च रूपम्। ण्यति-**गोह्यम्** इति काशिका-माधवधातुवृत्तिप्रभृतिषु रूपं प्रदर्शितम्। 'ऊदुपधाया गोहः' (6-4-89) इत्यजादौ प्रत्यय एव ऊकारविधानात् तदेव साध्विति प्रतीयते।
5. 'गुहा गिर्योषध्योः' (ग. सू. 3-3-104) इति भिदादिपाठात् अङ्। अन्यत्र **गूढिः** इति।
6. 'इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् **गूहित्वा** इति एकमेव रूपम्।

A. **संजुघुक्षव** आयूंषि ततः प्रतिरुरूषवः।
रावणान्तिकमाजग्मुः हतशेषा निशाचराः॥' भ. का. 9. 14.

(418) "गूर उद्यमने" (X-चुरादिः-1695. अक. सेट्. आत्म.)

'गुरते गू (गु) रयेतेति शे णावुद्यमने तङि।
श्यनि गूर्यत इत्येवं गतिहिंसनयोस्तङि ॥' (श्लो. 152) इति देवः।
केचित् 'गुरी' इति पठन्ति। अन्ये तु 'गूरी' इति पठन्ति। आकुस्मीयः।

| | |
|---|---|
| [1]गूरकः-रिका, | जुगूरयिषकः-षिका ; |
| गूरयिता-त्री, | जुगूरयिषिता-त्री ; |
| [2]गूरयमाणः, | जुगूरयिषमाणः ; |
| गूरयिष्यमाणः, | जुगूरयिषिष्यमाणः ; |
| अपगूः-अपगुरौ-अपगुरः ; | — |
| गूरितम्-तः-तवान्, | जुगूरयिषितः-तवान् ; |
| गूरः, | जुगूरयिषुः ; |
| गूरयितव्यम्, | जुगूरयिषितव्यम् ; |
| गूरणीयम्, | जुगूरयिषणीयम् ; |
| गूर्यम्, | जुगूरयिष्यम् ; |
| ईषद्गूरः-दुगूरः-सुगूरः ; | — |
| गूर्यमाणः, | जुगूरयिष्यमाणः ; |
| गूरः, | जुगूरयिषः ; |
| गूरयितुम्, | जुगूरयिषितुम् ; |
| गूरणा, | जुगूरयिषा ; |
| गूरणम्, | जुगूरयिषणम् ; |
| गूरयित्वा, | जुगूरयिषित्वा ; |
| निगूर्य, | निजुगूरयिष्य ; |
| गूरम् २, } गूरयित्वा २, } | जुगूरयिषम् २ ; } जुगूरयिषित्वा २. } |

---

1. अस्य धातोश्चुरादिपाठात् ण्यन्तादेव रूपाणि। अनेकाच्त्वात् यङ् न।
2. 'आ कुस्मादात्मनेपदिनः' (ग. सू. चुरादौ) इति वचनात् ण्यन्ताच्छानजेव।

(419) "गूरी हिंसागत्योः" (IV-दिवादिः-1154. सक. सेट्. आत्म.)

गुरते गूर (गुर) येतेति शे णावुद्यमने तङि ।
श्यनि गूर्यत इत्येवं गतिहिंसनयोस्तङि ॥' (श्लो. 152) इति देवः ।
'—हिंसावयोहान्योः' इति क्वचित् पाठः ।

गूरकः-रिका, गूरकः-रिका, जुगूरिषकः-षिका, जोगूरकः-रिका ;
गूरिता-त्री, गूरयिता-त्री, जुगूरिषिता-त्री, जोगूरिता-त्री ;
— गूरयन्-न्ती, गूरयिष्यन्-न्ती-ती ; —
[1]गूर्यमाणः, गूरयमाणः, जुगूरिषमाणः, जोगूर्यमाणः ;
गूरिष्यमाणः, गूरयिष्यमाणः, जुगूरिषिष्यमाणः, जोगूरिष्यमाणः ;
सुगूः-सुगूरौ-सुगूरः ; — — —
[2]गूर्णम्-[A]गूर्णः-गूर्णवान्, गूरितः, जुगूरिषितः, जोगूरितः-तवान् ;
गूरः, सुगूरी, [3]गूरणः, गूरः, जुगूरिषुः, जोगूरः ;
गूरितव्यम्, गूरयितव्यम्, जुगूरिषितव्यम्, जोगूरितव्यम् ;
गूरणीयम्, गूरणीयम्, जुगूरिषणीयम्, जोगूरणीयम् ;
ईषद्गूरः-दुर्गूरः-सुगूरः ; — —
गूर्यमाणः, गूर्यमाणः. जुगूरिष्यमाणः, जोगूर्यमाणः ;
गूरः, गूरः, जुगूरिषः, जोगूरः ;
गूरितुम्, गूरयितुम्, जुगूरिषितुम्, जोगूरितुम्,
[4]गूरा, गूरणा, जुगूरिषा, जोगूरा ;
गूरणम्, गूरणम्, जुगूरिषणम्, जोगूरणम् ;
गूरित्वा, गूरयित्वा, जुगूरिषित्वा, जोगूरित्वा ;
निगूर्य, सङ्गूर्य, सञ्जुगूरिष्य, सञ्जोगूर्य ;

---

1. 'दिवादिभ्यः—' (3-1-69) इति श्यन्विकरणप्रत्ययः । 'पर्जन्यवल्लक्षणं प्रवर्तते' इति न्यायात् 'हलि च' (8-2-77) इति दीर्घः ।
2. 'श्वीदितो निष्ठायाम्' (7-2-14) इति इण्णिषेधः । 'रदाभ्याम्—' (8-2-42) इति निष्ठानत्वे णत्वम् ।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
4. स्त्रियाम् 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः । अदन्तत्वात् टाप् ।

A. 'गूर्णेऽस्मिन् बहुजन्तुघूरिणि खले जूर्णैः शशंसे नृभिः
शौरिः शूरकगर्वचूरणपरः सन्तप्यमानः सताम् ।' धा. का. 2-60.

| | | | |
|---|---|---|---|
| गूरम् २, गूरित्वा २, | गूरम् २, गूरयित्वा २, | जुगूरिषम् २, जुगूरिषित्वा २, | जोगूरम् २; जोगूरित्वा २. |

## (420) "गृ सेचने" (I-भ्वादिः-937. सक. अनि. पर.)

'ज्ञाने गारयते, गिरेन्निगरणे, शब्दे गृणाति, त्वयं युक्तं, ग्रो गरतीति सेकविषये ह्रस्वान्तधातोः शपि।' (श्लो. 33) इति देवः।

| | | | |
|---|---|---|---|
| गारकः-रिका, | गारकः-रिका, | [1]जिगीर्षकः-र्षिका, | [2]जेग्रीयकः-यिका; |
| गर्ता-गर्त्री, | गारयिता-त्री, | जिगीर्षिता-त्री, | जेग्रीयिता-त्री; |
| गरन्-न्ती, | गारयन्-न्ती, | जिगीर्षन्-न्ती; | — |
| [3]गरिष्यन्-न्ती-ती, | गारयिष्यन्-न्ती-ती, | जिगीर्षिष्यन्-न्ती-ती; | — |
| — गारयमाणः, | गारयिष्यमाणः, | जेग्रीयमाणः, | जेग्रीयिष्यमाणः; |
| [4]सुगृत्-सुगृतौ-सुगृतः; | — | — | — |
| गृतम्-गृतः-गृतवान्, | गारितः, | जिगीर्षितः, | जेग्रीयितः-तवान्; |
| गरः, | गारः, | जिगीर्षुः, | [5]जेग्रियः; |
| गर्तव्यम्, | गारयितव्यम्, | जिगीर्षितव्यम्, | जेग्रीयितव्यम्; |
| गरणीयम्, | गारणीयम्, | जिगीर्षणीयम्, | जेग्रीयणीयम्; |
| [6]गार्यम्, | गार्यम्, | जिगीर्ष्यम्, | जेग्रीय्यम्; |
| ईषद्गरः-दुर्गरः-सुगरः; | | — | — |
| [7]ग्रियमाणः, | गार्यमाणः, | जिगीर्ष्यमाणः, | जेग्रीय्यमाणः; |
| गारः, | गारः, | जिगीर्षः, | जेग्रीयः; |
| गर्तुम्, | गारयितुम्, | जिगीर्षितुम्, | जेग्रीयितुम्; |
| गृतिः, | गारणा, | जिगीर्षा, | जेग्रीया; |

---

1. 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। 'ॠत इद्धातोः' (7-1-100) इतीत्त्वम्, रपरत्वम्। 'एकाच उपदेशे—' (7-2-10) इतीण्णिषेधः।
2. 'रीङृतः' (7-4-27) इति रीङादेशे, द्वित्वे, अभ्यासे 'गुणो यङ्लुकोः' (7-4-82) इति गुणः।
3. 'ऋद्धनोः स्ये' (7-2-70) इतीडागमः।
4. क्विपि 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुगागमः। एवं ल्यप्यपि ज्ञेयम्।
5. यङो लुकि, संयोगपूर्वकत्वादीकारस्य, 'अचि श्नुधातु—' (6-4-77) इतीयङ्।
6. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत्।
7. 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङ्।

गरणम्, गारणम्, जिगीर्षणम्, जेग्रीयणम्;
गृत्वा, गारयित्वा, जिगीर्षित्वा, जेग्रीयित्वा;
प्रगृत्य, सङ्गार्य, सञ्जिगीर्ष्य, सञ्जेग्रीय्य;
गारम् २, } गारम् २, } जिगीर्षम् २, } जेग्रीयम् २; }
गृत्वा २, } गारयित्वा २, } जिगीर्षित्वा २, } जेग्रीयित्वा २. }

(421) "गॄ विज्ञाने" (X-चुरादिः-1708. सक. सेट्. आत्म.) आकुस्मीयः।

'ज्ञाने गारयते, गिरेन्निगरणे, शब्दे गृणाति त्रयं
युक्तं, ग्रो गरतीति सेकविषये ह्रस्वान्तधातोः शपि।' (श्लो. 33) इति देवः।

गारकः-रिका, गारयिता-त्री, [A]गारितम्-तः-तवान्; इत्यादीनि सेचनार्थकभौवादिकगृधातुवत् (420) ण्यन्ताद्रूपाणि सर्वाणि बोध्यानि। ण्यन्तात् सनि तु—

जिगारयिषकः-षिका, ईषज्जिगारयिषः-दुर्जिगारयिषः-सुजिगारयिषः;
जिगारयिषिता-त्री, जिगारयिष्यमाणः;
[1]जिगारयिषमाणः, जिगारयिषः;
जिगारयिषिष्यमाणः, जिगारयिषितुम्;
जिगारयिट्-जिगारयिषौ-जिगारयिषः, जिगारयिषा;
जिगारयिषितः-तवान्, जिगारयिषणम्;
जिगारयिषुः, जिगारयिषित्वा;
जिगारयिषितव्यम्, प्रजिगारयिष्य;
जिगारयिषणीयम्, जिगारयिषम् २; }
जिगारयिष्यम्, जिगारयिषित्वा २. }

इति रूपाणीति विशेषः।

(422) "गृज शब्दार्थः" (I-भ्वादिः-248. सक. सेट्. पर.)

'गर्जेद् गृञ्जेद् गजेद् गञ्जेच्छब्दने गाजयेण्णिचि॥' (श्लो. 59) इति देवः।

---

1. 'आकुस्मादात्मनेपदिनः' (गणसूत्रं चुरादौ) इति वचनात् ण्यन्तात् आत्मनेपदमेव।

A. 'इत्यादि वाद्यशतदेवनमध्य एव
लोकः समालपदगारितकृष्णवीर्यः।' धा. का. 3-37.

[1]गर्जकः-र्जिका, गर्जकः-र्जिका, जिगर्जिषकः-षिका, [2]जरीगृजकः-जिका ;
गर्जिता-त्री, गर्जयिता-त्री, जिगर्जिषिता-त्री, जरीगृजिता-त्री ;
[A]गर्जन्-न्ती, गर्जयन्-न्ती, जिगर्जिषन्-न्ती ; —
गर्जिष्यन्-न्ती-ती, गर्जयिष्यन्-न्ती-ती, जिगर्जिषिष्यन्-न्ती-ती ; —
गर्जयमानः, गर्जयिष्यमाणः, जरीगृज्यमानः, जरीगृजिष्यमाणः ;
[3]सुगृक्-सुगृग्-सुगृजौ-सुगृजः ; — —
गृजितम्-तः, गर्जितः, जिगर्जिषितः, जरीगृजितः-तवान् ;
गृजः, सुगर्जी, [4]गर्जनः, गर्जः, जिगर्जिषुः, जरीगृजः ;
गर्जितव्यम्, गर्जयितव्यम्, जिगर्जिषितव्यम्, जरीगृजितव्यम् ;
गर्जनीयम्, गर्जनीयम्, जिगर्जिषणीयम्, जरीगृजनीयम् ;
[5]गृज्यम्, गर्ज्यम्, जिगर्जिष्यम्, जरीगृज्यम् ;
ईषद्गर्जः-दुर्गर्जः-सुगर्जः ; — —
गृज्यमानः, गर्ज्यमानः, जिगर्जिष्यमाणः, जरीगृज्यमानः ;
[6]गर्जः, गर्जः, जिगर्जिषः, जरीगृजः ;
गर्जितुम्, गर्जयितुम्, जिगर्जिषितुम्, जरीगृजितुम् ;
गृक्तिः, गर्जना, जिगर्जिषा, जरीगृजा ;
गर्जनम्, गर्जनम्, जिगर्जिषणम्, जरीगृजनम् ;
[7]गर्जित्वा, गर्जयित्वा, जिगर्जिषित्वा, जरीगृजित्वा ;
[8]प्रगृज्य, सङ्गर्ज्य, अनुजिगर्जिष्य, प्रजरीगृज्य ;

---

1. 'पुगन्तलघूपधस्य च' (7-3-86) इति गुणः ।
2. 'रीगृदुपधस्य च' (7-4-90) इति यङि अभ्यासस्य रीगागमः ।
3. 'चोः कुः' (8-2-30) इति कुत्वे चर्त्वविकल्पः ।
4. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति ताच्छीलिको युच् ।
5. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति क्यप् ।
6. 'चजोः—' (7-3-52) इति कुत्वं न, निष्ठायां सेट्त्वात् ।
7. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः ।
8. 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' (परिभाषा. 54) इति वचनात् पूर्वमिडागमो न प्रवर्तते । तेन सेट्त्वाभावात् 'न क्त्वा सेट्' (1-2-18) इति न प्रवर्तते ।

A. 'जहर्ष जज्ञातुजितस्थलेरसौ वृषैरतुल्यैर्गजगर्जिभिर्वृतम् ।
गर्जत्खरं गृजितधेनुमोमुजद्वत्सोत्करं मुञ्जदजं व्रजन् व्रजम् ॥' धा. का. 1-33

गर्जम् २, गर्जित्वा २, | गर्जम् २, गर्जयित्वा २, | जिगर्जिषम् २, जिगर्जिषित्वा २, | जरीगृजम् २ ; जरीगृजित्वा २.

## (423) "गृजि शब्दार्थः" (I-भ्वादिः-249. अक. सेट्. पर.)

'गर्जेद् गृञ्जेद् गजेद् गञ्जेच्छब्दने गाजयेण्णिचि ॥' (श्लो. 59) इति देवः ।

[1]गृञ्जकः-ञ्जिका, गृञ्जकः-ञ्जिका, जिगृञ्जिषकः-षिका, [2]जरीगृञ्जकः-ञ्जिका ;
गृञ्जिता-त्री, गृञ्जयिता-त्री, जिगृञ्जिषिता-त्री, जरीगृञ्जिता-त्री ;
गृञ्जन्-न्ती, गृञ्जयन्-न्ती, जिगृञ्जिषन्-न्ती ; —
गृञ्जिष्यन्-न्ती-ती, गृञ्जयिष्यन्-न्ती-ती, जिगृञ्जिषिष्यन्-न्ती-ती ; —
गृञ्जयमानः, गृञ्जयिष्यमाणः, जरीगृञ्ज्यमानः, जरीगृञ्जिष्यमाणः ;
[3]सुगृन्-सुगृञ्जौ-सुगृञ्जः ; — —
गृञ्जितम्-[A]तः, गृञ्जितः, जिगृञ्जिषितः, जरीगृञ्जितः-तवान् ;
गृञ्जः, [4]गृञ्जनः, गृञ्जः, जिगृञ्जिषुः, जरीगृञ्जः ;
गृञ्जितव्यम्, गृञ्जयितव्यम्, जिगृञ्जिषितव्यम्, जरीगृञ्जितव्यम् ;
गृञ्जनीयम्, गृञ्जनीयम्, जिगृञ्जिषणीयम्, जरीगृञ्जनीयम् ;
गृञ्ज्यम्, गृञ्ज्यम्, जिगृञ्जिष्यम्, जरीगृञ्ज्यम् ;
ईषद्गृञ्जः-दुर्गृञ्जः-सुगृञ्जः ; — —
गृञ्ज्यमानः, गृञ्ज्यमानः, जिगृञ्जिष्यमाणः, जरीगृञ्ज्यमानः ;
गृञ्जः, गृञ्जः, जिगृञ्जिषः, जरीगृञ्जः ;
गृञ्जितुम्, गृञ्जयितुम्, जिगृञ्जिषितुम्, जरीगृञ्जितुम् ;
गृञ्जा, गृञ्जना, जिगृञ्जिषा, जरीगृञ्जा ;
गृञ्जनम्, गृञ्जनम्, जिगृञ्जिषणम्, जरीगृञ्जनम् ;
गृञ्जित्वा, गृञ्जयित्वा, जिगृञ्जिषित्वा, जरीगृञ्जित्वा ;
सङ्गृञ्ज्य, प्रगृञ्ज्य, प्रजिगृञ्जिष्य, प्रजरीगृञ्ज्य ;
गृञ्जम् २, गृञ्जित्वा २, | गृञ्जम् २, गृञ्जयित्वा २, | जिगृञ्जिषम् २, जिगृञ्जिषित्वा २, | जरीगृञ्जम् २ ; जरीगृञ्जित्वा २.

---

1. 'इदितो नुम् धातोः' (7-1-58) इति नुम् । एवं सर्वत्र ज्ञेयम् ।
2. 'रीगृत्वत इति वक्तव्यम्' (वा. 7-4-90) इति यङन्ते अभ्यासस्य रीगागमः ।
3. इदित्त्वान्नलोपो न । 'संयोगान्तस्य—' (8-2-23) इति जकारस्य लोपः ।
4. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति ताच्छीलिको युच् ।

A. 'गर्जत्खरं गृञ्जितधेनुमोमुजद्वत्सोत्करं मुञ्जदजं वजन् व्रजम् ॥' धा. का. 1-33.

(424) "गृधु अभिकाङ्क्षायाम्" (IV-दिवादिः-1246. सक. सेट्. पर.)

'गृधेर्गृध्यति काङ्क्षायां, गर्धेस्तत्रैव गर्धयेत् ।' (श्लो. 123) इति देवः ।

गर्धकः-र्धिका, गर्धकः-र्धिका, [1]जिगर्धिषकः-षिका, [2]जरीगृधकः-धिका ;
गर्धिता-त्री, गर्धयिता-त्री, जिगर्धिषिता-त्री, जरीगृधिता-त्री ;
[3]गृध्यन्-न्ती, [4]गर्धयन्-न्ती, जिगर्धिषन्-न्ती ; —
गर्धिष्यन्-न्ती-ती, गर्धयिष्यन्-न्ती-ती, जिगर्धिषिष्यन्-न्ती-ती ; —
[5]व्यतिगृध्यमानः, गर्धयमानः, — जरीगृध्यमानः ;
व्यतिगर्धिष्यमाणः, गर्धयिष्यमाणः, — जरीगृधिष्यमाणः ;
[6]सङ्घृत्-सङ्घृद्-सङ्गृधौ-सङ्गृधः ; — —
[7]गृद्धम्-गृद्धः-गृद्धवान्, गर्धितः, जिगर्धिषितः, जरीगृधितः-तवान् ;
गृधः, [8]धनगर्धी, [9]गर्धनः,[A] [10]गृध्नुः,[B] गर्धः, जिगर्धिषुः, जरीगृधः ;

---

1. अस्य धातोः सेट्कत्वात् सनि 'जिगर्धिषकः' इति रूपमेव साधु । क्षीरतरङ्गिण्यां इडभावघटितप्रयोगो दृश्यते 'जिघृत्सति' इति ; तत्र प्रमाणं नोपलभ्यते ।
2. 'रीगृदुपधस्य च' (7-4-90) इति यङन्ते सर्वत्र अभ्यासस्य रीगागमः ।
3. 'दिवादिभ्यः—' (3-1-69) इति श्यन् । श्यनो ङिद्वद्भावात् अङ्गस्य गुणो न ।
4. गर्धयन् माणवकम् । प्रतारयन् इत्यर्थः । 'गृधिवञ्च्योः प्रलम्भने' (1-3-69) इति ण्यन्ताद् गृधेः परस्मैपदमेव । अन्यत्र, 'श्वानं गर्धयन् गर्धयमानः' इति भवति । स्पृहामुत्पादयन् इत्यर्थः ।
5. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
6. पदान्ते 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (8-2-37) इति भष्भावः । जश्त्वं चर्त्वञ्च ।
7. उदित्त्वेन क्त्वायामिटो विकल्पनात् 'यस्य विभाषा' (7-2-15) इत्यनेन निष्ठायाम् इण्णिषेधः ।
8. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः । 'झषस्तथोर्धोऽधः' (8-2-40) इति धत्वम् ।
9. 'जुचङ्क्रम्यदन्द्रम्यसृगृधि—' (3-2-150) इत्यादिना ताच्छीलिको युच् ।
10. 'त्रसिगृधिधृषिक्षिपेः—' (3-2-140) इति क्नुः ताच्छीलिकः । 'नेड् वशि कृति' (7-2-8) इति इण्णिषेधः ।

A. 'कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्धनः ।
कुर्वन्ति कोपनं तारा मण्डना गगनस्य माम् ॥' भ. का. 7-16.

B. 'नभ्यांस्तुभ्य विभो जयेति नुवते क्लिद्यन् प्रमेद्यद्भुजं
क्ष्विद्यन् ऋद्धिमगृध्नवेऽपि स विमृश्याक्षीयमाणां ददौ ॥' धा. का. 2-67.

| | | | |
|---|---|---|---|
| गर्धितव्यम्, | गर्धयितव्यम्, | जिगर्धिषितव्यम्, | जरीगृधितव्यम्; |
| गर्धनीयम्, | गर्धनीयम्, | जिगर्धिषणीयम्, | जरीगृधनीयम्; |
| [1]गृध्यम्,[A] | गर्ध्यम्, | जिगर्धिष्यम्, | जरीगृध्यम्; |
| ईषद्गर्धः-दुर्गर्धः-सुगर्धः; | | — | — |
| गृध्यमानः, | गर्ध्यमानः, | जिगर्धिष्यमाणः, | जरीगृध्यमानः; |
| गर्धः, | गर्धः, | जिगर्धिषः, | जरीगृधः; |
| गर्धितुम्, | गर्धयितुम्, | जिगर्धिषितुम्, | जरीगृधितुम्; |
| गृद्धिः, | गर्धना, | जिगर्धिषा, | जरीगृधा; |
| गर्धनम्, | गर्धनम्, | जिगर्धिषणम्, | जरीगृधनम्; |
| [2]गर्धित्वा-गृद्ध्वा, | गर्धयित्वा, | जिगर्धिषित्वा, | जरीगृधित्वा; |
| प्रगृध्य, | प्रगर्ध्य, | प्रजिगर्धिष्य, | प्रजरीगृध्य; |
| गर्धम् २, गर्धित्वा २, गृद्ध्वा २, | गर्धम् २, गर्धयित्वा २, | जिगर्धिषम् २, जिगर्धिषित्वा २, | जरीगृधम् २; जरीगृधित्वा २; |
| [3]गृध्रः. | | | |

## (425) "गृह ग्रहणे" (X-चुरादिः-1899. सक. सेट्. अदन्तः, आगर्वीयः)

"ण्यन्तस्य ग्रहणे गृहेर्गृहयते, तत्रानदन्ताद् गृहेः
भूवादेः शपि गर्हते, श्नि तु पदे गृह्णात्यगृह्णीत च।
गर्हेर्वा णिचि निन्दनार्थविषये गर्हेत् तथा गर्हयेद्
भूवादेः शपि कुत्सनार्थविषये गर्हेर्भवेद् गर्हते ॥"

(श्लो. 194) इति देवः।

---

1. 'ऋदुपधात्—' (3-1-110) इति क्यप्।

2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणो भवति।

3. 'सुसूधाञ्गृधिभ्यः क्रन्' (द. उ. 8-42) इति क्रन् प्रत्ययः। गृध्रः= लुब्धकः, श्येनो वा।

A. 'इत्थं शिष्येण गुरुवद् गृध्यमर्थमवाप्स्यसि ॥' भ. का. 6-55.

| | |
|---|---|
| [1]गृहकः-हिका, | [2]जिगृहयिषकः-षिका ; |
| गृहयिता-त्री, | जिगृहयिषिता-त्री ; |
| [3]गृहयमाणः, | जिगृहयिषमाणः ; |
| गृहयिष्यमाणः, | जिगृहयिषिष्यमाणः ; |
| [4]प्रघृट्-प्रघृड्-प्रगृहौ-प्रगृहः ; | — |
| गृहितम्-तः-[A]तवान् , | जिगृहयिषितः-तवान् ; |
| गृहः, [5]गृहयालुः,[B] | जिगृहयिषुः ; |
| गृहयितव्यम् , | जिगृहयिषितव्यम् ; |
| गृहणीयम् , | जिगृहयिषणीयम् ; |
| गृह्यम् , | जिगृहयिष्यम् ; |
| ईषद्गृहः-दुर्गृहः-सुगृहः ; | — |
| गृहयमाणः, | जिगृहयिष्यमाणः ; |
| गृहः, | जिगृहयिषः ; |
| गृहयितुम् , | जिगृहयिषितुम् ; |
| [6]गृहणा , | जिगृहयिषा ; |
| गृहणम् , | जिगृहयिषणम् ; |
| गृहयित्वा , | जिगृहयिषित्वा ; |
| [7]प्रगृहय्य , | प्रजिगृहयिष्य ; |

---

1. अस्य धातोरदन्तत्वादल्लोपस्य स्थानिवद्भावेन लघूपधगुणो न । एवं सर्वत्र ।
2. ण्यन्तात् सनि णेरयादेशे,'सन्यतः'(7-4-79) इतीत्त्वे 'जिगृहयिषकः' इति रूपम् ।
3. 'आ गर्वादात्मनेपदिनः' (गणसूत्रं चुरादौ) इति ण्यन्तादात्मनेपदमेव ।
4. 'हो ढः' (8-2-31) इति ढत्वे पदान्तत्वनिमित्तकः भष्भावः । स्थानिवत्त्वं तु 'पूर्वत्रासिद्धे न—' (वा. 1-1-57) इति निषेधान्न ।
5. 'स्पृहिगृहिपतिदयि—' (3-2-158) इति ताच्छीलिक आलुच् । 'अयामन्ताल्वाय्येत्न्विष्णुषु च' (6-4-55) इति णेरयादेशः ।
6. 'ण्यासश्रन्थो युच्' (3-3-107) इति युच् स्त्रियाम् ।
7. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।

A. 'तच्चाकर्ण्य सरोषमुत्पदयते स्मोत्तुङ्गमञ्चं हरिः
प्रोत्तिष्ठन् असिचर्मणी गृहितवान् कंसोऽपि मृग्योऽभूताम् ।' धा. का. 3-58.

B. 'दीनधीः स तपसा हिमशैले हक्पथं पुरहराद् गृहयालोः ।
आददे वरमथो विजयौ द्वावन्तरेण युधि पाण्डवरोधम् ॥' चम्पूभारते 5-79.

गृहम् २, }  जिगृहयिषम् २ ; }
गृहयित्वा २, }  जिगृहयिषित्वा २. }

(426) "गृहू ग्रहणे" (I-भ्वादिः-650. सक. वेट्. आत्म.)

'ण्यन्तस्य ग्रहणे गृहेर्गृहयते, तत्रानदन्ताद् गृहेः
भूवादेः शपि गर्हते, श्नि तु पदे गृह्णात्यगृह्णीत च ।
गर्हेर्वा णिचि निन्दनार्थविषये गर्हेत्, तथा गर्हयेद्
भूवादेःशपि कुत्सनार्थविषये गर्हेर्भवेद् गर्हते ॥'

(श्लो. 194) इति देवः ।

गर्हकः-र्हिका, गर्हकः-र्हिका, [1]जिगर्हिषकः-षिका, जिघृक्षकः-क्षिका, [2]जरीगृहकः-हिका ;

गर्हिता-त्री-[3]गर्ढा-ढ्री, गर्हयिता-त्री, जिगर्हिषिता-त्री, जिघृक्षिता-त्री, जरीगृहिता-त्री ;

— गर्हयन्-न्ती, गर्हयिष्यन्-न्ती-ती ; —

गर्हमाणः, गर्हयमाणः, जिगर्हिषमाणः-जिघृक्षमाणः, जरीगृह्यमाणः ;

गर्हिष्यमाणः, घर्क्ष्यमाणः, गर्हयिष्यमाणः, जिगर्हिषिष्यमाणः-जिघृक्षिष्यमाणः, जरीगृहिष्यमाणः ;

[4]संघृट्-संघृड्-संगृहौ-सङ्गृहः ; — — —

[5]गृढम्-गृढः-गृढवान्, गर्हितः, जिगर्हिषितः-जिघृक्षितः, जरीगृहितः-तवान् ;

[6]गृहम्, [7]गर्हणः, [8]दोषगर्ही, गर्हः, जिगर्हिषुः-जिघृक्षुः, जरीगृहः ;

---

1. ऊदित्त्वादस्य धातोरिड्विकल्पः। इडभावपक्षे 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वात् गुणाभावः, ढत्वम्, भष्भावश्च। 'षढोः कः सि' (8-2-41) इति कत्वम् ।
2. यङन्ते सर्वत्र 'रीगृदुपधस्य च' (7-4-90) इति अभ्यासस्य रीगागमः।
3. इडभावपक्षे ढत्व-धत्व-ष्टुत्व-ढलोपाः । एवं तव्यदादिष्वपि ज्ञेयम् ।
4. ढत्वे पदान्तत्वनिमित्तको भष्भावः । चर्त्वविकल्पः।
5. ऊदित्त्वेन विकल्पितेट्कत्वात् निष्ठायाम् 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः ।
6. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः ।
7. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।
8. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।

गर्हितव्यम्-गर्ढव्यम्, गर्हयितव्यम्, जिगर्हिषितव्यम्-जिघृक्षितव्यम्,
जरीगृहितव्यम्;

गर्हणीयम्, गर्हणीयम्, जिगर्हिषणीयम्-जिघृक्षणीयम्, जरीगृहणीयम्;
[1]गृह्यम्, गर्ह्यम्, जिगर्हिष्यम्-जिघृक्ष्यम्, जरीगृह्यम्;
ईषद्गर्हः-दुर्गर्हः-सुगर्हः; — —
[A]गृह्यमाणः, गर्ह्यमाणः, जिगर्हिष्यमाणः-जिघृक्ष्यमाणः, जरीगृह्यमाणः,
गर्हः, गर्हः, जिगर्हिषः-जिघृक्षः, जरीगृहः,
गर्हितुम्-गर्ढुम्, गर्हयितुम्, जिगर्हिषितुम्-जिघृक्षितुम्, जरीगृहितुम्;
गृढिः, गर्हणा, जिगर्हिषा-जिघृक्षा, जरीगृहा;
गर्हणम्, गर्हणम्, जिगर्हिषणम्-जिघृक्षणम्, जरीगृहणम्;
[2]गर्हित्वा-गृढ्वा, गर्हयित्वा, जिगर्हिषित्वा-जिघृक्षित्वा, जरीगृहित्वा;
प्रगृह्य, प्रगर्ह्य, प्रजिगर्हिष्य-प्रजिघृक्ष्य, प्रजरीगृह्य;

गर्हम् २, गर्हित्वा २, गृढ्वा २, } गर्हम् २, गर्हयित्वा २, } जिगर्हिषम् २-जिघृक्षम् २, जिगर्हिषित्वा २-जिघृक्षित्वा २, } जरीगृहम् २; जरीगृहित्वा २. }

(427) "गॄ निगरणे" (VI-तुदादिः-1410. अक. सेट्. पर.) किरादिः।

"ज्ञाने गारयते, गिरेन्निगरणे, शब्दे गृणाति त्वयम्
युक्तं, ग्रो गरतीति सेकविषये ह्रस्वान्तधातोः शपि।" (श्लो. 33) इति देवः।

'निपूर्वताप्राचुर्योपदर्शनार्थो निः।' इति पुरुषकारः।

गारकः-रिका, [3]गालकः-लिका, गारकः-रिका, गालकः-लिका,

---

1. 'ऋदुपधात्—' (3-1-110) इति क्यप्।
2. इट्पक्षे 'न क्त्वा सेट्' (1-2-18) कित्त्वनिषेधाद् गुणः।
3. 'अचि विभाषा' (8-2-21) इति लत्वविकल्पः। एवं सर्वत्राजादिप्रत्यये परतः बोध्यम्।

A. 'ग्राहितः शुभपथप्रकाशने सस्वजेऽथ तमनूह्यवैभवः।
गाढमैतरसगृह्यमाणधीः भूषणस्लहनघुंषितो बलः॥' धा. का. 1. 82.

[1]जिगरिषकः, जिगलिषकः-षिका, [2]जेगिरकः-रिका, जेगिलकः-लिका;
[3]गरिता-गरीता, गलिता-गलीता-त्री, गारयिता-गालयिता-त्री, जिगरिषिता-
जिगलिषिता-त्री, जेगिरिता-जेगिलिता-त्री;
[4]गिरन्-गिलन्-न्ती-ती, [5]गारयन्-गालयन्-न्ती, जिगरिषन्-
जिगलिषन्-न्ती; —
गरिष्यन्-गलिष्यन्-गरीष्यन्-गलीष्यन्-न्ती-ती, गारयिष्यन्-गालयिष्यन्-
न्ती-ती, जिगरिषिष्यन्-जिगलिषिष्यन्-न्ती-ती; —
[6]अवगिरमाणः-[7]संगिरमाणः,[A] अवगिलमानः-संगिलमानः,
[8]अवजिगरिषमाणः,-अवजिगलिषमाणः,
अवगरिष्यमाणः, अवगलिष्यमाणः, अवजिगरिष्यमाणः-अवजिगलिष्यमाणः,
सञ्जिगरिष्यमाणः, सञ्जिगलिष्यमाणः, [9]जेगिल्यमानः, जेगिलिष्यमाणः;

---

1. 'इट् सनि वा' (7-2-41) इति वैकल्पिकेऽडागमे प्राप्ते, 'किरश्च पञ्चभ्यः' (7-2-75) इति नित्यमिट्। 'द्विर्वचनेऽचि' (1-1-59) इति गुणनिषेधात् 'गॄ' शब्दस्य 'सन्यङोः' (6-1-9) इति द्वित्वम्। अभ्यासकार्यम्। उत्तरखण्डे गुणः। इडागमस्य 'वॄतो वा' (7-2-38) इति दीर्घविकल्पस्तु न; 'अत्रेटो दीर्घो नेष्टः' (भाष्येष्टिः 7-2-75) इति भाष्यात्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
2. गर्हितं गिरति—इत्यर्थे 'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्' (3-1-24) इति यङ्। 'ऋत इद्धातोः' (7-1-100) इति इत्त्वे रपरत्वे च 'सन्यङोः' (6-1-9) इति द्वित्वम्। न चात्र 'हलि च' (8-2-77) इति दीर्घः शङ्क्यः। लत्वदृष्ट्या दीर्घस्यासिद्धत्वात्। 'यस्य हलः' (6-4-49) इति यलोपः। अल्लोपः। अनन्तरम्, अजादिप्रत्ययपरकत्वात् वैकल्पिकं लत्वम्। एवं यङन्ते सर्वत्र।
3. 'वॄतो वा' (7-2-38) इति इटो दीर्घविकल्पः। एवं तव्यत्तुमुनादिषु ज्ञेयम्।
4. 'तुदादिभ्यः—' (3-1-77) इति शविकरणप्रत्ययः। इत्त्वं, रपरत्वं च। स्त्रियाम्, 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् विकल्पेन भवति।
5. 'निगरणचलनार्थेभ्यः—' (1-3-87) इति ण्यन्तात् शतैव।
6. 'अवाद् ग्रः' (1-3-51) इति शानच्।
7. 'समः प्रतिज्ञाने' (1-3-52) इति शानच्। वैयाकरणाः शब्दं नित्यं सङ्गिरमाणा भवन्ति।
8. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात् शानच्।
9. 'ग्रो यङि' (8-2-20) इति नित्यं लत्वम्।

A. 'वसूनि देशांश्च निवर्तयिष्यन् रामं नृपः सङ्गिरमाण एव।
तयाऽवजज्ञे भरताभिषेको विषादशङ्कुश्च मतौ निचख्ने॥' भ. का. 3. 8.

[1]गीः-गिरौ-गिरः ; — — —

[2]गीर्णः-गीर्णम्-गीर्णवान्, गारितः-गालितः, जिगरिषितः-जिगलिषितः, जेगिरितः-जेगिलितः, तवान् ;

[3]गरः, गलः, [4]अजगरः, मुद्गरः, [5]तिमिङ्गिलः-गिलगिलः, गारः, गालः, [A]जिगरिषुः-जिगलिषुः, जेगिरः-जेगिलः ;

गरितव्यम्-गरीतव्यम्, गलितव्यम्-गलीतव्यम्, गारयितव्यम्-गालयितव्यम्, जिगरिषितव्यम्-जिगलिषितव्यम्, जेगिरितव्यम्-जेगिलितव्यम् ;

गरणीयम्-गलनीयम्, गारणीयम्-गालनीयम्, जिगरिषणीयम्-जिगलिषणीयम्, जेगिरणीयम्-जेगिलनीयम् ;

[6]गार्यम्, गार्यम्-गाल्यम्, जिगरिष्यम्-जिगलिष्यम्, जेगिर्यम्-जेगिल्यम् ;

ईषद्गरः-ईषद्गलः-दुर्गरः-दुर्गलः-सुगरः,-सुगलः ; — —

[7]गीर्यमाणः, गार्यमाणः-गाल्यमानः, जिगरिष्यमाणः-जिगलिष्यमाणः, जेगीर्यमाणः ;

---

1. इत्त्वे रपरत्वे च 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः।

2. 'श्र्युकः क्किति' (7-2-11) इतीण्णिषेधः। इत्त्वरपरत्वयोः, 'रदाभ्याम्—' (8-2-42) इति निष्ठानत्वे णत्वे च रूपम्।

3. 'अचि विभाषा' (8-2-21) इति विभाषा प्राप्तस्य लत्वस्य, 'देवत्रातो गलो ग्राहः इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥' इति भाष्येण (1-4-53) व्यवस्थितविभाषात्वलाभात् प्राण्यङ्गे नित्यं लत्वम्। विषे तु गर इत्येव। लत्वं न।

4. पचादिषु (3-1-134) पाठात् अच्। अजं गिरति=इति अजगरः। 'श्वपच-चक्रधरवत् अकारादनुपपदात् कर्मोपपदे विप्रतिषेधेन' (भाष्यम्- 1-4-2) इति क्षीरतरङ्गिणी। एवं मुदं गिरतीति मुद्गरः इत्यत्रापि ज्ञेयम्।

5. तिमिं गिलतीति तिमिङ्गिलः=जलजन्तुविशेषः। 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' (वा. 3-2-5) इति कः। 'गिलेऽगिलस्य' (वा. 6-3-70) इति मुम्। 'अगिलस्य' (वा. 6-3-70) इत्युक्तत्वात् गिलशब्दे परे मुम् न।

6. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत्। वृद्धिः।

7. इत्वरपरत्वयोः 'हलि च' (8-2-77) इति दीर्घः। एवं 'जेगीर्यमाणः' इति यङन्तात् कर्मणि यकि अपि ज्ञेयम्।

A. 'लोकानशिशिषोस्तुल्यः कृतान्तस्य विपर्यये।
वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः॥' भ. का. 9. 54.

[1]गरः, गलः, [2]उद्गारः[A]-निगारः, निगालः, जिगरिषः-जिगलिषः,
जेगिरः-जेगिलः ;
गरितुम्-गरीतुम्, गलितुम्-गलीतुम्, गारयितुम्-गालयितुम्,
जिगरिषितुम्-जिगलिषितुम्, जेगिरितुम्-जेगिलितुम् ;
[3]गीर्णिः, गारणा-गालना, जिगरिषा-जिगलिषा, जेगिरा-जेगिला ;
निगरणम्-[4]गिरणम्-निगलनम्, गारणम्-गालनम्, जिगरिषणम्-जिगलिषणम् ;
जेगिरणम्-जेगिलनम् ;
गीर्त्वा, गारयित्वा-गालयित्वा, जिगरिषित्वा-जिगलिषित्वा,
जेगिरित्वा-जेगिलित्वा ;
संगीर्य, संगार्य-संगाल्य, सञ्जिगरिष्य-सञ्जिगलिष्य, सञ्जेगिर्य ;

| | | | |
|---|---|---|---|
| गारम् २, गालम् २, गीर्त्वा २, | गारम् २, गालम् २, गारयित्वा २, गालयित्वा २, | जिगरिषम् २, जिगलिषम् २, जिगरिषित्वा २, जिगलिषित्वा २, | जेगिरम् २, जेगिलम् २, जेगिरित्वा २, जेगिलित्वा २ ; |

[5]गुरुः ;

## (428) "गॄ शब्दे" (IX-क्र्यादिः-1498. अक. सेट्. पर.)

### प्वादिः ल्वादिश्च ।

'ज्ञाने गारयते, गिरेन्निगरणे, शब्दे गृणाति लयम्
युक्तं, ग्रो गरतीति सेकविषये ह्रस्वान्तधातोः शपि ।' (श्लो. 33) इति देवः ।

---

1. 'ॠदोरप्' (3-3-57) इति भावेऽप् ।
2. 'उन्न्योर्ग्रः' (3-3-29) इति घञ् । अवपवादः । उद्गारः=वीच्यादिभिः समुद्रस्योद्रेकः । 'उद्गारः=अतिप्रवृत्तो ध्वनिः' इति प्र. कौमुदीव्याख्यायाम् । निगारः देवदत्तस्य । भक्षणमित्यर्थः ।
3. 'ॠल्वादिभ्यः क्तिन्निष्ठावद् वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नत्वे इत्वरपरत्वदीर्घेषु णत्वम् ।
4. 'टु वम उद्गिरणे' इति धातुपाठे निर्देशात् क्ङिति प्रत्यये परतः विहितम् इत्वम् ल्युटयपीष्टमिति केचित् । तेन 'गिरणम्' इत्यपि साधु—इति प्रक्रियासर्वस्वे ।
5. औणादिके [ द. उ. 1-109] कुप्रत्यये, उकारस्यान्तादेशे च रूपम् । गिरति=अर्थविशेषान् इति गुरुः=आचार्यः पूज्यो जनश्च ।

A. 'सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥' भ. का. 7. 38.

गारकः-रिका-गालकः-लिका, गारकः-रिका-गालकः-लिका, जिगरिषकः-जिगरीषकः-जिगलिषकः-जिगलीषकः-षिका, जेगिरकः-रिका-जेगिलकः-लिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिकगृ धातुवत् (427) बोध्यानि ॥

[1]गृणन्-[A]ती। अस्य धातोः सन्नन्ते सर्वत्र इडागमस्य 'वृतो वा' (7-2-38) इति दीर्घः भवत्येव। 'अवाद् ग्रः' इत्यत्र अस्य न ग्रहणम्। 'अवपूर्वो गृणातिः न प्रयुज्यते (1-3-51) इति भाष्यात्। अस्माद् धातोः यङ्प्रत्ययः नोत्पद्यते, अनभिधानात् इति (8-2-20) काशिका ॥

(429) "गेपृ कम्पने" (I-भ्वादिः-369. सक. सेट्. आत्म.) [अ]

| | | | |
|---|---|---|---|
| गेपकः-पिका, | गेपकः-पिका, | जिगेपिषकः-षिका, | जेगेपकः-पिका ; |
| गेपिता-त्री, | गेपयिता-त्री, | जिगेपिषिता-त्री, | जेगेपिता-त्री ; |
| — | [2]गेपयन्-न्ती, | गेपयिष्यन्-न्ती-ती ; | — |
| गेपमानः, | — | जिगेपिषमाणः, | जेगेप्यमानः ; |
| गेपिष्यमाणः, | — | जिगेपिषिष्यमाणः, | जेगेपिष्यमाणः ; |
| गेप्-गेपौ-गेपः ; | — | — | — |
| गेपितम्-तः, | गेपितः, | जिगेपिषितः, | जेगेपितः-तवान् ; |
| गेपः, [3]गेपनः,[B] | गेपः, | जिगेपिषुः, | जेगेपः ; |
| गेपितव्यम्, | गेपयितव्यम्, | जिगेपिषितव्यम्, | जेगेपितव्यम् ; |

---

1. शतरि 'क्र्यादिभ्यः—' (3-1-81) इति श्ना विकरणप्रत्ययः। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः। 'प्वादीनां ह्रस्वः' (7-3-80) इति शिति परे ह्रस्वः। णत्वम्। उगित्त्वेन स्त्रियां ङीप्।

2. 'निगरणचलनार्थेभ्यः | '(1-3-87) इति ण्यन्तात् परस्मैपदमेव।

3. 'चलनशब्दार्थादकर्मकात्—' (3-2-148) इति तच्छीलादिषु युच्।

[अ] '—गेपृ ग्लेपृ च' इति धातुपाठे पठ्यते। अत्र, 'चकारात् कम्पने, गतौ च सूत्रविभागात्।' इति [क्षीर] स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा 'कम्पने' इत्यपेक्ष्यते।' इति माधवधातुवृत्तौ।

A. 'इत्थं हरौ गृणति हस्तिपकोऽपि कोपी जीनोऽप्यहं न तु रिणामि भियेति वादी।' धा. का. 3-8.

B. 'अगेपनोऽग्लेपत स व्रजे यदा रविस्तदाऽमेपत पश्चिमां दिशम्। प्ररेपितात् कोरकतां सरोरुहादलेपि भृङ्गैः कुमुदं त्रपान्वितैः ॥' धा. का. 1. 48.

| | | | |
|---|---|---|---|
| प्रगेपनीयम्-[1]प्रगेपणीयम्, | गेपनीयम्, | जिगेपिषणीयम्, | जेगेपनीयम्; |
| गेप्यम्, | गेप्यम्, | जिगेपिष्यम्, | जेगेप्यम्; |
| ईषद्गेपः-दुर्गेपः-सुगेपः; | | — | — |
| गेप्यमानः, | गेप्यमानः, | जिगेपिष्यमाणः, | जेगेप्यमानः; |
| गेपः, | गेपः, | जिगेपिषः, | जेगेपः; |
| गेपितुम्, | गेपयितुम्, | जिगेपिषितुम्, | जेगेपितुम्; |
| [2]गेपा, | गेपना, | जिगेपिषा, | जेगेपा; |
| गेपनम्, | गेपनम्, | जिगेपिषणम्, | जेगेपनम्; |
| गेपित्वा, | गेपयित्वा, | जिगेपिषित्वा, | जेगेपित्वा; |
| प्रगेप्य, | प्रगेप्य, | प्रजिगेपिष्य, | प्रजेगेप्य; |
| गेपम् २, गेपित्वा २, | गेपम् २, गेपयित्वा २, | जिगेपिषम् २, जिगेपिषित्वा २, | जेगेपम् २; जेगेपित्वा. |

(430) "गेवृ सेचने" (I-भ्वादिः-502. सक. सेट्. आत्म.)

गेवकः-विका, गेवकः-विका, जिगेविषकः-षिका, जेगेवकः-विका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकगेपृधातुवत् (429) बोध्यानि। क्विपि तु—वृक्षगौः-वृक्षगावौ-वृक्षगावः, इति विशेषः। 'च्छ्वोः—' (6-4-19) इति वकारस्य ऊठादेशे 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धौ च वृक्षगौः इति रूपम्। [A]गेव्यम्।

(431) "गेषृ अन्विच्छायाम्" (I-भ्वादिः-614. सक. सेट्. आत्म.)

अन्विच्छा-अन्वेषणा।

गेषकः-षिका, गेषकः-षिका, जिगेषिषकः-षिका, जेगेषकः-पिका; इत्यादीनि सर्वाणि रूपाणि भौवादिकगेपृवत् (429) ज्ञेयानि। क्विपि तु—'झलां जशोऽन्ते' (8-2-39) इति जश्त्वे चर्त्वे च गेड्—गेट्—गेषौ—गेषः, इति रूपम्, इति विशेषः। तुमुनि—[B]गेषितुम्।

---

1. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः।
2. 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः।

A. 'सेव्यं सतां शङ्करगेव्यमब्जभूग्लेव्यं सुरैः पेव्यममेव्यमुन्मदैः।
प्रम्लेवितं रेवितवत्समण्डलीं मव्यद्भिराभीरजनैरसूर्क्ष्यकैः॥' धा. का. 1. 65.

B. 'भाषितुं स खलु हर्षवर्षितो गेषितुं समुचितं च नाशकत्।
येषणात्स हरिजेषसम्भ्रमान्नेषितस्मृतिरपेषितो रथात्॥' धा. का. 1. 78.

## (432) "गै शब्दे" (I-भ्वादिः-917. अक. अनि. पर.)

'शब्दविशेषे' इति क्षीरस्वामी ।

"गाते गाङो गतावर्थे, कै गै शब्देऽस्य गायति ।" (श्लो. 5) इति देवः ।

| | | | |
|---|---|---|---|
| [1]गायकः-यिका, | [2]गापकः-पिका, | [3]जिगासकः-सिका, | [4]जेगीयकः-यिका ; |
| गाता-त्री, | गापयिता-त्री, | जिगासिता-त्री, | जेगीयिता-त्री ; |
| [5]गायन्-न्ती, | गापयन्-न्ती, | जिगासन्-न्ती ; | — |
| गास्यन्-न्ती-ती, | गापयिष्यन्-न्ती-ती, | जिगासिष्यन्-न्ती-ती ; | — |
| गापयमानः, | गापयिष्यमाणः, | जेगीयमानः, | जेगीयिष्यमाणः ; |
| सुगाः-सुगौ-सुगाः ; | — | — | — |
| [6]गीतम्-तः, उपगीतम्, | गापितः, | जिगासितः, | जेगीयितः-तवान् ; |

[7]गायः, [8]गाथकः[A]-गाथिका, [9]गायनः[B]-गायनी, [10]गेयः, [11]सामसङ्गायः,

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यात्वे, 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः । एवं घञि णमुलि च ज्ञेयम् ।
2. आत्वे, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इत्यादन्तलक्षणः पुगागमः । एवं सर्वत्र ण्यन्ते बोध्यम् ।
3. अनैमित्तिके आत्वे, द्वित्वे, अभ्यासस्य, 'सन्यतः' (7-4-79) इतीत्वम् । एवं सर्वत्र सन्नन्ते बोध्यम् ।
4. 'घुमास्थागापाजहातिसां हलि' (6-4-66) इतीत्वे, अभ्यासस्य 'गुणो यङ्लुकोः' (7-4-82) इति गुणः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
5. शतरि शित्परकत्वात् आत्वाभावे, आयादेशः ।
6. 'घुमास्थागापा—' (6-4-66) इतीत्वम् । एवं क्त्वायां, क्तिनि, यकि च ज्ञेयम् ।
7. 'श्याद्व्यधास्रु—' (3-1-141) इत्यादिना कर्तरि णप्रत्ययः । वाऽसरूपन्यायेन ण्वुल्प्रत्ययोऽपि भवत्येव ।
8. 'गस्थकन्' (3-1-146) इति थकन्प्रत्ययः । स्त्रियां टापि, 'प्रत्ययस्थात्—' (7-3-44) इतीत्वम् ।
9. 'ण्युट् च' (3-1-147) इति ण्युट् । णित्त्वात् युगागमः । स्त्रियां टित्त्वात् ङीप् ।
10. 'भव्यगेय—' (3-4-68) इत्यादिना कर्तरि यत्प्रत्ययः । 'ईद्यति' (6-4-65) इतीत्वे गुणः । गेयो माणवकः साम्नाम् ।
11. 'गापोष्टक्' (3-2-8) इत्यत्र 'अनुपसर्गे' इत्युक्त्या, उपसर्गसमभिव्याहारे 'कर्मण्यण्' (3-2-1) इत्यणेव भवति ।

A. 'वाताहतिचलच्छाखा नर्तका इव शाखिनः ।
दुःसहा ह्री परिक्षिप्ताः क्वणद्भिरलिगाथकैः ॥' भ. का. 6-84.

B. 'प्रादिदक्षत नो नृत्यं नाशुश्रूषत गायनान् ।
रामं सुस्मूर्षमाणोऽसौ कपिर्विरहदुःखितम् ॥' भ. का. 8-34.

[1]सामगः-सामगी, [2]सामगायी, [3]देवगायी,[A] छन्दोगः, [4]सुगः, गापः, जिगासुः, [5]जेग्यः ;

| | | | |
|---|---|---|---|
| गातव्यम्, | गापयितव्यम्, | जिगासितव्यम्, | जेगीयितव्यम् ; |
| [6]प्रगानीयम्-प्रगाणीयम्, | गापनीयम्, | जिगासनीयम्, | जेगीयनीयम् ; |
| गेयम्, | गाप्यम्, | जिगास्यम्, | जेगीय्यम् ; |
| [7]ईषद्गानः-दुर्गानः-सुगानः ; | — | — | — |
| गीयमानः, | गाप्यमानः, | जिगास्यमानः, | जेगीय्यमानः ; |
| गायः, | गापः, | जिगासः, | जेगीयः ; |
| गातुम्, | गापयितुम्, | जिगासितुम्, | जेगीयितुम् ; |
| गीतिः, [8]प्रगीतिः, | गापना, | जिगासा, | जेगीया ; |
| गानम्, | गापनम्, | जिगासनम्, | जेगीयनम् ; |
| गीत्वा, | गापयित्वा, | जिगासित्वा, | जेगीयित्वा ; |
| [9]विगाय, | विगाप्य, | सञ्जिगास्य, | सञ्जेगीय्य ; |
| गायम् २, गीत्वा २, | गापम् २, गापयित्वा २, | जिगासम् २, जिगासित्वा २, | जेगीयम् २ ; जेगीयित्वा २ ; |

[10]गातुः, [11]गाथा, [12]उद्गीथः.

---

1. 'गापोष्टक्' (3-2-8) इति कर्मण्युपपदे टक्प्रत्ययः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः। स्त्रियाम्, 'टिड्ढाणञ्--' (4-1-15) इति ङीप्।
2. 'बहुलमाभीक्ष्ण्ये' (3-2-81) इति णिनिः। असकृत् साम गायन् एवमुच्यते।
3. 'साधुकारिण्युपसङ्ख्यानम्' (वा. 3-2-78) इति णिनिः।
4. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः।
5. यङन्तात् पचाद्यचि (3-1-134), 'यङोऽचि च' (2-4-74) इति लुकि 'एरनेकाचः--' (6-4-82) इति यण्।
6. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः।
7. 'आतो युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच्।
8. सोपसर्गेऽपि 'स्थागापापचो भावे' (3-3-95) इति अङपवादः क्तिन् प्रत्ययः।
9. 'न ल्यपि' (6-4-69) इतीत्वनिषेधः।
10. 'कमिमनिजनिगा--' (द. उ. 1-125) इति तुप्रत्यय। गातुः=गायकः।
11. 'उषिकुषिगर्त्तिभ्यः--' (द. उ. 6-29.) इति कर्मणि थन्प्रत्ययः। गाथा=वृत्तविशेषः।
12. 'गश्चोदि' (द. उ. 6-35.) इति थक्प्रत्ययः। उद्गीयते इति उद्गीथः=साम।

A. 'स्वसमाननाम्न्यवयवे नटद्गुणात् धनुषश्च्युतेः स युधि देवगायिनाम्।' चम्पूभारते 5-52.

## (433) "गोम उपलेपने" (X-चुरादि:-1877. सक. सेट्. उभ.) अदन्तः।

| | |
|---|---|
| गोमकः-मिका, | जुगोमयिषकः-षिका ; |
| गोमयिता-त्री, | जुगोमयिषिता-त्री ; |
| गोमयन्-न्ती, | जुगोमयिषन्-न्ती ; |
| गोमयिष्यन्-न्ती-ती, | जुगोमयिषिष्यन्-न्ती-ती ; |
| गोमयमानः, | जुगोमयिषमाणः ; |
| गोमयिष्यमाणः, | जुगोमयिषिष्यमाणः ; |
| [1]गोन्-गोमौ-गोमः ; | — |
| [A]गोमितम्-तः-तवान्, | जुगोमयिषितः-तवान् ; |
| गोमः, | जुगोमयिषुः ; |
| गोमयितव्यम्, | जुगोमयिषितव्यम् ; |
| [2]प्रगोमनीयम्-प्रगोमणीयम्, | जुगोमयिषणीयम् ; |
| गोम्यम्, | जुगोमयिष्यम् ; |
| ईषद्गोमः-दुर्गोमः-सुगोमः ; | — |
| गोम्यमानः, | जुगोमयिष्यमाणः ; |
| गोमः, | जुगोमयिषः ; |
| गोमयितुम्, | जुगोमयिषितुम् ; |
| गोमना, | जुगोमयिषा ; |
| गोमनम्, | जुगोमयिषणम् ; |
| गोमयित्वा, | जुगोमयिषित्वा ; |
| सङ्गोम्य, | सञ्जुगोमयिष्य ; |
| गोमम् २, } | जुगोमयिषम् २ ; } |
| गोमयित्वा २, } | जुगोमयिषित्वा २ ; } |
| [3]गोमयम्. | |

---

1. 'मो नो धातोः' (8-2-64) इति पदान्ते मकारस्य नकारः।
2. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः।
3. 'गोमयम् प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वात् कस्मिंश्चित् काले गोमाद् गोमयसिद्धिः। अद्यत्वे तु 'गोश्च पुरीषे' (4-3-145) इति मयट्। एवं कुमारादावनुमन्तव्यम्।' इति क्षीरतरङ्गिणी। [धा. का. 3-55.

A. 'तं क्षोटितौजसमगोमितभूमिबद्धं [न्धं] शत्रौ कुमारयति मारयतोप्रसेनम्॥' }

(434) "गोष्ट संघाते" (I-भ्वादिः-257. सक. सेट्. आत्म.)

| | | | |
|---|---|---|---|
| गोष्टकः-ष्टिका, | गोष्टकः-ष्टिका, | जुगोष्टिषकः-षिका, | [1]जोगोष्टकः-ष्टिका ; |
| गोष्टिता-त्री, | गोष्टयिता-त्री, | जुगोष्टिषिता-त्री, | जोगोष्टिता-त्री ; |
| — | गोष्टयन्-न्ती, | गोष्टयिष्यन्-न्ती-ती ; | — |
| गोष्टमानः, | गोष्टयमानः, | जुगोष्टिषमाणः, | जोगोष्टयमानः ; |
| गोष्टिष्यमाणः, | गोष्टयिष्यमाणः, | जुगोष्टिषिष्यमाणः, | जोगोष्टिष्यमाणः ; |
| [2]गोट्-गोड्-गोष्टौ-गोष्टः ; | | — | — |
| गोष्टितम्-तः, | [A]गोष्टितः, | जुगोष्टिषितः, | जोगोष्टितः-तवान् ; |
| गोष्टः, [3]गोष्टनः, गोष्टः, | | जुगोष्टिषुः, | जोगोष्टः ; |
| गोष्टितव्यम्, | गोष्टयितव्यम्, | जुगोष्टिषितव्यम्, | जोगोष्टितव्यम् ; |
| गोष्टनीयम्, | गोष्टनीयम्, | जुगोष्टिषणीयम्, | जोगोष्टनीयम् ; |
| गोष्ट्यम्, | गोष्ट्यम्, | जुगोष्टिष्यम्, | जोगोष्ट्यम् ; |
| ईषद्गोष्टः-दुर्गोष्टः-सुगोष्टः ; | | — | — |
| गोष्टयमानः, | गोष्ट्यमानः, | जुगोष्टिष्यमाणः, | जोगोष्ट्यमानः ; |
| गोष्टः, | गोष्टः, | जुगोष्टिषः, | जोगोष्टः ; |
| गोष्टितुम्, | गोष्टयितुम् ; | जुगोष्टिषितुम्, | जोगोष्टितुम् ; |
| गोष्टा, | गोष्टना, | जुगोष्टिषा, | जोगोष्टा ; |
| गोष्टनम्, | गोष्टनम्, | जुगोष्टिषणम्, | जोगोष्टनम् ; |
| गोष्टित्वा, | गोष्टयित्वा, | जुगोष्टिषित्वा, | जोगोष्टित्वा ; |
| प्रगोष्ट्य, | प्रगोष्ट्य, | प्रजुगोष्टिष्य, | प्रजोगोष्ट्य ; |
| गोष्टम् २, गोष्टित्वा २, | गोष्टम् २, गोष्टयित्वा २, | जुगोष्टिषम् २, जुगोष्टिषित्वा २, | जोगोष्टम् २ ; जोगोष्टित्वा २. |

(435) "ग्रथ बन्धने" (X-चुरादिः-1826. सक. सेट्. उभ.) आधृषीयः।

चुरादौ 'ग्रन्थ बन्धने, ग्रन्थ सन्दर्भे' इति द्वौ धातू आधृषीयौ पठ्येते।

---

1. यङि 'सन्यङोः' (6-1-9) इति द्वित्वे, अभ्यासस्य गुणे, 'यस्य हलः' (6-4-49) इति यकारस्य लोपः। 'अतो लोपः' (6-4-48) इति अकारलोपः।
2. टकारस्य संयोगान्तलोपे, षकारस्य जश्त्वे चर्त्वे च रूपम्।
3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच्।
A. 'तत्केलिसंगोष्ठितगोष्ठमानमत् वने मयद्धितपोल्कुडद्रुमे ॥' धा. का. 1-34.

देवश्लोकात् पुरुषकारवाक्याच्च 'ग्रथ बन्धने' इति पाठ एव साधुरिति प्रतिभाति। अत एव धातुकाव्यव्याख्याने [3-50] नारायणभट्टेनापि 'ग्रथ बन्धने' इत्येवानुवादः क्रियते। तेन सिद्धान्तकौमुद्यादिषु 'ग्रन्थ बन्धने' इति दृष्टः पाठोऽयुक्त इति गम्यते। तथा हि देवः—

'ग्रथ्नातीति तु सन्दर्भे, ग्रन्थयेद् ग्रन्थतीति यौ।
कौटिल्ये ग्रन्थते ग्रन्थेः, ग्राथयेद् ग्रथति ग्रथेः ॥' (श्लो. 97) इति।

[1]ग्राथकः-थिका, जिग्राथयिषकः-षिका, [2]ग्राथकः-थिका, [3]जिग्रथिषकः-षिका, [4]जाग्रथकः-थिका;

ग्राथयिता-त्री, जिग्राथयिषिता-त्री, ग्रथिता-त्री, जिग्रथिषिता-त्री, जाग्रथिता-त्री;

ग्राथयन्-न्ती, जिग्राथयिषन्-न्ती, [5]ग्रथन्-[A]न्ती, जिग्रथिषन्-न्ती; —

ग्राथयिष्यन्-न्ती-ती, जिग्राथयिषिष्यन्-न्ती-ती, ग्रथिष्यन्-न्ती-ती, जिग्रथिषिष्यन्-न्ती-ती; —

ग्राथयमानः, जिग्राथयिषमाणः, — — जाग्रथ्यमानः;

ग्राथयिष्यमाणः, जिग्राथयिषिष्यमाणः, — — जाग्रथिष्यमाणः;

ग्रात्-ग्राथ्-ग्राथौ-ग्राथः; — — — —

ग्राथितम्-तः, जिग्राथयिषितः, ग्रथितः, जिग्रथिषितः, जाग्रथितः-तवान्;

ग्राथः, जिग्राथयिषुः, ग्रथः, जिग्रथिषुः, जाग्रथः;

ग्राथयितव्यम्, जिग्राथयिषितव्यम्, ग्रथितव्यम्, जिग्रथिषितव्यम्, जाग्रथितव्यम्,

ग्राथनीयम्, जिग्राथयिषणीयम्, ग्रथनीयम्, जिग्रथिषणीयम्; जाग्रथनीयम्;

---

1. 'अत उपधायाः' (7-2-116) इति णौ वृद्धिः 'णेरनिटि' (6-4-51) इति णिलोपः।
2. 'आधृषाद्वा' (ग. सू. चुरादौ) इति णिज्विकल्पः। णिजभावपक्षे ण्वुलि 'अत उपधायाः' (7-2-116) इति ण्वुल्निमित्तिका वृद्धिः।
3. णिजभावपक्षे शुद्धाद्धातोः सनि रूपम्। द्वित्वम्। अभ्यासकार्यम्।
4. णिजभावपक्षे यङि, द्वित्वे, 'यस्य हलः' (6-4-49) इति यकारलोपे, अकारलोपे च रूपम्।
5. णिजभावपक्षे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति परस्मैपदमेव।

A. 'कृष्णोऽविश्रथितारिभीरभिमयन् दोष्णा ग्रथन् भ्रामयन्
काथ्यं प्रोथितवानशीकिनमतिं भूमावचीकन् अमुम्।' धा. का. 3-50.

ग्राथ्यम्, जिग्राथयिष्यम्, ग्रथ्यम्, जिग्रथिष्यम्, जाग्रथ्यम्;
ईषद्ग्राथः-दुर्ग्राथः-सुग्राथः; — — —
ग्राथ्यमानः, जिग्राथयिष्यमाणः, ग्रथ्यमानः, जिग्रथिष्यमाणः, जाग्रथ्यमानः;
ग्राथः, जिग्राथयिषः, ग्राथः, जिग्रथिषः, जाग्रथः;
ग्राथयितुम्, जिग्राथयिषितुम्, ग्रथितुम्, जिग्रथिषितुम्, जाग्रथितुम्;
ग्राथना, जिग्राथयिषा, [1]ग्रथितिः, जिग्रथिषा, जाग्रथा;
ग्राथनम्, जिग्राथयिषणम्, ग्रथनम्, जिग्रथिषणम्, जाग्रथनम्;
ग्राथयित्वा, जिग्राथयिषित्वा, ग्रथित्वा, जिग्रथिषित्वा, जाग्रथित्वा;
सङ्ग्राथ्य, प्रजिग्राथयिष्य, प्रग्रथ्य, प्रजिग्रथिष्य, प्रजाग्रथ्य;
ग्राथम् २, ग्राथयित्वा २, } जिग्राथयिषम् २, जिग्राथयिषित्वा २, } ग्राथम् २, ग्रथित्वा २, } जिग्रथिषम् २, जिग्रथिषित्वा २, } जाग्रथम् २; जाग्रथित्वा २. }

(436) "ग्रथि कौटिल्ये" (I-भ्वादिः-36. सक. सेट्. आत्म.)

'कौटिल्यम्=शाठ्यं वक्रता वा' इति मा. धा. वृत्तिः।
'कौटिल्यम्=कुसृतिर्बन्धश्च' इति क्षीरस्वामी।
'ग्रथ्नातीति तु सन्दर्भे, ग्रन्थयेद् ग्रन्थतीति यौ।
कौटिल्ये ग्रन्थते ग्रन्थेः ग्राथयेद् ग्रथति ग्रथेः॥' (श्लो. 97) इति देवः।

[2]ग्रन्थकः-न्थिका, ग्रन्थकः-न्थिका, जिग्रन्थिषकः-षिका, जाग्रन्थकः-न्थिका;
ग्रन्थिता-त्री, ग्रन्थयिता-त्री, जिग्रन्थिषिता-त्री, जाग्रन्थिता-त्री;
— ग्रन्थयन्-न्ती, ग्रन्थयिष्यन्-न्ती-ती; —
ग्रन्थमानः, ग्रन्थयमानः, जिग्रन्थिषमाणः, जाग्रन्थ्यमानः;
ग्रन्थिष्यमाणः, ग्रन्थयिष्यमाणः, जिग्रन्थिषिष्यमाणः, जाग्रन्थिष्यमाणः;
[3]ग्रन्-ग्रन्थौ-ग्रन्थः; — — —
ग्रन्थितम्-तः, ग्रन्थितः, जिग्रन्थिषितः, जाग्रन्थितः-तवान्;

---

1. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति पर्युदासात् 'फणितिः' इत्यादिवत् इड् भवति।
2. 'इदितो नुम् धातोः' (7-1-58) इति नुम्। एवं सर्वत्र नुम्।
3. थकारस्य संयोगान्तलोपः।

ग्रन्थः, [1]ग्रन्थनः, ग्रन्थः, जिग्रन्थिषुः, जाग्रन्थः ;
ग्रन्थितव्यम्, ग्रन्थयितव्यम्, जिग्रन्थिषितव्यम्, जाग्रन्थितव्यम् ;
ग्रन्थनीयम्, ग्रन्थनीयम्, जिग्रन्थिषणीयम्, जाग्रन्थनीयम् ;
ग्रन्थ्यम्, ग्रन्थ्यम्, जिग्रन्थिष्यम्, जाग्रन्थ्यम् ;
ईषद्ग्रन्थः-दुर्ग्रन्थः-सुग्रन्थः ; — — —
ग्रन्थ्यमानः, ग्रन्थ्यमानः, जिग्रन्थिष्यमाणः, जाग्रन्थ्यमानः ;
ग्रन्थः, ग्रन्थः, जिग्रन्थिषः, जाग्रन्थः ;
ग्रन्थितुम्, ग्रन्थयितुम्, जिग्रन्थिषितुम्, जाग्रन्थितुम् ;
ग्रन्था, ग्रन्थना, जिग्रन्थिषा, जाग्रन्था ;
[A]ग्रन्थनम्, ग्रन्थनम्, जिग्रन्थिषणम्, जाग्रन्थनम् ;
ग्रन्थित्वा, [[2]ग्रथित्वा,] ग्रन्थयित्वा, जिग्रन्थिषित्वा, जाग्रन्थित्वा ;
सङ्ग्रन्थ्य, सङ्ग्रन्थ्य, सञ्जिग्रन्थिष्य, सञ्जाग्रन्थ्य ;
ग्रन्थम् २, ग्रन्थित्वा २, [ग्रथित्वा २,] } ग्रन्थम् २, ग्रन्थयित्वा २, } जिग्रन्थिषम् २, जिग्रन्थिषित्वा २, } जाग्रन्थम् २ ; जाग्रन्थित्वा २ ; }
[3]ग्रन्थिः.

### (437) "ग्रन्थ सन्दर्भे" (IX-क्र्यादिः-1513. सक. सेट्. पर.)

सन्दर्भः=बन्धनम् ।

'ग्रथ्नातीति तु सन्दर्भे ग्रन्थयेद् ग्रन्थतीति यौ ।
कौटिल्ये ग्रन्थते ग्रन्थेः ग्राथयेद् ग्रथति ग्रथेः ॥' (श्लो. 97) इति देवः ।

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति तच्छीलादिषु कर्तृषु युच् ।
2. अस्य धातोरिदित्त्वात् 'नोपधात्–' (1-2-23) इति कित्त्वविकल्पे 'अनिदिताम्–' (6-4-24) इति नलोपो न प्रवर्तते । अतः 'ग्रन्थित्वा' इत्येकमेव रूपम् । क्षीरस्वाम्याशयस्तु—'नोपधात् थफान्ताद्वा' (1-2-23) इति क्त्वायां कित्त्वविकल्पः । तेन कित्त्वपक्षे 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति नकारलोपः, इति।
3. औणादिके [द. उ. 1-68] इप्रत्यये रूपम् । ग्रन्थिः=बन्धः ।
A. 'स वेथते स्माखिलवेथितं विधिं प्रश्रन्थितग्रन्थनधी रकत्थनः ।
अतेन्मुरारिर्मम चिन्मयोऽन्तिके च्योतन् दिशः प्रश्च्युतितैः स्मितामृतैः ॥'
धा. का. 1-6.

ग्रन्थकः-न्थिका, ग्रन्थकः-थिका, जिग्रन्थिषकः-षिका, [1]जाग्रथकः-थिका ;
ग्रन्थिता-त्री, ग्रन्थयिता-त्री, जिग्रन्थिषिता-त्री, - जाग्रथिता-त्री ;
[2]ग्रथ्नन्-ती, ग्रन्थयन्-न्ती, जिग्रन्थिषन्-न्ती ; —
ग्रन्थिष्यन्-न्ती-ती, ग्रन्थयिष्यन्-न्ती-ती, जिग्रन्थिषिष्यन्-न्ती-ती ; —
— ग्रन्थयमानः, ग्रन्थयिष्यमाणः, — जाग्रथ्यमानः, जाग्रथिष्यमाणः ;
[3]सुग्रत्-सुग्रथ् सुग्रथौ-सुग्रथः ; — —
ग्रथितम्-तः, ग्रन्थितः, जिग्रन्थिषितः, जाग्रथितः-तवान् ;
ग्रन्थः, ग्रन्थः, जिग्रन्थिषुः, जाग्रन्थः ;
ग्रन्थितव्यम्, ग्रन्थयितव्यम्, जिग्रन्थिषितव्यम्, जाग्रथितव्यम् ;
ग्रन्थनीयम्, ग्रन्थनीयम्, जिग्रन्थिषणीयम्, जाग्रथनीयम् ;
ग्रन्थ्यम्, ग्रन्थ्यम्, जिग्रन्थिष्यम्, जाग्रथ्यम् ;
ईषद्ग्रन्थः-दुर्ग्रन्थः-सुग्रन्थः ; — —
ग्रथ्यमानः, ग्रन्थ्यमानः, जिग्रन्थिष्यमाणः, जाग्रथ्यमानः ;
ग्रन्थः, ग्रन्थः, जिग्रन्थिषः, जाग्रन्थः ;
ग्रन्थितुम्, ग्रन्थयितुम्, जिग्रन्थिषितुम्, जाग्रथितुम् ;
[4]ग्रन्था, ग्रन्थना, जिग्रन्थिषा, जाग्रथा ;
ग्रन्थनम्, ग्रन्थनम्, जिग्रन्थिषणम्, जाग्रथनम् ;
[5]ग्रन्थित्वा-[A]ग्रथित्वा, ग्रन्थयित्वा, जिग्रन्थिषित्वा, जाग्रथित्वा ;
सङ्ग्रथ्य, सङ्ग्रन्थ्य, सञ्जिग्रन्थिष्य, सञ्जाग्रथ्य ;

---

1. 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति यङ्निमित्तकः सर्वत्र नलोपः। 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः।
2. 'क्र्यादिभ्यः—' (3-1-81) इति श्ना विकरणप्रत्ययः। 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः। 'अनिदिताम्—' (6-4-24) इति नकारलोपः।
3. 'अनिदिताम्—' (6-4-24) इति नलोपे चर्त्वविकल्पः।
4. 'घट्टिवन्दिविदिभ्यश्च' (वा. 3-3-107) इत्यत्र चकारादस्मादपि धातोः शुद्धादेव युचि ग्रन्थना इति प्रक्रियाकौमुदी।
5. 'नोपधात् थफान्ताद्वा' (1-2-23) इति कित्वविकल्पः। कित्वे नलोपः।

A. 'पूतं शीतैर्नभस्वद्भिः ग्रन्थित्वेव स्थितं रुचः।
गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः॥' भ. का. 7-105.

ग्रन्थम् २, ग्रन्थित्वा २, ग्रथित्वा २, } ग्रन्थम् २, ग्रन्थयित्वा २, } जिग्रन्थिषम् २, जिग्रन्थिषित्वा २, } जाग्रथम् २ ; जाग्रथित्वा २. }

(438) "ग्रन्थ सन्दर्भे" (X-चुरादिः-1839. सक. सेट्. उभ.) आधृषीयः।

'ग्रथ्नातीति तु सन्दर्भे, ग्रन्थयेद् ग्रन्थतीति यौ ।

कौटिल्ये ग्रन्थते ग्रन्थेः, ग्राथयेद् ग्रथति ग्रथेः ॥' (श्लो. 97) इति देवः।

ग्रन्थकः-न्थिका, [1]जिग्रन्थयिषकः-षिका, [2]ग्रन्थकः-न्थिका, [3]जिग्रन्थिषकः-षिका, [4]जाग्रथकः-थिका ;

ग्रन्थयिता-त्री, जिग्रन्थयिषिता-त्री, ग्रन्थिता-त्री, जिग्रन्थिषिता-त्री, जाग्रथिता-त्री ;

[A]ग्रन्थयन्-न्ती, जिग्रन्थयिषन्-न्ती, [5]ग्रन्थन्-न्ती, जिग्रन्थिषन्-न्ती ; —

ग्रन्थयिष्यन्-न्ती-ती, जिग्रन्थयिषिष्यन्-न्ती-ती, ग्रन्थिष्यन्-न्ती-ती, जिग्रन्थिषिष्यन्-न्ती-ती ; —

ग्रन्थयमानः, जिग्रन्थयिषमाणः, — जाग्रथ्यमानः,

ग्रन्थयिष्यमाणः, जिग्रन्थयिषिष्यमाणः ; — जाग्रथिष्यमाणः,

[6]ग्रन्-ग्रन्थौ-ग्रन्थः ; — —

ग्रन्थितः-तम्, जिग्रन्थयिषितः, ग्रन्थितम्-तः, जिग्रन्थिषितः, जाग्रथितः-तवान् ;

ग्रन्थः, जिग्रन्थयिषुः, ग्रन्थः, जिग्रन्थिषुः, जाग्रन्थः ;

---

1. ण्यन्तात् सनि रूपम् । एवमुत्तरत्रापि ज्ञेयम् ।
2. 'आधृषाद्वा' (गणसूत्रम्—चुरादौ) इति णिचो वैकल्पिकत्वात् णिजभावपक्षे शुद्धाद्धातोः रूपाणि प्रदर्शितानि ।
3. णिजभावपक्षे शुद्धाद्धातोः सनि रूपम् । एवमुत्तरत्रापि ज्ञेयम् ।
4. णिजभावे शुद्धाद्धातोः यङि, अन्तरङ्गत्वेन, 'अनिदिताम्—' (6-4-24) इत्युपधान-कारस्य लोपे कृते यलोपाल्लोपयोश्च रूपम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
5. णिजभावपक्षे, 'शेषात् कर्तरि —' (1-3-78) इति परस्मैपदम् ।
6. क्विन्निमित्तके णिलोपे, संयोगान्तलोपे च रूपम् । न च णिलोपस्य स्थानिवद्भावः शङ्क्यः, 'पूर्वत्रासिद्धे न स्थानिवत्—' (वा. 1-1-58) इति निषेधात् ।

A. 'कूटाद्येषु हतेषु धावितमतिष्वन्येषु धावत्सु च
स्वैरं तत्र जनान् प्रयन् विगलितश्रन्थान् कचान् ग्रन्थयन् ।' धा. का. 3-51.

ग्रन्थयितव्यम्, जिग्रन्थयिषितव्यम्, ग्रन्थितव्यम्, जिग्रन्थिषितव्यम्, जाग्रथितव्यम्;

ग्रन्थनीयम्, जिग्रन्थयिषणीयम्, ग्रन्थनीयम्, जिग्रन्थिषणीयम्, जाग्रथनीयम्;

ग्रन्थ्यम्, जिग्रन्थयिष्यम्, ग्रन्थ्यम्, जिग्रन्थिष्यम्, जाग्रथ्यम्;

ईषद्ग्रन्थः-दुर्ग्रन्थः-सुग्रन्थः; — —

ग्रन्थ्यमानः, जिग्रन्थयिष्यमाणः, ग्रथ्यमानः, जिग्रन्थिष्यमाणः, जाग्रथ्यमानः;

ग्रन्थः, जिग्रन्थयिषः, ग्रन्थः, जिग्रन्थिषः, जाग्रथः;

ग्रन्थयितुम्, जिग्रन्थयिषितुम्, ग्रन्थितुम्, जिग्रन्थिषितुम्, जाग्रथितुम्;

ग्रन्थना, जिग्रन्थयिषा, ग्रन्था, जिग्रन्थिषा, जाग्रथा;

ग्रन्थनम्, जिग्रन्थयिषणम्, ग्रन्थनम्, जिग्रन्थिषणम्, जाग्रथनम्;

ग्रन्थयित्वा, जिग्रन्थयिषित्वा, [1]ग्रन्थित्वा-ग्रथित्वा, जिग्रन्थिषित्वा, जाग्रथित्वा;

सङ्ग्रन्थ्य, सञ्जिग्रन्थयिष्य, [2]सङ्ग्रथ्य, सञ्जिग्रन्थिष्य, सञ्जाग्रथ्य,

ग्रन्थम् २, ग्रन्थयित्वा २, } जिग्रन्थयिषम् २, जिग्रन्थयिषित्वा २, } ग्रन्थम् २, ग्रन्थित्वा २-ग्रथित्वा २, }

जिग्रन्थिषम् २, जिग्रन्थिषित्वा २, } जाग्रथम् २; जाग्रथित्वा २. }

## (439) "ग्रस ग्रहणे" (X-चुरादिः-1750. सक. सेट्. उभ.) आस्वदीयः।

ग्रासकः-सिका, जिग्रासयिषकः-षिका;

ग्रासयिता-त्री, जिग्रासयिषिता-त्री;

[A]ग्रासयन्-न्ती, जिग्रासयिषन्-न्ती;

ग्रासयिष्यन्-न्ती-ती, जिग्रासयिषिष्यन्-न्ती-ती;

ग्रासयमानः, जिग्रासयिषमाणः;

ग्रासयिष्यमाणः, जिग्रासयिषिष्यमाणः;

---

1. 'नोपधात् थफान्ताद्वा' (1-2-23) इति क्त्वाप्रत्ययस्य कित्त्वविकल्पः। तेन रूपद्वयम्।
2. ल्यपि, 'अनिदिताम्—' (6-4-24) इति नकारलोपः।

A. 'दोर्भ्यां ग्रासयतां प्रपोषितरुषां निर्दलिनोद्योगिनां
तेषां विक्रमणैरपाटि पटिमा शिक्षाप्यपोटि स्फुटम्।' धा. का. 3-43.

[1]विग्राः-विग्रासौ-विग्रासः ; —

ग्रासितम्-तः, जिग्रासयिषितः-तवान् ;

ग्रासः, जिग्रासयिषुः,

ग्रासयितव्यम्, जिग्रासयिषितव्यम् ;

ग्रासनीयम्, जिग्रासयिषणीयम् ;

ग्रास्यम्, जिग्रासयिष्यम् ;

ईषद्ग्रासः-दुर्ग्रासः-सुग्रासः ;

ग्रास्यमानः, जिग्रासयिष्यमाणः ;

ग्रासः, जिग्रासयिषः ;

ग्रासयितुम्, जिग्रासयिषितुम् ;

ग्रासना, जिग्रासयिषा ;

ग्रासनम्, जिग्रासयिषणम् ;

ग्रासयित्वा, जिग्रासयिषित्वा ;

अनुग्रास्य, अनुजिग्रासयिष्य ;

ग्रासम् २, ग्रासयित्वा २, } जिग्रासयिषम् २ ; जिग्रासयिषित्वा २. }

## (440) " ग्रसु अदने " (I-भ्वादिः-630. सक. सेट्. आत्म.)

ग्रासकः-सिका, ग्रासकः-सिका, जिग्रसिषकः-षिका, जाग्रसकः-सिका ;

ग्रसिता-त्री, ग्रासयिता-त्री, जिग्रसिषिता-त्री, जाग्रसिता-त्री ;

— [2]ग्रासयन्-न्ती, ग्रासयिष्यन्-न्ती-ती ; —

ग्रसमानः, —, जिग्रसिषमाणः, जाग्रस्यमानः ;

ग्रसिष्यमाणः, —, जिग्रसिषिष्यमाणः, जाग्रसिष्यमाणः ;

[3]पिण्डग्रः-पिण्डग्रसौ-पिण्डग्रसः ; — —

[4]ग्रस्तः-तम्, ग्रासितः, जिग्रसिषितः, जाग्रसितः-तवान् ;

---

1. णिज्निमित्तिका उपधावृद्धिः । रुत्वविसर्गौ ।
2. 'निगरणचलनार्थेभ्यश्च' (1-3-87) इति ण्यन्ताच्छतैव ।
3. 'क्विप् च' (3-2-76) इति कर्मण्युपपदे क्विप् । 'अत्वसन्तस्य—' (6-4-14) इत्यत्र 'अधातोः' इत्युक्तत्वात् असन्तलक्षणः दीर्घो न ।
4. क्त्वायामिड्विकल्पनात् 'यस्य विभाषा' (7-2-15) इति निष्ठायामिट् न ।

| | | | |
|---|---|---|---|
| ग्रसः, [1]ग्रसनः, [2]ग्रसिष्णुः,[A] | ग्रासः, | जिग्रसिषुः, | जाग्रसः ; |
| ग्रसितव्यम्, | ग्रासयितव्यम्, | जिग्रसिषितव्यम्, | जाग्रसितव्यम् ; |
| ग्रासनीयम्, | ग्रासनीयम्, | जिग्रसिषणीयम्, | जाग्रसनीयम् ; |
| ग्रास्यम्, | ग्रास्यम्, | जिग्रसिष्यम्, | जाग्रस्यम् ; |
| ईषद्ग्रसः-दुर्ग्रसः-सुग्रसः ; | | — | — |
| ग्रस्यमानः, | ग्रास्यमानः, | जिग्रसिष्यमाणः, | जाग्रस्यमानः ; |
| ग्रासः, | ग्रासः, | जिग्रसिषः, | जाग्रसः ; |
| ग्रसितुम्, | ग्रासयितुम्, | जिग्रसिषितुम्, | जाग्रसितुम् ; |
| ग्रस्तिः, | ग्रासना, | जिग्रसिषा, | जाग्रसा ; |
| ग्रसनम्, | ग्रासनम्, | जिग्रसिषणम्, | जाग्रसनम् ; |
| [3]ग्रसित्वा-ग्रस्त्वा, | ग्रासयित्वा, | जिग्रसिषित्वा, | जाग्रसित्वा ; |
| संग्रस्य, | संग्रास्य, | संजिग्रसिष्य, | संजाग्रस्य ; |
| गासम् २, ग्रसित्वा २, ग्रस्त्वा २, | ग्रासम् २, ग्रासयित्वा २, | जिग्रसिषम् २, जिग्रसिषित्वा २, | जाग्रसम् २ ; जाग्रसित्वा २. |

## (441)"ग्रह उपादाने" (IX-क्र्यादिः-1533. सक. सेट्. उभ.) ग्रह्यादिः ।

उपादानम्=स्वीकारः ।

'ण्यन्तस्य ग्रहणे गृहेर्गृह्यते, तत्रानदन्ताद् गृहेः
भूवादेः शपि गर्हते, श्नि तु पदे गृह्णात्यगृह्णीत च ।

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति तच्छीलादिषु युच् ।
2. 'भुवश्च' (3-2-138) इत्यत्रानुक्तसमुच्चयार्थकचकारात् ताच्छीलिक इष्णुच्प्रत्ययः ।
3. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः ।

A. 'आशंसितासिमुदितो भुवनग्रसिष्णुं विष्णुं तमेनमसतां ग्लसमानमीहाम् ।'
धा. का. 1-80,

गर्हेर्वा णिचि निन्दनार्थविषये गर्हेत् तथा, गर्हयेद्
भूवादेः शपि कुत्सनार्थविषये गर्हेर्भवेद् गर्हते ॥'
(श्लो. 194) इति देवः ।

ग्राहकः-हिका, ग्राहकः-हिका, [1]जिघृक्षकः-क्षिका, [2]जरीगृहकः-हिका ;
[3]ग्रहीता-त्री, ग्राहयिता-त्री, जिघृक्षिता-त्री, [4]जरीगृहिता-त्री ;
[5]गृह्णन्-ती, विगृह्णन्, ग्राहयन्-न्ती, जिघृक्षन्-न्ती ; —
ग्रहीष्यन्-न्ती-ती, ग्राहयिष्यन्-न्ती-ती, जिघृक्षिष्यन्-न्ती-ती ; —
गृह्णानः, ग्राहयमाणः, जिघृक्षमाणः, जरीगृह्यमाणः ;
ग्रहीष्यमाणः, ग्राहयिष्यमाणः, जिघृक्षिष्यमाणः, जरीगृहिष्यमाणः ;
[6]विघृट्-विघृड्-विगृहौ-विगृहः ; — —
[7]गृहीतम्-तः, [8]पाणिगृहीती-पाणिगृहीता, ग्राहितः, जिघृक्षितः,
जरीगृहितः-तवान् ;

---

1. 'सन्यङोः' (6-1-9) इति द्वित्वे, अभ्यासकार्ये, 'सनि ग्रहगुहोश्च' (7-2-12) इतीण्णिषेधः । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' (1-2-8) इति कित्त्वे 'ग्रहिज्या—' (6-1-16) इति सम्प्रसारणे, उत्तरखण्डे हकारस्य ढत्वे, भष्भावे च कृते, 'षढोः कः सि' (8-2-41) इति कत्वे षत्वे च रूपम् । एवं सन्नन्ते सर्वत्र प्रक्रिया बोध्या ।

2. यङ्निमित्तके सम्प्रसारणे द्वित्वे, अभ्यासस्य 'रीगृत्वत इति वक्तव्यम्' (वा. 7-4-90) इति रीगागमे यलोपाल्लोपयोः रूपम् । एवं यङन्ते सर्वत्रापि ज्ञेयम् ।

3. 'ग्रहोऽलिटि दीर्घः' (7-2-37) इतीटो दीर्घः । एवं इडागमे सर्वत्र दीर्घो बोध्यः ।

4. 'ग्रहोऽलिटि दीर्घः' (7-2-37) इति दीर्घः नात्र प्रवर्तते । अल्लोपस्य स्थानिवद्भावात् । एवं सर्वत्र यङन्तस्थले बोध्यम् ।

5. 'क्र्यादिभ्यः—' (3-1-81) इति श्नाप्रत्यये, 'सार्वधातुकमपित्' (1-2-4) इत्यनेन श्नाप्रत्ययस्य ङिद्भावात् 'ग्रहिज्यावयि—' (6-1-16) इत्यादिना सम्प्रसारणे, 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपे, 'ऋवर्णान्नस्य—' (वा. 8-4-1) इति णत्वे च रूपम् । एवं शानजन्तेऽपि ज्ञेयम् ।

6. क्विपि, 'ग्रहिज्या—' (6-1-16) इत्यादिना सम्प्रसारणे पूर्वरूपे च, हस्य ढत्वे भष्भावे, चर्त्वविकल्पे च रूपम् ।

7. सम्प्रसारणे पूर्वरूपे, इटो दीर्घे च रूपम् ।

8. 'पाणिगृहीती भार्यायाम्' (वा. 4-1-52) इति ङीषन्तो निपात्यते । भार्याया अन्यत्र पाणिगृहीता ।

[1]ग्राही, [2]गुणग्राही, [3]ग्राहः-[A]ग्रहः, [4]गृहम्-गृहाः, [5]शक्तिग्रहः, लाङ्गलग्रहः, अङ्कुशग्रहः, यष्टिग्रहः, तोमरग्रहः, घटग्रहः, घटी ग्रहः धनुर्ग्रहः, [6]सूत्रग्रहः, [7]फलेग्रहिः[B], ग्राहः, [C]' जिघृक्षुः, [D]विजिग्राहयिषुः, जरीगृहः; ग्रहीतव्यम्, ग्राहयितव्यम्, जिघृक्षितव्यम्, जरीगृहितव्यम्; ग्रहणीयम्, ग्राहणीयम्, जिघृक्षणीयम्, जरीगृहणीयम्; ग्राह्यम्, [8]प्रतिगृह्यम्-अपिगृह्यम्, [9]प्रगृह्यम्[E] [पदम्], गृह्यकाः

---

1. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (3-1-134) इत्यनेन ग्रह्यादित्वात् णिनिः।
2. 'सुप्यजातौ —' (3-2-78) इति ताच्छील्ये णिनिः।
3. 'विभाषा ग्रहः' (3-1-143) इति कर्तरि णो वा। पक्षे पचाद्यच् (3-1-134)। अत्र व्यवस्थितविभाषाश्रयणात् जलचरे जन्तौ ग्राहः इत्येव। ज्योतिषि वाच्ये ग्रहः इति बोध्यम्। 'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥' (भाष्यम्–7-4-41) इति व्यवस्थितविभाषा।
4. 'गेहे कः' (3-1-144) इति कर्तरि कः। कित्त्वात् सम्प्रसारणम्। गृहाः= गृहिणी। तात्स्थ्यात् ताच्छब्द्यम्।' गृहाः पुंसि च भूम्न्येव—' इत्यमरः।
5. 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्' (वा. 3-2-9) इति कर्मण्युपपदेऽच् प्रत्ययः। कर्मण्यणोऽपवादः।
6. 'सूत्रे च धार्येऽर्थे' (वा. 3-2-9) इति अच्। कर्मण्यणोऽपवादः।
7. 'फलेग्रहिरात्मम्भरिश्च' (3-2-26) इति इन्प्रत्ययान्तो निपात्यते। उपपदस्य एदन्तत्वं निपातनाद्भवति। फलानि गृह्णातीति फलेग्रहिः 'रजोग्रहिः मलग्राहिरिति केचित्।' इति प्रक्रियाकौमुदी।
8. 'प्रत्यपिभ्यां ग्रहेः' (3-1-118) इति क्यप्। 'छन्दसीति वक्तव्यम्' (वा. 3-1-118) इति वचनात् छन्दसि विषये प्रतिगृह्यम् - अपिगृह्यम् इति रूपे ज्ञेये। 'भाषायां वा' इति केचित्—इति प्रक्रियाकौमुदी।
9. 'पदास्वैरिबाह्यापक्ष्येषु च' (3-1-119) इति क्यप्। 'बाह्या' इति स्त्रीलिङ्ग-निर्देशात् लिङ्गान्तरे मा भूदिति, तेन 'ग्रामग्राह्यश्चण्डालः' इत्यत्र ण्यदेव भवतीति मा. धा. वृत्तिः।

A. 'समाविष्टं ग्रहेणेव ग्राहेणेवोत्तमार्णवे।
दृष्ट्वा गृहान् स्मरस्येव वनान्तान्मम मानसम्॥' भ. का. 6-83.

B. 'आत्मम्भरिस्त्वं पिशितैर्नराणां फलेग्रहीन् हंसि वनस्पतीनाम्।
शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मात्॥' भ. का. 2-33.

C. 'विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः।
उक्तं पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः॥' भ. का. 7-98.

D. 'खरदूषणयोर्भ्रात्रोः पर्यदेविष्ट सा पुरः।
विजिग्राहयिषू रामं दण्डकारण्यवासिनोः॥' भ. का. 4-34.

E. 'प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियाम्।
अगृह्यां वीतकामत्वात् देवगृह्यामनिन्दिताम्॥' भ. का. 6-61.

(परतन्त्राः शुकाः), अगृह्या, ग्रामगृह्या नगरगृह्या, [ग्रामात् नगराद्वा बाह्या सेना], ग्रामग्राह्यः, वासुदेवगृह्या, अर्जुनगृह्या-देवगृह्या, [तत्पक्षाश्रिता], ग्राह्यम्, जिघृक्ष्यम्, जरीगृह्यम्;

ईषद्-ग्रहः-दुर्ग्रहः-सुग्रहः; — —

गृह्यमाणः, ग्राह्यमाणः, जिघृक्ष्यमाणः, जरीगृह्यमाणः;

[1]ग्रहः, [2]उद्ग्राहः [मल्लस्य], [3]सङ्ग्राहः [द्रव्यस्य], सङ्ग्रहः, [4]अवग्राहः-निग्राहः, अवग्रहः [पदस्य], निग्रहः [चोरस्य], [5]प्रग्राहः, [6]परिग्राहः, परिग्रहः [धान्यस्य], [7]अवग्राहः-अवग्रहः,[A] [8]तुलाप्रग्राहः-[B] तुलाप्रग्रहः, [अश्वस्य] [9]प्रग्राहः-प्रग्रहो वा, [अक्षः] [10]ग्लहः,[C] ग्राहः, जिघृक्षः, जरीगृहः;

---

1. 'ग्रहवृदृनिश्चिगमश्च' (3-3-58) इत्यप्। घञपवादः।
2. 'उदि ग्रहः' (3-3-35) इति घञ्। अबपवादः।
3. 'समि मुष्टौ' (3-3-36) इति घञ्। अबपवादः। अन्यत्र 'द्रव्यस्य सङ्ग्रहः' इत्येव।
4. 'आक्रोशेऽवन्योर्ग्रहः' (3-3-45) इति घञ्। आक्रोशादन्यत्र, 'अवग्रहः पदस्य, निग्रहः चोरस्य' इत्यत्र अबेव।
5. 'प्रे लिप्सायाम्' (3-3-46) इति घञ्। 'पात्रप्रग्राहेण चरति भिक्षुः' इत्यत्र लिप्सा गम्यते।
6. 'परौ यज्ञे' (3-3-47) इति घञ्। 'उत्तरं परिग्राहं परिगृह्णाति' इति श्रुतिः। यज्ञविषयादन्यत्र परिग्रहः इत्येव। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः।' इति अमरः।
7. 'अवे ग्रहो वर्षप्रतिबन्धे' (3-3-51) इति वा घञ्। पक्षेऽप्।
8. 'प्रे वणिजाम्' (3-3-52) इति वा घञ्। तुलाप्रग्राहेण चरति वणिक्।
9. 'रश्मौ च' (3-3-53) इति वा घञ्। 'प्रग्राहः=खलीसूत्रम्।' इति प्रक्रियाकौमुदीव्याख्यायाम्।
10. 'अक्षेषु ग्लहः' (3-3-70) इत्यनेन ग्रहेः अप्प्रत्ययसन्नियोगेन रेफस्य लत्वं निपात्यते। यत् पणरूपेण ग्राह्यं तत् ग्लहः इति बोध्यम्।

A. 'रावणावग्रहक्लान्तम् इति वागमृतेन सः।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे॥' रघुवंशे 10-48.

B. 'वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये।
देशापेक्षास्तथा यूयं यातादायाङ्गुलीयकम्॥' भ. का. 7-49.

C. 'मुग्धत्वादविदितकैतवप्रयोगा गच्छन्त्यः सपदि पराजयं तरुण्यः।
ताः कान्तैः सह करपुष्करेरिताम्बु व्यात्युक्षीमभिसरणग्लहामदीव्यन्॥'
शिशुपालवधे 8-32.

| | | | |
|---|---|---|---|
| ग्रहीतुम्, | ग्राहयितुम्, | जिघृक्षितुम्, | जरीगृहितुम्; |
| [1]निगृहीतिः, | ग्राहणा, | जिघृक्षा, | जरीगृहा; |
| ग्रहणम्, | ग्राहणम्, | जिघृक्षणम्, | जरीगृहणम्; |
| [2]गृहीत्वा, | ग्राहयित्वा, | जिघृक्षित्वा, | जरीगृहित्वा; |
| विगृह्य, | विग्राह्य, | विजिघृक्ष्य, | विजरीगृह्य; |

[3]जीवग्राहं,[A] [गृह्णाति], [4]नामग्राहं,[B] [आह्वयति];
[5]हस्तग्राहं, [गृह्णाति], [6]यष्टिग्राहं [युध्यन्ति], [7]केशग्राहं युध्यन्ति;

| | | | |
|---|---|---|---|
| ग्राहम् २, गृहीत्वा २, | ग्राहम् २, ग्राहयित्वा २, | जिघृक्षम् २, जिघृक्षित्वा २, | जरीगृहम् २; जरीगृहित्वा २. |

---

1. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति वचनात् इण्णिषेधो न। दीर्घः, सम्प्रसारणम्।
2. 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' (1-2-8) इति कित्त्वम्। 'न क्त्वा सेट्' (1-2-18) इत्यस्यापवादः। सम्प्रसारणादिकं ज्ञेयम्।
3. 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' (3-4-36) इति णमुल्। 'कषादिषु यथाविधि—' (3-4-46) इत्यनुप्रयोगः। जीवन्तं गृह्णातीत्यर्थः।
4. 'नाम्न्यादिशिग्रहोः' (3-4-58) इति द्वितीयान्ते उपपदे णमुल्।
5. 'हस्ते वर्तिग्रहोः' (3-4-39) इति करणे उपपदे णमुल्। हस्तेन गृह्णातीत्यर्थः। हस्तशब्दः अर्थग्रहणार्थः। तेन करग्राहं गृह्णातीत्यपि उदाहार्यम्। कषादित्वात् (3-4-46) पूर्ववत् यथाविध्यनुप्रयोगः।
6. 'द्वितीयायां च' (3-4-53) इति परीप्सायां गम्यमानायां णमुल्। एवं नाम त्वरन्ते, यदायुधग्रहणमपि नाद्रियन्ते, यष्ट्यादिकं यत्किञ्चिदासन्नं तद्गृहीत्वा युध्यन्तीत्यर्थः।
7. 'समासत्तौ' (3-4-50) इति सप्तम्यां तृतीयायां चोपपदे समासत्तौ गम्यमानायां णमुल्।

A. 'भिन्नानन्नैर्मोहभाजोऽभिजातान् हन्तुं लोलं वारयन्तः स्ववर्गम्।
जीवग्राहं ग्राहयामासुरन्ये योग्येनार्थः कस्य न स्याज्जनेन॥'
शिशुपालवधे 18-66.

B. 'सम्प्राप्य राक्षससभं चक्रन्द क्रोधविह्वला।
नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके॥' भ. का. 5-5.

**(442) "ग्राम आमन्त्रणे"** (X-चुरादिः-1893. सक. सेट्. उभ.) अदन्तः,

| | |
|---|---|
| ग्रामकः-मिका, | जिग्रामयिषकः-षिका ; |
| ग्रामयिता-त्री, | जिग्रामयिषिता-त्री ; |
| [A]ग्रामयन्-न्ती, | जिग्रामयिषन्-न्ती ; |
| ग्रामयिष्यन्-न्ती-ती, | जिग्रामयिषिष्यन्-न्ती-ती ; |
| ग्रामयमाणः, | जिग्रामयिषमाणः ; |
| ग्रामयिष्यमाणः, | जिग्रामयिषिष्यमाणः ; |
| [1]विग्रान्-विग्रामौ-विग्रामः ; | — |
| ग्रामितम्-तः, | जिग्रामयिषितः-तवान् ; |
| ग्रामः, | जिग्रामयिषुः ; |
| ग्रामयितव्यम्, | जिग्रामयिषितव्यम् ; |
| ग्रामणीयम्, | जिग्रामयिषणीयम् ; |
| ग्राम्यम्, | जिग्रामयिष्यम् ; |
| ईषद्ग्रामः-दुर्ग्रामः-सुग्रामः ; | — |
| ग्राम्यमाणः, | जिग्रामयिष्यमाणः ; |
| ग्रामः, | जिग्रामयिषः ; |
| ग्रामयितुम्, | जिग्रामयिषितुम् ; |
| ग्रामणा, | जिग्रामयिषा ; |
| ग्रामणम्, | जिग्रामयिषणम् ; |
| ग्रामयित्वा, | जिग्रामयिषित्वा ; |
| सङ्ग्राम्य, | सञ्जिग्रामयिष्य ; |
| ग्रामम् २, } | जिग्रामयिषम् २ ; } |
| ग्रामयित्वा २, } | जिग्रामयिषित्वा २. } |

---

1. क्विपि, णिलोपाल्लोपयोः स्थानिवद्भावेन मान्तस्य पदस्वाभावात् नत्वं न भवतीति न शङ्क्यम् । 'पूर्वत्रासिद्धे न स्थानिवत्' (वा. 1-1-58.) इति तन्निषेधात् । ततश्च 'मो नो धातोः' (8-2-64) इति नत्वम् ।

A. 'इत्यूचे स हि केतयन् परिजनान् सेनापतीन् ग्रामयन्
स्वामास्थान् कुणयन् भटांश्च गुणयन् नृणां मुदं स्तेनयन् ॥' धा. का. 3 57.

## (443) " ग्रुचु स्तेयकरणे " (I-भ्वादिः-197. सक. सेट्. पर.)

ग्रोचकः-चिका, ग्रोचकः-चिका, [1]जुग्रोचिषकः-जुग्रुचिषकः-षिका, [2]जोग्रुचकः-चिका ;

ग्रोचिता-त्री, ग्रोचयिता-त्री, जुग्रोचिषिता-जुग्रुचिषिता-त्री, जोग्रुचिता-त्री ;

ग्रोचन्-न्ती, ग्रोचयन्-न्ती, जुग्रोचिषन्-जुग्रुचिषन्-न्ती ; —

ग्रोचिष्यन्-न्ती-ती, ग्रोचयिष्यन्-न्ती-ती, जुग्रोचिषिष्यन्-जुग्रुचिषिष्यन्-न्ती-ती ; —

— ग्रोचयमानः, ग्रोचयिष्यमाणः, जोग्रुच्यमानः, जोग्रुचिष्यमाणः ;

[3]ग्रुक्-ग्रुग्-ग्रुचौ-ग्रुचः ; — — —

[4]ग्रुक्तः-क्तम्, ग्रोचितः, जुग्रोचिषितः-जुग्रुचिषितः, जोग्रुचितः-तवान् ;

[5]ग्रुचः, ग्रोचः, जुग्रोचिषुः-जुग्रुचिषुः, जोग्रुचः ;

ग्रोचितव्यम्, ग्रोचयितव्यम्, जुग्रोचिषितव्यम्-जुग्रुचिषितव्यम्, जोग्रुचितव्यम् ;

ग्रोचनीयम्, ग्रोचनीयम्, जुग्रोचिषणीयम्-जुग्रुचिषणीयम्, जोग्रुचनीयम् ;

[6]ग्रोक्यम्, ग्रोच्यम्, जुग्रोचिष्यम्-जुग्रुचिष्यम्, जोग्रुच्यम् ;

ईषद्ग्रोचः-दुर्ग्रोचः-सुग्रोचः ; — —

ग्रुच्यमानः, ग्रोच्यमानः, जुग्रोचिष्यमाणः-जुग्रुचिष्यमाणः, जोग्रुच्यमानः ;

ग्रोकः, ग्रोचः, जुग्रोचिषः-जुग्रुचिषः, जोग्रुचः ;

ग्रोचितुम्, ग्रोचयितुम्, जुग्रोचिषितुम्-जुग्रुचिषितुम्, जोग्रुचितुम् ;

---

1. 'रलो व्युपधात्—' (1-2-26) इति सेटः सनः कित्त्वविकल्पः। कित्त्वपक्षे गुणो न। कित्त्वाभावपक्षे गुणः। एवं सन्नन्ते सर्वत्र रूपद्वयं बोध्यम्।
2. 'सन्यङोः' (6-1-9) इति द्वित्वे, 'यस्य हलः' (6-4-49) इति यलोपे, अकारस्य लोपे च, 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणः। एवं यङन्ते सर्वत्र।
3. अवसाने चर्त्वविकल्पः।
4. उदित्त्वेन क्त्वायामिड्विकल्पनात्, 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधः। चर्त्वम्।
5. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः।
6. अस्माद्धातोः ण्यति प्रत्यये, 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वं 'न क्वादेः' (7-3-59) इति यद्यपि प्रतिषिद्धम् ; अथापि, 'निष्ठायामनिट इति वक्तव्यम्' (वा. 7-3-52) इति वार्तिकात्, अस्य धातोः निष्ठायामनिट्त्वात् कुत्वं भवत्येव ; यथोत्तरं मुनीनां प्रामाण्यात्। एवं घञ्यपि ज्ञेयम्।

ग्रुक्तिः, ग्रोचना, जुग्रोचिषा-जुग्रुचिषा, जोग्रुचा ;
[1]प्रणिग्रोचनम्-प्रनिग्रोचनम्, ग्रोचनम्, जुग्रोचिषणम्-जुग्रुचिषणम्-जोग्रुचनम् ;
[2]ग्रोचित्वा-ग्रुचित्वा-ग्रुक्त्वा, ग्रोचयित्वा, जुग्रोचिषित्वा-जुग्रुचिषित्वा, जोग्रुचित्वा ;
संग्रुच्य, संग्रोच्य, सञ्जुग्रोचिष्य-सञ्जुग्रुचिष्य, सञ्जोग्रुच्य ;
ग्रोचम् २, ग्रोचित्वा २, ग्रुचित्वा २, ग्रुक्त्वा २, } ग्रोचम् २, ग्रोचयित्वा २, } जुग्रोचिषम् २-जुग्रुचिषम् २, जुग्रोचिषित्वा २-जुग्रुचिषित्वा २, } जोग्रुचम् २ ; जोग्रुचित्वा २. }

## (444) "ग्लसु अदने" (I-भ्वादिः-631. सक. सेट्. आत्म.)

ग्लासकः-सिका, ग्लासकः-सिका, जिग्लसिषकः-षिका, जाग्लसकः-सिका ;

इत्यादीनि सर्वाण्यपि रूपाणि 'ग्रसु अदने' इति भौवादिक-धातुवत् (440) बोध्यानि । [A]ग्लसमानः-शानचि ।

## (445) "ग्लह गर्हणे" (I-भ्वादिः-651. सक. सेट्. आत्म.) [अ]

ग्लाहकः-हिका, ग्लाहकः-हिका, जिग्लहिषकः-षिका, जाग्लहकः-हिका ;
ग्लहिता-त्री, ग्लाहयिता-त्री, जिग्लहिषिता-त्री, जाग्लहिता-त्री ;
— ग्लाहयन्-न्ती, ग्लाहयिष्यन्-न्ती-ती ; —
ग्लहमानः, ग्लाहयमानः, जिग्लहिषमाणः, जाग्लह्यमानः ;
ग्लहिष्यमाणः, ग्लाहयिष्यमाणः, जिग्लहिषिष्यमाणः, जाग्लहिष्यमाणः ;
[3]विग्लट्-विग्लड्-विग्लहौ-विग्लहः ; — —

---

1. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः ।
2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इट्पक्षे 'रलो व्युपधात्' (1-2-26) इति कित्त्वविकल्पः । तेन रूपत्रयम् ।
3. पदान्ते हकारस्य, 'हो ढः' (8-2-31) इति ढत्वे, 'एकाचो बशो भष्—' (8-2-37) इति भष्भावे चर्त्वविकल्पः ।

A. 'आशंसितापिमुदितो भुवनग्रसिष्णुं विष्णुं तमेनमसतां ग्लसमानमीडाम् ।' धा. का. 1-80.

[अ] 'ग्लहू ग्रहणे' इति क्षीरस्वामी पपाठ । धातुकाव्यव्याख्यानेऽप्येवम् । तेषां मते ऊदित्त्वप्रयुक्तः इड्विकल्पः वलाद्यार्धधातुकेषु ऊह्यः, यथा ग्लाढा, ग्लहिता, इत्यादिकम् ।

ग्लहितम्-तः, ग्लाहितः, जिग्लहिषितः, जाग्लहितः-तवान् ;
ग्लहः, [1]ग्लहनः, ग्लाहः, जिग्लहिषुः, जाग्लहः ;
ग्लहितव्यम्, ग्लाहयितव्यम्, जिग्लहिषितव्यम्, जाग्लहितव्यम् ;
ग्लहनीयम्, ग्लाहनीयम्, जिग्लहिषणीयम्, जाग्लहनीयम् ;
ग्लाह्यम्, ग्लाह्यम्, जिग्लहिष्यम्, जाग्लह्यम् ;
ईषद्ग्लहः-दुर्ग्लहः-सुग्लहः ; — —
ग्लह्यमानः, ग्लाह्यमानः, जिग्लहिष्यमाणः, जाग्लह्यमानः ;
ग्लाहः, ग्लाहः, जिग्लहिषः, जाग्लहः ;
ग्लहितुम्, ग्लाहयितुम्, जिग्लहिषितुम्, जाग्लहितुम् ;
[2]ग्लाढिः, ग्लाहना, जिग्लहिषा, जाग्लहा ;
[A]ग्लहनम्, ग्लाहनम्, जिग्लहिषणम्, जाग्लहनम् ;
ग्लहित्वा, ग्लाहयित्वा, जिग्लहिषित्वा, जाग्लहित्वा ;
संग्लह्य, संग्लाह्य, सञ्जिग्लहिष्य, सञ्जाग्लह्य ;
ग्लाहम् २, } ग्लाहम् २, } जिग्लहिषम् २, } जाग्लहम् २ ; }
ग्लहित्वा २, } ग्लाहयित्वा २, } जिग्लहिषित्वा २, } जाग्लहित्वा २. }

## (446) “ग्लुचु स्तेयकरणे” (I-भ्वादिः-198. अक. सेट्. पर.)

ग्लोचकः-चिका, ग्लोचकः-चिका, जुग्लोचिषकः-जुग्लुचिषकः-षिका, जोग्लुचकः-चिका ; इत्यादीनि सर्वाण्यपि रूपाणि ‘ग्रुचु स्तेयकरणे’ (444) इति धातुवत् बोध्यानि ।

## (447) “ग्लुन्चु गतौ” (I-भ्वादिः-201. अक. सेट्. पर.)

ग्लुञ्चकः-ञ्चिका, ग्लुञ्चकः-ञ्चिका, जुग्लुञ्चिषकः-षिका, [3]जोग्लुचकः-चिका ;
ग्लुञ्चिता-त्री, ग्लुञ्चयिता-त्री, जुग्लुञ्चिषिता-त्री, जोग्लुचिता-त्री ;

---

1. ‘अनुदात्तेतश्च हलादेः’ (3-2-149) इति ताच्छीलिको युच् ।
2. हकारस्य ‘हो ढः’ (8-2-31) इति झल्निमित्तके ढत्वे, ‘झषस्तथोर्धोऽधः’ (8-2-40) इति धत्वे, ‘ष्टुना ष्टुः’ (8-4-41) इति धकारस्य ढत्वे, ‘ढो ढे लोपः’ (8-3-13) इति ढकारस्य लोपे, ‘ढ्रलोपे पूर्वस्य’ (6-3-111) इति दीर्घः ।
3. अन्तरङ्गत्वात् यङ्निमित्तकः, ‘अनिदिताम्—’ (6-4-24) इति नलोपो भवति । एवं यङन्ते सर्वत्र ज्ञेयम् ।

A. ‘गाढमैत्ररसगृह्यमाणधीर्भूषणग्लहनघुंषितो बलः ॥’ धा. का. 1-82.

ग्लुञ्चन्-न्ती, ग्लुञ्चयन्-न्ती, जुग्लुञ्चिषन्-न्ती ; —

ग्लुञ्चिष्यन्-न्ती-ती ग्लुञ्चयिष्यन्-न्ती-ती, जुग्लुञ्चिषिष्यन्-न्ती-ती ; —

— ग्लुञ्चयमानः, ग्लुञ्चयिष्यमाणः, जोग्लुच्यमानः, जोग्लुचिष्यमाणः ;

[1]ग्लुक्-ग्लुग्-ग्लुचौ-ग्लुचः ; — —

[2]ग्लुक्तम्-तः, ग्लुञ्चितः, जुग्लुञ्चिषितः, जोग्लुचितः-तवान् ;

ग्लुञ्चः, ग्लुञ्चः, जुग्लुञ्चिषुः, जोग्लुचः ;

ग्लुञ्चितव्यम्, ग्लुञ्चयितव्यम्, जुग्लुञ्चिषितव्यम्, जोग्लुचितव्यम् ;

ग्लुञ्चनीयम्, ग्लुञ्चनीयम्, जुग्लुञ्चिषणीयम्, जोग्लुचनीयम् ;

[3]ग्लुङ्क्यम्, ग्लुञ्चयम्, जुग्लुञ्चिष्यम्, जोग्लुच्यम् ;

ईषद्ग्लुञ्चः-दुर्ग्लुञ्चः-सुग्लुञ्चः ; — —

[4]ग्लुच्यमानः, [5]ग्लुञ्च्यमानः, जुग्लुञ्चिष्यमाणः, जोग्लुच्यमानः ;

ग्लुञ्चः, ग्लुञ्चः, जुग्लुञ्चिषः, जोग्लुचः ;

ग्लुञ्चितुम्, ग्लुञ्चयितुम्, जुग्लुञ्चिषितुम्, जोग्लुचितुम् ;

[6]ग्लुञ्चा, ग्लुञ्चना, जुग्लुञ्चिषा, जोग्लुचा ;

ग्लुञ्चनम्, ग्लुञ्चनम्, जुग्लुञ्चिषणम्, जोग्लुचनम् ;

[7]ग्लुञ्चित्वा-ग्लुक्त्वा, ग्लुञ्चयित्वा, जुग्लुञ्चिषित्वा, जोग्लुचित्वा ;

परिग्लुच्य, परिग्लुञ्च्य, परिजुग्लुञ्चिष्य, परिजोग्लुच्य ;

ग्लुञ्चम् २, ग्लुञ्चित्वा २, ग्लुक्त्वा २, } ग्लुञ्चम् २, ग्लुञ्चयित्वा २, } जुग्लुञ्चिषम् २, जुग्लुञ्चिषित्वा २, } जोग्लुचम् २ ; जोग्लुचित्वा २. }

---

1. 'अनिदिताम्—' (6-4-24) इति नलोपे चर्त्वविकल्पः ।

2. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः । उपधानकारलोपः ।

3. कुत्वविधायके सूत्रे 'निष्ठायामनिट इति वक्तव्यम्' (वा. 7-3-52) इति वार्तिकात् कुत्वं भवति । एवं घञ्यपि ।

4. 'अनिदिताम्—' (6-4-24) इति नकारलोपः ।

5. णिचा व्यवधानात् कित्परकत्वाभावात् नलोपो न ।

6. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः ।

7. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । कित्त्वपक्षे नलोपः । कित्त्वाभावपक्षे नलोपाभावः ।

(448) "ग्लेपृ दैन्ये" (I-भ्वादिः-366. अक. सेट्. आत्म.)

ग्लेपकः-पिका, ग्लेपकः-पिका, जिग्लेपिषकः-षिका, जेग्लेपकः-पिका ;

इत्यादीनि सर्वाण्यपि रूपाणि 'गेपृ कम्पने' इति भौवादिकधातुवत् (429) ज्ञेयानि ।

(449) "ग्लेपृ च" (I-भ्वादिः-370. अक. सेट्. आत्म.)

चात्कम्पने गतौ च। अस्यापि धातोः सर्वाण्यपि रूपाणि 'गेपृ कम्पने' इति भौवादिकधातुवत् (429) बोध्यानि। अर्थभेदात् पुनः पाठोऽस्य ।

(450) "ग्लेवृ सेवने" (I-भ्वादिः-503. सक. सेट्. आत्म.)

ग्लेवकः-विका, ग्लेवकः-विका, जिग्लेविषकः-षिका, जेग्लेवकः-विका ;

इत्यादीनि सर्वाण्यपि रूपाणि कम्पनार्थकगेपृ धातुवत् (429) ज्ञेयानि । ण्यति-ग्लेव्यम्[A] । क्विपि ऊठि वृद्धौ च ग्लौः इति रूपमिति विशेषः।

(451) "ग्लेषृ अन्विच्छायाम्" (I-भ्वादिः-614. सक. सेट्. आत्म.)

अन्विच्छा=अन्वेषणम् । 'गेषृ अन्विच्छायाम्' इत्यस्य पाठान्तरमिदम्। अस्यापि धातोः सर्वाणि रूपाणि भौवादिकगेपृधातुवत् (429) बोध्यानि ।

(452) "ग्लै हर्षक्षये" (I-भ्वादिः-903. अक. अनि. पर.)

हर्षक्षयः=धातुक्षयः ।

[1]ग्लायकः-यिका, [2]ग्लपकः-ग्लापकः-प्रग्लापकः-पिका, [3]जिग्लासकः-सिका, जाग्लायक-यिका ;

---

1. 'आदेच उपदेशेऽशिति' (6-1-45) इत्यनेनानैमित्तिके आत्वे, 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवं घञि णमुल्यपि ज्ञेयम् ।
2. अनैमित्तिके आत्त्वे, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां—' (7-3-36) इति पुगागमे 'ग्लास्नावनुवमां च' (गणसूत्रम्-भ्वादिः) इत्यनेनानुपसृष्टस्य ग्लाधातोर्मित्त्वं वैकल्पिकम् । मित्त्वपक्षे, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाह्रस्वः । एवं ण्यन्ते सर्वत्र बोध्यम् । उपसर्गसमभिव्याहारे तु मित्त्वं न; तेन 'प्रग्लापकः' इत्येव ।
3. धातोरस्यानुदात्तत्वात्, 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इत्यनेन सनः इडभावे, 'सन्यङोः' (6-1-9) इति द्वित्वे, अभ्यासे, 'सन्यतः' (7-4-79) इतीत्त्वम् । एवं सन्नन्ते सर्वत्र ज्ञेयम् ।

A. 'सेव्यं सतां शङ्करगेव्यमब्जभूग्लेव्यं सुरैः पेव्यममेव्यमुन्मदैः ।' धा. का. 1-65.

ग्लाता-त्री, ग्लपयिता-ग्लापयिता-त्री, जिग्लासिता-त्री, जाग्लायिता-त्री ;

[1]ग्लायन्[A]-न्ती, ग्लपयन्-ग्लापयन्-न्ती, जिग्लासन्-न्ती ; —

ग्लास्यन्-न्ती-ती, ग्लपयिष्यन्-ग्लापयिष्यन्-न्ती-ती, जिग्लासिष्यन्-न्ती-ती ; —

— ग्लपयमानः-ग्लापयमानः, — जाग्लायमानः ;

— ग्लपयिष्यमाणः-ग्लापयिष्यमाणः, — जाग्लायिष्यमाणः ;

सुग्लाः-सुग्लौ-सुग्लाः ; — —

[2]ग्लानः-[B]ग्लानम्-ग्लानवान्, [C]ग्लपितः-ग्लापितः, जिग्लासितः,

जाग्लायित.-तवान् ;

[3]सुग्लः, प्रग्लः[D], [4]ग्लायः, [5]ग्लास्नुः[E], ग्लपः-ग्लापः, जिग्लासुः, [6]जाग्लः ;

---

1. शित्परकत्वेनात्वाभावे, 'एचोऽयवायावः' (6-1-78) इत्यायादेशः ।

2. 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठातकारस्य नकारः ।

3. 'आतश्चोपसर्गे' (3-1-136) इति कर्तरि कप्रत्ययः । 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः ।

4. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इति कर्तरि णप्रत्यये युगागमः ।

5. 'ग्लाजिस्थश्च ग्स्नुः' (3-2-139) इति तच्छीलादिषु कर्तृषु ग्स्नुप्रत्ययः । 'श्र्युकः क्किति' (7-2-11) इति इण्णिषेधः ।

6. 'न धातुलोप आर्धधातुके' (1-1-4) इति सूत्रस्य भाष्यकृता प्रत्याख्यानपक्षे, पृथगल्लोपे, 'यङोऽचि च' (2-4-74) इत्यनेन यकारस्य लुकि, अकारस्य लुकि, अकारस्य स्थानिवद्भावेन अजाद्यार्धधातुकङित्परकत्वात् 'आतो लोप इटि च' (6-4-64) इत्याकारलोपे च 'जाग्लः' इति रूपम् । साम्भावनिकस्य ङित्त्वस्यातिदेशलभ्यत्वादेव 'यातिः' इत्यत्र यङन्तात् क्तिचि अल्लोपस्य स्थानिवद्भावादुत्तरखण्डे आकारलोपो भवतीति बोध्यम् । 'यङोऽचि च' (2-4-72) इत्यनेनानैमित्तिके लुकि तु आकारलोपाभावे जाग्लाः इत्येव ।

A. 'ततो रावणमाख्याय द्विषन्तं पततां वरः ।
व्रणवेदनया ग्लायन् ममार गिरिकन्दरे ॥' भ. का. 6-43.

B. 'धयन् दृशा ग्लानरुचिं स कृष्णं म्लानिं त्यजन् धानमले जलान्ते ।'
धा. का. 2-30.

C. 'आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम् ॥' भ. का. 6-78.

D. 'अज्ञो यो यस्य वा नास्ति प्रियः प्रग्लो भवेन्न सः ॥' भ. का. 6.77.

E. 'तान् विलोकयासहिष्णुः सन् विललापोन्मदिष्णुवत् ।
वसन् माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत् ॥' भ. का. 7.4.

ग्लातव्यम्, ग्लपयितव्यम्-ग्लापयितव्यम्, जिग्लासितव्यम्, जाग्लायितव्यम्;

[1]प्रणिग्लानीयम्-प्रनिग्लानीयम्, ग्लपनीयम्-ग्लापनीयम्, जिग्लासनीयम्, जाग्लायनीयम्;

[2]ग्लेयम्, ग्लप्यम्-ग्लाप्यम्, जिग्लास्यम्, जाग्लाय्यम्;

[3]ईषद्ग्लानः-दुर्ग्लानः-सुग्लानः; — —

ग्लायमानः, ग्लप्यमानः-ग्लाप्यमानः-प्रग्लाप्यमानः, जिग्लास्यमानः, जाग्लाय्यमानः;

ग्लायः, ग्लपः-ग्लापः, जिग्लासः, जाग्लायः;

ग्लातुम्, ग्लपयितुम्-ग्लापयितुम्, जिग्लासितुम्, जाग्लायितुम्;

[4]ग्लानिः, [5]प्रग्ला, ग्लपना-ग्लापना, जिग्लासिषा, जाग्लाया;

ग्लानम्, ग्लपनम्-ग्लापनम्, जिग्लासनम्, जाग्लायनम्;

ग्लात्वा, ग्लपयित्वा-ग्लापयित्वा, जिग्लासित्वा, जाग्लायित्वा;

प्राग्लाय, [6]प्रग्लाप्य, प्रजिग्लास्य, प्रजाग्लाय्य;

ग्लायम् २, ग्लात्वा २, } [7]ग्लपम् २-ग्लापम् २, ग्लपयित्वा २-ग्लापयित्वा २, } जिग्लासम् २, जिग्लासित्वा २, } जाग्लायम् २; जाग्लायित्वा २. }

[8]ग्लौः.

---

1. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वविकल्पः।
2. आत्वे, 'ईद्यति' (6-4-65) इत्यकारस्य ईकारे गुणः।
3. 'आतो युच्' (3-3-128) इति ईषदादुपपदेषु खलपवादो युच्।
4. 'ग्लाम्लाज्याहाभ्यो निः (वा. 3-3-95) इति स्त्र्यधिकारे क्तिनपवादो नि-प्रत्ययः।
5. 'आतश्चोपसर्गे' (3-3-106) इति स्त्रियामङ्।
6. उपसृष्टस्य धातोः मित्त्वाभावात् 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वो न।
7. मित्त्वपक्षे, 'चिण्णमुलोः—' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः।
8. 'ग्लानुदिभ्यां डौः' (द. उ. 2-12) इति डौप्रत्ययः। ग्लौः=चन्द्रः। ग्लायतीति ग्लौः!

(453) "घघ हसने" (I-भ्वादिः-159. सक. सेट्. पर.)

'घग्घ' इति क्षीरस्वामी ।

घाघकः-घिका, घाघकः-घिका, जिघघिषकः-षिका, जाघघकः-घिका;
घघिता-त्री, घघयिता-त्री, जिघघिषिता-त्री, जाघघिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि "गद व्यक्तायां वाचि" (372) इति भौवादिक धातुवत् ज्ञेयानि ।

(454) "घट चेष्टायाम्" (I-भ्वादिः-763. अक. सेट्. आत्म.)

घटादिः, षिच्च । चेष्टा=ईहा इति क्षीरस्वामी ।

'घाटयेद् घण्टयेत् सङ्घभाषयोर्घटते मितः ।' (श्लो. 70) इति देवः ।

[1]घाटकः-टिका, [2]घटकः-टिका, जिघटिषकः-षिका, [3]जाघटकः-टिका;
घटिता-त्री, घटयिता-त्री, जिघटिषिता-त्री, जाघटिता-त्री;
— घटयन्-न्ती, [4]विघटयन्, घटयिष्यन्-न्ती-ती;
घटमानः, घटयमानः, जिघटिषमाणः, जाघट्यमानः;
घटिष्यमाणः, घटयिष्यमाणः, जिघटिषिष्यमाणः, जाघटिष्यमाणः;
घट्-घटौ-घटः; — — —
घटितम्-तः, घटितः, जिघटिषितः, जाघटितः-तवान्;
[5]घटः-घटी, [6]घटनः, घटः, जिघटिषुः, जाघटः;
घटितव्यम्, घटयितव्यम्, जिघटिषितव्यम्, जाघटितव्यम्;

---

1. 'अत उपधायाः' (7-2-116) इत्यनेन, उपधाभूतस्याकारस्य वृद्धिः । एवं घञि ण्यति णमुल्यपि ज्ञेयम् ।
2. 'घटादयो मितः' (गणसूत्रं भ्वादौ) इति मित्त्वे, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाया ह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
3. 'सन्यङोः (6-1-9) इति द्वित्वे, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घे, 'यस्य हलः' (6-4-49) इति यकारस्य लोपे, अल्लोपे च रूपम् । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. अर्थनिर्देशस्योपलक्षणत्वेन, अर्थान्तरेऽपि मित्त्वं भवति । अतः वियोजनार्थस्यापि मित्त्वं बोध्यम् ।
5. 'कर्मणि घटोऽठच्' (5-2-35) इति निर्देशबलात्, पचाद्यच् (3-1-134) सर्वत्र भवतीति ज्ञायते । स्त्रियाम्, 'जातेरस्त्रीविषयादयोपधात्' (4-1-63) इति टाबपवादो ङीप् ।
6. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।

घटनीयम्, घटनीयम्, जिघटिषणीयम्, जाघटनीयम्;
घाट्यम्, घट्यम्, जिघटिष्यम्, जाघट्यम्;
ईषद्घटः-दुर्घटः-सुघटः; — —
घट्यमानः, घट्यमानः; जिघटिष्यमाणः, जाघट्यमानः;
घाटः, घटः, जिघटिषः, जाघटः;
घटितुम्, घटयितुम्, जिघटिषितुम्, जाघटितुम्;
[1]घटा,[A] घटना, जिघटिषा, जाघटा;
घटनम्, घटनम्, जिघटिषणम्, जाघटनम्;
घटित्वा, घटयित्वा, जिघटिषित्वा, जाघटित्वा;
विघट्य, [2]विघटय्य, विजिघटिष्य, विजाघट्य;
घाटम् २, घटित्वा २, } [3]घाटम् २, घटम् २, घटयित्वा २, } जिघटिषम् २, जिघटिषित्वा २, } जाघटम् २; जाघटित्वा २; }
[4]घटिकः-घटिका.

## (455) "घट सङ्घाते" (X-चुरादिः-1724. अक. सेट्. उभ.)

'घाटयेद् घण्टयेद् सङ्घभाषयोर्घटते मितः।' (श्लो. 70) इति देवः।
'भेदने च' इत्येके, इति धा. का. व्याख्याने।
घाटकः-टिका, जिघाटयिषकः-षिका;
[B]घाटयिता-त्री, जिघाटयिषिता-त्री; इत्यादीनि
सर्वाण्यपि रूपाणि 'कण निमीलने' इति धातुवत् (159) बोध्यानि। [C]घाटितः।

## (456) "घट भाषार्थः" (X-चुरादिः-1767. अक.सेट्. उभ.) आस्वदीयः।

'घाटयेद् घण्टयेत् सङ्घभाषयोर्घटते मितः'। (श्लो. 70) इति देवः।

---

1. 'घटादयः षितः' (गणसूत्रं भ्वादौ) इति षित्त्वेन, 'षिद्भिदादिभ्योऽङ्' (3-3-104) इति क्तिनोऽपवादः स्त्रियामङ्।
2. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
3. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः।
4. 'क्वुन् शिल्पिसंज्ञयोः' [द. उ. 3.5] इति क्वुनि रूपम्।

A. 'गोपी घटाः प्रव्यथितास्तदानीं पृथूपतापप्रसमानचिन्ताः।' धा. का. 2.4.
B. 'प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव॥' किरातार्जुनीये 2-46.
C. 'द्रागामथन् विचटदस्थिकशाऽथ मुष्टया प्रास्फोटयत् तमजितोऽपि स घाटिताङ्गम्।' धा. का. 3-39.

अस्य धातोः सर्वाण्यपि रूपाणि 'कण निमीलने' इति चौरादिक-धातुवत (159) ज्ञेयानि।

(457) "घटि भाषार्थः" (X-चुरादिः-1768.सक. सेट्. उभ.) आस्वदीयः। भासार्थ इति क्षीरस्वामी। भासा=दीप्तिः अर्थः यस्येति माधवधातुवृत्तौ।

'घाटयेद् घण्टयेत् सङ्घभाषयोर्घटते मितः।' (श्लो. 70) इति देवः।

घण्टकः-ण्टिका, जिघण्टयिषकः-षिका;
घण्टयिता-त्री, जिघण्टयिषिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककठिधातुवत् (150) बोध्यानि। [A]उद्घण्टितः।

(458) "घट्ट चलने" (I-भ्वादिः-259. सक. सेट्. आत्म.)

'घट्टयेद् घट्टते द्वे स्तां चलने णौ शपि क्रमात्'। (श्लो. 73) इति देवः।

घट्टकः-ट्टिका, घट्टकः-ट्टिका, जिघट्टिषकः-षिका, जाघट्टकः-ट्टिका;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककड्डधातुवत् (156) बोध्यानि। अस्य धातोः अनुदात्तेत्त्वात् शानचि—घट्टमानः, घट्टिष्यमाणः, जिघट्टिषमाणः, जिघट्टिषिष्यमाणः; इत्यादीनि रूपाणि भवन्तीति विशेषः। 'घट्टिवन्दिविदिभ्यश्च' (वा. 3-3-107) इति वचनेन घट्टना इति रूपं स्त्रियां भवति। ल्युटि घट्टनम्[B]। [C]घट्टितम्।

(459) "घट्ट चलने" (X-चुरादिः-1631. अक. सेट्. उभ.)

'घट्टयेद् घट्टते द्वे स्तां चलने णौ शपि क्रमात्'। (श्लो. 73) इति देवः।

घट्टकः-ट्टिका, जिघट्टयिषकः-षिका; इत्यादीनि सर्वाण्यपि चौरादिक-कुट्टधातुवत् (207) बोध्यानि।

(460) "घष कान्तिकरणे" (I-भ्वादिः-652. सक. सेट्. आत्म.)

'घुषि' इत्यस्य पाठान्तरमिदम्।

---

A. 'कश्चित् कष्टमविंसयद् रणमिमं कुंस्यं त्वया दृश्यताम्
नाकुंश्यं परिघाटयेति न परेणोद्घण्टितोऽवृंश्यत्।' धा. का. 3-44.

B. 'तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम्।' शिशुपालवधे 3-6.

C. 'तत्केलिसङ्गोष्ठिनलोष्टभानमद् वने मरुद्घट्टितपोस्फुटद्रुमे॥' धा. का. 1-34.

घाषकः-षिका, घाषकः-षिका, जिघषिषकः-षिका, जाघषकः-षिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकखषधातुवत् (346) बोध्यानि। अस्य धातोः आत्मनेपदित्वात् घषमाणः, घषिष्यमाणः, जिघषिषिष्यमाणः; इत्यादीनि रूपाणि शानचि भवन्ति, इति विशेषः।

## (461) "घस्लृ अदने" (I-भ्वादिः-715. सक. अनि. पर.) [अ]

"अयं न सार्वत्रिकः। 'लिट्यन्यतरस्याम्' (2-4-40) इत्यदेः घस्लादेशविधानात्। ततश्च, यत्र लिङ्गं वचनं वाऽस्ति, तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। ऌदित्करणमङि। अनिट्कारिकासु पाठो वलाद्यार्धधातुके। क्मरचि तु विशिष्योपादानम्।" इति सिद्धान्तकौमुदी। एतदनुसारेण रूपाणि लिख्यन्ते। एवञ्च गमकाभावाद् ण्यन्तात् यङन्ताच्च प्रयोगो न।

— [1]जिघत्सकः-त्सिका;

---

[अ] "परे तु 'लिट्यन्यतरस्याम्' (2-4-40) इत्येतत्सामर्थ्यात् लिटि माऽस्तु प्रयोगः, अन्यत्र तु भवत्येव। 'जघस्थ' इति रूपवारणे तत्सार्थक्यम्। 'जघस्थ' इत्यस्येष्टत्वे हि असार्वत्रिकत्वबोधनेऽपि न कथमपि सार्थक्यम्। अत एव, 'उपदेशेऽत्वतः' (7-2-62) इति सूत्रे, 'घसेः प्रतिषेधो वक्तव्यः—जघसिथ' (वा. 7-2-62) इति वार्तिकं, तासौ नित्यानिट्त्वाभावात् प्रत्याख्यातं भाष्ये। अन्यथा, अस्य प्रतिषेधार्थं वार्तिकं स्यादिति तत्प्रत्याख्यानासङ्गतिः। अच्प्रत्यये घस्लादेशविधानं तु—'अदः' इत्येतद्रूपवारणार्थमित्याहुः॥" इति शेखरकाराः। अत एव 'घासः' इति प्रयोगस्योपपत्तिः ज्ञेया। 'शष्पं बालतृणं घासः' इत्यमरः। एतन्मते ण्यन्तात् यङन्तादपि रूपाणि भवन्त्येव। तदानीम्, 'घासकः-सिका, घासकः-सिका, जाघसकः-सिका,' इत्यादीनि रूपाणि यथायथमूह्यानि। यङन्ते जाघसकः इति रूपप्रदर्शनं तु 'गमहनजनखनघसां लोपः क्ङित्यनङि' (6-4-98) इत्यत्र 'अनङि' इति पर्युदासेन औपदेशिकाजादिप्रत्यये एव लोपः—इत्यभ्युपगच्छतां शब्दकौस्तुभकाराणां मतेन। 'न धातुलोप—' (1-1-4) सूत्रे उद्योते औपदेशिकाजादावित्यर्थमनाश्रित्य गम्लृधातोर्यङन्ते ण्वुलि जङ्गमकः इति रूपप्रदर्शनेन नागेशभट्टानां तु जाक्षकः इति रूपमेव अस्माद्धातोर्यङन्ते सम्मतमिति भाति। प्राचीननवीनयोर्बहुषु स्थलेषु आशयभेदो यथा भवति—तथाऽत्रापीति बोध्यम्।

1. अस्य धातोरनुदात्तत्वात् सनि इण्णिषेधः। 'सः स्यार्धधातुके' (7-4-49) इति धातुसकारस्य तकारादेशे च रूपम्। एवं सन्नन्ते सर्वत्र ज्ञेयम्।

| | |
|---|---|
| घस्ता-घस्त्री, | जिघत्सिता-त्री ; |
| घसन्-न्ती, | जिघत्सन्-न्ती ; |
| [1]घत्स्यन्-न्ती-ती, | जिघत्सिष्यन्-न्ती-ती ; |
| [2]घस्तम्-घस्तः-घस्तवान्, | जिघत्सितः-तवान् ; |
| [3]घस्मरः,[A] | जिघत्सुः ; |
| घस्तव्यम्, | जिघत्सितव्यम् ; |
| — | जिघत्सनीयम् ; |
| — | जिघत्स्यम् ; |
| — | ईषज्जिघत्सः-दुर्जिघत्सः-सुजिघत्सः ; |
| — | जिघत्सः ; |
| — | जिघत्स्यमानः ; |
| घस्तुम्, | जिघत्सितुम् ; |
| घस्तिः, | जिघत्सा ; |
| — | जिघत्सनम् ; |
| घस्त्वा, | जिघत्सित्वा ; |
| — | प्रजिघत्स्य ; |
| — } | जिघत्सम् २ ; } |
| घस्त्वा २, } | जिघत्सित्वा २. } |

## (462) " घिंणि ग्रहणे " (I-भ्वादिः-434. सक. सेट्. आत्म.)

[4]घिण्णकः-ण्णिका, घिण्णकः-ण्णिका, जिघिण्णिषकः-षिका, जेघिण्णकः-ण्णिका ;

---

1. ‘सः स्यार्धधातुके’ (7-4-49) इति धातुसकारस्य तकारः।
2. धातोः भक्षणार्थकत्वेन, ‘क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः’ (3-4-76) इति अधिकरणे, कर्तरि, कर्मणि च क्तप्रत्ययो भवति।
3. ‘सृघस्यदः क्मरच्’ (3-2-160) इति ताच्छीलिकः क्मरच्प्रत्ययः।
4. ‘इदितो नुम् धातोः’ (7-1-58) इति नुमि, ‘ष्टुना ष्टुः’ (8-4-41) इति तस्य ष्टुत्वेन णकारे च रूपम्।

A. ‘महीय्यमाना भवताऽतिमात्रं सुराध्वरे घस्मरजित्वरेण।
दिवोऽपि वज्रायुधभूषणाया हृणीयते वीरवती न भूमिः॥’ भ. का. 2-38.

घिण्णिता-त्री, घिण्णयिता-त्री, जिघिण्णिषिता-त्री, जेघिण्णिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकक्लिन्दतिवत् (284) बोध्यानि। [A]प्रघिण्ण्य।

(463) "घुङ् शब्दे" (I-भ्वादिः-952. अक. अनि. आत्म.)

घावकः-विका, घावकः-विका, जुघूषकः-षिका, [1]जोघूयकः-यिका; घोता-त्री, घावयिता-त्री, जुघूषिता-त्री, जोघूयिता-त्री, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुङ्धातुवत् (198) ज्ञेयानि। [B]घुतः।

(464) "घुट परिवर्तने" (I-भ्वादिः-746. सक. सेट्. आत्म.)

[C]घोटकः-टिका, घोटकः-टिका, जुघुटिषिकः-जुघोटिषकः-षिका, जोघुटकः-टिका; घोटिता-त्री, घोटयिता-त्री, जुघुटिषिता-जुघोटिषिता-त्री, जोघुटिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि 'कुक आदाने' (197) इति भौवादिकधातुवत् बोध्यानि। अचि— घोटः, क्वुनि घुटिका, इति विशेषः।

(465) "घुट प्रतिघाते" (VI-तुदादिः-1385. सक. सेट्. पर.) कुटादिः।

घोटकः-टिका, घोटकः-टिका, जुघुटिषकः-षिका, जोघुटकः-टिका; घुटिता-त्री, घोटयिता-त्री, जुघुटिषिता-त्री, जोघुटिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककुटधातुवत् (204) बोध्यानि। [D]घुटितः।

---

1. कुङ्धातोः यङन्ते 'न कवतेर्यङि' (7-4-63) इति निषेधात् चुत्वं न। अस्य तु जोघूयकः इति चुत्वं भवत्येव, इति विशेषः।

A. 'प्रघिण्ण्य भूषाः परिघुण्य मालिकाः प्रघृण्य घोणापुटघूर्णिचन्दनम्।' धा. का. 1. 57.

B. 'स्मितार्द्रवक्त्रं गवमानभूषं गै त्वां घुता शं कुनशङ्खघोषैः॥' धा. का. 2-35.

C. 'अस्विन्नरुग्घोटकरुटयमानमार्गा जवेनालुटिता निरीयुः॥' धा. का. 2-1.

D. 'ईशश्चाघुटितस्तुडन् खलमुदं रोषं शुढन् प्रस्फुडन् धाम स्वं स्फुरितो जगाम धनुषः पार्श्वं क्षणादस्फुलन्॥' धा. का. 2-81.

(466) " घुण भ्रमणे " (I-भ्वादिः-437. अक. सेट्. आत्म.)

'भूवाद्योर्घुणिघूर्ण्योः स्तां घोणते घूर्णते शपि।

भ्रमणेऽत्र तुदाद्योः शे स्यातां घुणति घूर्णति ॥' (श्लो. 91) इति देवः।

घोणकः-णिका, घोणकः-णिका, [1]जुघुणिषकः-जुघोणिषकः-षिका, जोघुणकः-णिका ;

घोणिता-त्री, घोणयिता-त्री, जुघुणिषिता-जुघोणिषिता-त्री, जोघुणिता-त्री ;

— घोणयन्-न्ती, घोणयिष्यन्-न्ती-ती ; —

घोणमानः, घोणयमानः, जुघुणिषमाणः-जुघोणिषमाणः, जोघुण्यमानः ;

घोणिष्यमाणः, घोणयिष्यमाणः, जुघुणिषिष्यमाणः-जुघोणिषिष्यमाणः, जोघुणिष्यमाणः ;

सङ्घुण्-संघुणौ-संघुणः ; — —

घुणितम्-तः, घोणितः, जुघुणिषितः-जुघोणिषितः, जोघुणितः-तवान् ;

[2]घुणः, [3]घोणः-घोणा, घोणः, जुघुणिषुः-जुघोणिषुः, जोघुणः ;

घोणितव्यम्, घोणयितव्यम्, जुघुणिषितव्यम्-जुघोणिषितव्यम्, जोघुणितव्यम् ;

घोणनीयम् , घोणनीयम् , जुघुणिषणीयम् -जुघोणिषणीयम् . जोघुणनीयम् ;

घोण्यम् , घोण्यम् , जुघुणिष्यम्-जुघोणिष्यम् , जोघुण्यम् ;

ईषद्घोणः-दुर्घोणः-सुघोणः ; — —

घुण्यमानः, घोण्यमानः, जुघुणिष्यमाणः-जुघोणिष्यमाणः, जोघुण्यमानः ;

---

1. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सनः कित्वविकल्पः। कित्वाभावपक्षे गुणः। कित्वपक्षे गुणो न। एवं क्त्वाप्रत्ययेऽपि रूपद्वयं बोध्यम्।

2. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः प्रत्ययः। घुणः=कीटविशेषः। 'घुणाक्षरन्यायः' इति प्रसिद्धिः।

3. क्रोडादिगणे (4-1-56) निपातनात् पचाद्यचि, गुणः, ङीष्निषेधश्च इति मा. धा. वृत्तौ।

[1]घोण:-घोणा,[A] घोण:, जुघुणिष:-जुघोणिष:, जोघुण: ;
घोणितुम्, घोणयितुम्, जुघुणिषितुम्-जुघोणिषितुम्, जोघुणितुम् ;
[2]घुणिति:, घोणना, जुघुणिषा-जुघोणिषा, जोघुणा ;
घोणनम्, घोणनम्, जुघुणिषणम्-जुघोणिषणम्, जोघुणनम् ;
घुणित्वा-घोणित्वा, घोणयित्वा, जुघुणिषित्वा-जुघोणिषित्वा, जोघुणित्वा ;
संघुण्य, संघोण्य, सञ्जुघुणिष्य-सञ्जुघोणिष्य, सञ्जोघुण्य ;
घोणम् २, घुणित्वा २, घोणित्वा २, } घोणम् २, घोणयित्वा २, } जुघुणिषम् २-जुघोणिषम् २, जुघुणिषित्वा २-जुघोणिषित्वा २, } जोघुणम् २ ; जोघुणित्वा २. }

## (467) "घुण भ्रमणे" (VI-तुदादि:-1338. अक. अनि. पर.)

घोणक:-णिका, घोणक:-णिका, जुघुणिषक:-षिका, जुघोणिषक:-षिका, जोघुणक:-णिका; इत्यादीनि सर्वाण्यपि भौवादिकघोणतिवत् (467) ज्ञेयानि । अस्य धातो: तुदादित्वात् परस्मैपदित्वाच्च शतरि घुणन्-ती, इति रूपमिति विशेष: । [B]घुणितम् ।

## (467-A) "घुणि ग्रहणे" (I-भ्वादि:-435. सक. सेट्. आत्म.)

घुण्णक:-ण्णिका, घुण्णक:-ण्णिका, जुघुण्णिषक: षिका, जोघुण्णक:-ण्णिका ;
घुण्णिता-त्री, घुण्णयिता-त्री, जुघुण्णिषिता-त्री, जोघुण्णिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुन्दतिवत् (284) बोध्यानि । [C]परिघुण्ण्य ।

---

1. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । स्त्रियां क्रोडादिगणे (4-1-56) निपातनात् ङीष् न भवति । तेन टाप् । 'क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ।' इत्यमर: ।
2. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इत्यत्र, 'ग्रहादय:=ग्रहप्रकारा: ।' इत्युक्तत्वात् इड् भवति ; यथा 'फणिति:' इत्यत्र ।

A. 'प्रघिण्य भूषा: परिघुण्य मालिका: प्रघृण्य घोणापुटघूर्णिचन्दनन् । पणाप्यरूपा: पनिताकृतीन् ययुर्भामिन्य एवाक्षमया स्वकामुकान् ॥' धा. का. 1-57.

B. 'विद्रोणनेष्वघुणिना मदघूर्णदक्षा:
युद्धे सुरानपि खरोत्कुरिता: खुरन्त: ॥' धा. का. 2.76.

C. 'प्रघिण्य भूषा: परिघुण्य मालिका: प्रघृण्य घोणापुटघूर्णिचन्दनम् ।' धा. का 1.57.

(468) "घुर भीमार्थशब्दयोः" (VI-तुदादिः-1345. सक. सेट्. पर.)

घोरकः-रिका, घोरकः-रिका, जुघुरिषकः-जुघोरिषकः-षिका, जोघुरकः-रिका; घोरिता-त्री, घोरयिता-त्री, जुघुरिषिता-जुघोरिषिता-त्री, जोघुरिता-त्री; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिकशब्दार्थककुर (229) धातुवत् बोध्यानि। इगुपधलक्षणे कप्रत्यये—घुरः। घुर्घुरः—इगुपधलक्षणक-प्रत्यये "कृत्रादीनां के द्वे भवतः" (वा. 6-1-12) इति द्वित्वे पृषोदरादित्वात् (6-3-109) हलादिः शेषः (7-4-60) न प्रवृत्तः। घञि घोरः[A]।

(469) "घुषि कान्तिकरणे" (I-भ्वादिः-652. अक. सेट्. आत्म.)

घुषेर्विशब्दनादौ णौ घोषयत्यविशब्दने ॥
घोषतीतीदितो घुंषेद् घुंषते कान्तिकर्मणि।' (श्लो. 169-170) इति देवः।

"घषीत्यदुपधं पेठतुश्चन्द्रकाश्यपौ। स्वामी घसेति दन्त्यान्तमदुपधं पपाठ। यथा वयं, तथा देवमैत्रेयदुर्गाः। षकारान्तोऽप्ययं 'घुषिर् अविशब्दने' इत्युत्तरधातुसाम्यादिह पठितः॥" इति मा. धा. वृत्तिः।

| | | | |
|---|---|---|---|
| [1]घुंषकः-षिका, | घुंषकः-षिका, | जुघुंषिषकः-षिका, | जोघुंषकः-षिका; |
| घुंषिता-त्री, | घुंषयिता-त्री, | जुघुंषिषिता-त्री, | जोघुंषिता-त्री; |
| — | घुंषयन्-न्ती, | घुंषयिष्यन्-न्ती-ती; | — |
| घुंषमाणः, | घुंषयमाणः, | जुघुंषिषमाणः, | जोघुंष्यमाणः; |
| घुंषिष्यमाणः, | घुंषयिष्यमाणः, | जुघुंषिषिष्यमाणः, | जोघुंषिष्यमाणः; |
| [2]घुन्-घुंषौ-घुंषः; | — | — | — |
| घुंषितम्-तः,[B] | घुंषितः, | जुघुंषिषितः, | जोघुंषितः-तवान्; |
| घुंषः, | घुंषः, | जुघुंषिषुः, | जोघुंषः; |
| घुंषितव्यम्, | घुंषयितव्यम्, | जुघुंषिषितव्यम्, | जोघुंषितव्यम्; |
| घुंषणीयम्, | घुंषणीयम्, | जुघुंषिषणीयम्, | जोघुंषणीयम्; |
| घुंष्यम्, | घुंष्यम्, | जुघुंषिष्यम्, | जोघुंष्यम्; |

1. 'इदितो नुम् धातोः' (7-1-58) इति नुमि, 'नश्चापदान्तस्य झलि' (8-3-24) इति नकारस्यानुस्वारः। एवं सर्वत्र ज्ञेयम्।
2. क्विपि, षकारस्य 'संयोगान्तस्य—' (8-2-23) इति लोपः।

A. 'मुरादिबन्धुः क्षुरघोरचेताः पुरन् खलानां जनजीवघर्ही।' धा. का. 2-77.
B. 'गाढमेत्वरसगृह्यमाणधीर्भूषणस्लहनघुंषितो खलः॥' धा. का 1.82.

ईषद्घुंषः-दुर्घुंषः-सुघुंषः ; — —

| | | | |
|---|---|---|---|
| [1]घुंष्यमाणः, | घुंष्यमाणः, | जुघुंषिष्यमाणः, | जोघुंष्यमाणः ; |
| घुंषः, | घुंषः, | जुघुंषिषः, | जोघुंषः ; |
| घुंषितुम्, | घुंषयितुम्, | जुघुंषिषितुम्, | जोघुंषितुम् ; |
| [2]घुंषा, | घुंषणा, | जुघुंषिषा, | जोघुंषा ; |
| घुंषित्वा, | घुंषयित्वा, | जुघुंषिषित्वा, | जोघुंषित्वा ; |
| प्रघुंष्य, | प्रघुंष्य, | प्रजुघुंषिष्य, | प्रजोघुंष्य ; |
| घुंषम् २, घुंषित्वा २, | घुंषम् २, घुंषयित्वा २, | जुघुंषिषम् २, जुघुंषिषित्वा २, | जोघुंषम् २ ; जोघुंषित्वा २. |

## (470) "घुषिर् अविशब्दने" (I-भ्वादिः-653. सक. सेट्. पर.)

विशब्दनं=प्रतिज्ञानम्। तच्च शब्देन स्वाभिप्रायाविष्करणम्। तसोऽन्यस्मिन्नर्थे अस्य धातोः प्रयोगः। 'घुषिर् शब्दे' इत्यन्ये पेठुः।

'घुषेर्विशब्दनादौ णौ घोषयत्यविशब्दने ॥
घोषतीतीदितो घुंषेद् घुंषते कान्तिकर्मणि।' (श्लो. 169-70)

इति देवः।

घोषकः-षिका, घोषकः-षिका, [3]जुघुषिषकः-जुघोषिषकः-षिका, जोघुषकः-षिका ;

घोषिता-त्री, घोषयिता-त्री, जुघुषिषिता-जुघोषिषिता-त्री, जोघुषिता-त्री ;

[A]घोषन्-न्ती, घोषयन्-न्ती, जुघुषिषन्-जुघोषिषन्-न्ती ; —

घोषिष्यन्-न्ती-ती, घोषयिष्यन्-न्ती-ती, जुघुषिषिष्यन्-जुघोषिषिष्यन्-न्ती-ती ;—

---

1. धातोरिदित्त्वेन, 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इति उपधाया नलोपो न।
2. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः।
3. 'रलो व्युपधात्—' (1-2-26) इति क्त्वासनोः सेटोः कित्त्वविकल्पः। तेन रूपद्वयम्। एवं सन्नन्ते सर्वत्र क्त्वायां च ज्ञेयम्।

A. 'घोषद्भूषः पङ्कजाक्षस्तमूचे पापश्रेणीतक्षणे त्वष्टृधर्मा।
उक्षन् एनं मन्दहासेन रक्षन् विश्वन् निश्नन् वल्लरीस्तु क्षिताघाः ॥' धा. का. 1-83.

— घोषयमाणः, घोषयिष्यमाणः — जोघुष्यमाणः, जोघुषिष्यमाणः ;

[1]सङ्घुट्-सङ्घुड्-सङ्घुषौ-सङ्घुषः ; — —

[2]घुष्टम्-घुष्टः-[A]सङ्घुष्टम्-घुष्टा, [B]सङ्घुषितम् (वाक्यम्), घोषितः, जुघुषिषितः-जुघोषिषितः, जोघुषितः-तवान् ;

घुषः, [3]घोषणः, घोषः, जुघुषिषुः-जुघोषिषुः, जोघुषः ;

घोषितव्यम्, घोषयितव्यम्, जुघुषिषितव्यम्-जुघोषिषितव्यम्, जोघुषितव्यम् ;

घोषणीयम्, घोषणीयम्, जुघुषिषणीयम्-जुघोषिषणीयम्, जोघुषणीयम् ;

घोष्यम्, घोष्यम्, जुघुषिष्यम्-जुघोषिष्यम्, जोघुष्यम् ;

ईषद्घोषः-दुर्घोषः-सुघोषः ; — —

घुष्यमाणः, घोष्यमाणः, जुघुषिष्यमाणः-जुघोषिष्यमाणः, जोघुष्यमाणः ;

घोषः, घोषः, जुघुषिषः-जुघोषिषः, जोघुषः ;

घोषितुम्, घोषयितुम्, जुघुषिषितुम्-जुघोषिषितुम्, जोघुषितुम् ;

[4]घुष्टिः, घोषणा, जुघुषिषा-जुघोषिषा, जोघुषा ;

घोषणम्, घोषणम्, जुघुषिषणम्-जुघोषिषणम्, जोघुषणम् ;

घुषित्वा-घोषित्वा, घोषयित्वा, जुघुषिषित्वा-जुघोषिषित्वा, जोघुषित्वा ;

विघुष्य, विघोष्य, विजुघुषिष्य-विजुघोषिष्य, विजोघुष्य ;

घोषम् २, घुषित्वा २, घोषित्वा २, } घोषम् २, घोषयित्वा २, } जुघुषिषम् २-जुघोषिषम् २, जुघुषिषित्वा २-जुघोषिषित्वा २, } जोघुषम् २ ; जोघुषित्वा २. }

---

1. 'वाऽवसाने' (8-4-56) इति अवसाने चर्त्वविकल्पः ।

2. 'घुषिरविशब्दने' (7-2-23) इत्यनेन निष्ठाया इण्णिषेधः । विशब्दने तु 'रुष्यमत्वरसंघुषाऽऽस्वनाम्' (7-2-28) इत्यनेन इड् भवत्येव । सङ्घुषितम् = वाक्यम् ।

3. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति तच्छीलादिषु युच् ।

4. 'तितुत्रतथसिसुसरकसेषु च' (7-2-9) इति इण्णिषेधः ।

A. 'तेषां निहन्यमानानां सङ्घुष्टैः कर्णभेदिभिः ।
अभूदभ्यमितत्रासमास्वान्ताशेषदिग् जगत् ॥' भ. का. 9-21.

B. 'रामसङ्घुषितं नैतन्मृगस्यैव विवञ्चिषोः ।' भ. का. 5.55.

(471) " घुषिर् विशब्दने " (X-चुरादिः-1727. अक. सेट्. उभ. [अ]

'घुषेर्विशब्दनादौ णौ घोषयत्यविशब्दने ॥
घोषतीतीदितो घुंषेद् घुंषते कान्तिकर्मणि ।'

(श्लो. 169, 170) इति देवः ।

अस्य धातोः णिच् वैकल्पिकः । अत एव 'घुषिरविशब्दने' (7-2-23) इति सूत्रे अस्य धातोः निष्ठायां इण्णिषेधवारणाय क्रियमाणम् अविशब्दने इति पदं सार्थकम्, अस्य धातोः नित्यणिजन्तत्वे निष्ठायाः, धातोः अव्यवहितपरत्वाभावेन निषेधाभावे सिद्धे अविशब्दने इति पदं व्यर्थं भवेत् । अतः णिच् वैकल्पिकः । एवं च णिजभावपक्षे इण्णिषेधवारणाय तत् सार्थकमिति स्वांशे चारितार्थ्यम् । णिचो वैकल्पिकत्वेन शुद्धाद्धातोः, सन्नन्तात् - यङन्ताच्च पूर्वोक्तभौवादिक- 'घुषि' धातुवत् (470) सर्वाणि रूपाणि बोध्यानि । निष्ठाप्रत्यये परं, संघुषितं वाक्यमित्येव साधु । ण्यन्तात्, ण्यन्तप्रकृतिकसन्नन्ताच्च इमानि रूपाणि लिख्यन्ते ।

घोषकः-षिका, जुघोषयिषकः-षिका ; घोषयिता-त्री,
जुघोषयिषिता-त्री ; घोषयन्-न्ती, जुघोषयिषन्-न्ती ;
घोषयिष्यन्-न्ती-ती, जुघोषयिषिष्यन्-न्ती-ती ; घोषयमाणः,
जुघोषयिषमाणः ; घोषयिष्यमाणः, जुघोषयिषिष्यमाणः ;
सङ्घोट्-संघोड्-संघोषौ-संघोषः ; —
संघोषितः-तम्, जुघोषयिषितः-तवान् ; घोषः, जुघोषयिषुः ;
घोषयितव्यम्, जुघोषयिषितव्यम् ; घोषणीयम्, जुघोषयिषणीयम् ;
घोष्यम्, जुघोषयिष्यम् ; ईषद्घोषः-दुर्घोषः-सुघोषः ;
घोष्यमाणः, जुघोषयिष्यमाणः ; घोषः, जुघोषयिषः ;
घोषयितुम्, जुघोषयिषितुम् ; घोषणा, जुघोषयिषा ;

---

[अ] यद्यपि धातुपाठे 'घुषिर् विशब्दने' इति इरित्त्वेन निर्देशः क्रियते, तथापि पर्यालोच्यमाने इरित्करणं न प्रामाणिकमिति प्रतिभाति । अत एव भाष्य-कृता—'घुषिरविशब्दने' (7-2-23) इत्यत्र अविशब्दनालिङ्गात् णिचो वैकल्पि-कत्वं बोधितम् । इरित्करणं प्रामाणिकं चेत् तत एव णिचो वैकल्पिकत्वं बोध्येत, तथा तु न कृतम् । एवं च 'घुषिः विशब्दने' इति इका निर्देश एव उचितः ।

घोषणम्, जुघोषयिषणम्, घोषयित्वा, जुघोषयिषित्वा ;
संघोष्य, सञ्जुघोषयिष्य ; घोषम् २, घोषयित्वा २, } जुघोषयिषम् २ ; जुघोषयिषित्वा २. }

(472) "घूरी हिंसावयोहान्योः" (IV-दिवादिः-1155. अक. सेट्. आत्म.)

घूरकः-रिका, घूरकः-रिका, जुघूरिषकः-षिका, जोघूरकः-रिका ;
घूरिता-त्री, घूरयिता-त्री, जुघूरिषिता-त्री, जोघूरिता-त्री ;
इत्यादीनि सर्वाण्यपि रूपाणि दैवादिक 'गूरी हिंसागत्योः' इति (419) धातुवत् ज्ञेयानि । [A]बहुजन्तुघूरी ।

(473) "घूर्ण भ्रमणे" (I-भ्वादिः-438. अक. सेट्. आत्म.)

'भ्वाद्योर्घुणिघूर्ण्योः स्तां घोणते घूर्णते शपि ।
भ्रमणेऽत्र तुदाद्योः शे स्यातां घुणति घूर्णति ॥' (श्लो. 91) इति देवः ।

घूर्णकः-र्णिका, घूर्णकः-र्णिका, जुघूर्णिषकः-षिका, जोघूर्णकः-र्णिका ;
घूर्णिता-त्री, घूर्णयिता-त्री, जुघूर्णिषिता-त्री, जोघूर्णिता-त्री ;
— घूर्णयन्-न्ती, घूर्णयिष्यन्-न्ती-ती ; —
घूर्णमानः, घूर्णयमानः, जुघूर्णिषमाणः, जोघूर्ण्यमानः ;
घूर्णिष्यमाणः, घूर्णयिष्यमाणः, जुघूर्णिषिष्यमाणः, जोघूर्णिष्यमाणः ;
[1]घूर्णू-घूर्णौ-घूर्णः ; — — —
घूर्णितम्-तः, घूर्णितः, जुघूर्णिषितः, जोघूर्णितः-तवान् ;
घूर्णः, [2]घूर्णनः, घूर्णः, [B]घोणापुटघूर्णी, जुघूर्णिषुः, जोघूर्णः ;
घूर्णितव्यम्, घूर्णयितव्यम्, जुघूर्णिषितव्यम्, जोघूर्णितव्यम् ;
घूर्णनीयम्, घूर्णनीयम्, जुघूर्णिषणीयम्, जोघूर्णनीयम् ;

---

1. 'रात् सस्य' (8-2-24) इति नियमात् णकारस्य संयोगान्तलोपो न ।
2. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच् ।

A. 'गूर्णेऽस्मिन् बहुजन्तुघूरिणि खले जूर्णैः शशंसे नृभिः
शौरिः शूरकगर्वचूरणपरः सन्तप्यमानः सताम् ।' धा. का. 2-60.

B. 'प्रघिण्य भूषाः परिघुण्य मालिकाः प्रघृण्य घोणापुटघूर्णिचन्दनम् ।'
[घोणापुटं घूर्णयतीति घोणापुटघूर्णि ण्यन्तात् णिनिः ।] धा. का. 1-57,

| | | | |
|---|---|---|---|
| घूर्ण्यम्, | घूर्ण्यम्, | जुघूर्णिष्यम्, | जोघूर्ण्यम; |
| ईषद्घूर्णः-दुर्घूर्णः-सुघूर्णः; | | — | — |
| घूर्ण्यमानः, | घूर्ण्यमानः, | जुघूर्णिष्यमाणः, | जोघूर्ण्यमानः; |
| घूर्णः, | घूर्णः, | जुघूर्णिषः, | जोघूर्णः; |
| घूर्णितुम्, | घूर्णयितुम्, | जुघूर्णिषितुम्, | जोघूर्णितुम्; |
| [1]घूर्णा, | घूर्णना, | जुघूर्णिषा, | जोघूर्णा; |
| घूर्णनम्, | घूर्णनम्, | जुघूर्णिषणम्, | जोघूर्णनम्; |
| घूर्णित्वा, | घूर्णयित्वा, | जुघूर्णिषित्वा, | जोघूर्णित्वा; |
| संघूर्ण्य, | संघूर्ण्य, | सञ्जुघूर्णिष्य, | सञ्जोघूर्ण्य; |
| घूर्णम् २, घूर्णित्वा २, | घूर्णम् २, घूर्णयित्वा २, | जुघूर्णिषम् २, जुघूर्णिषित्वा २, | जोघूर्णम् २; जोघूर्णित्वा २. |

## (474) "घूर्ण भ्रमणे" (VI-तुदादिः-1339. अक. सेट्. पर.)

'भूवाद्योः घुणिघूर्ण्योः स्तां घोणते घूर्णते शपि।
भ्रमणेऽत्र तुदाद्योः शे स्यातां घुणति घूर्णति ॥' (श्लो. 19) इति देवः। अस्य धातोः परस्मैपदित्वात् शतरि—[A]घूर्णन्-घूर्णयन्, घूर्णिष्यन्, घूर्णयिष्यन्, जुघूर्णिषन्-न्ती, जुघूर्णिषिष्यन्-न्ती-ती, इति इमानि रूपाणि भवन्तीति विशेषः। अन्यानि सर्वाण्यपि रूपाणि पूर्वोक्तभौवादिकघूर्णतिवत् (473) बोध्यानि।

## (475) "घृ सेचने" ( I-भ्वादिः-938. सक. अनि. पर) [अ]

'—घरेद् घारयेद्, यङीतौ क्षरणे जिघर्त्ति तदिदं केचिद् विदुः छान्दसम् ॥'
(श्लो. 33) इति देवः।

---

1. 'गुरोश्च हलः' (3-3-103) इति स्त्रियामकारप्रत्ययः।

A. 'विद्रोणनेष्वघुणिता मदघूर्णदक्षा युद्धे सुरानपि खरोत्कुरिताः खुरन्तः॥' धा.का. 2-76.

[अ] 'अविशेषविहिताः शब्दा नियतविषया दृश्यन्ते। घरतिरस्मायविशेषेणोपदिष्टः। स 'घृतं घृणा घर्म' इत्येवंविषयः।' इति, 'तृज्वत् क्रोष्टुः' (7-1-95) इति सूत्रस्थभाष्यात् नियतविषयोऽयं धातुरिति पुरुषकारव्याख्यानात् (श्लो. 33) अवगम्यते।

घारकः-रिका-घारकः-रिका, जिघीर्षकः-र्षिका, जेघ्रीयकः-यिका, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकसेचनार्थकगृधातुवत् (420) बोध्यानि ।

(476) "घृ क्षरणदीप्त्योः" (III-जुहोत्यादिः-1096. अक. अनि. पर.)

'यद्दीप्तौ क्षरणे जिघर्त्ति तदिदं केचिद्विदुश्छान्दसम् ॥' (श्लो. 33) इति देवः ।

क्षरणं=स्रवणम् इति क्षीरस्वामी ।

अस्य धातोः जुहोत्यादिपाठात् शतरि—जिघ्रत्[1] इति पुंसि रूपम् । स्त्रियां तु जिघ्रती इत्येकमेव । अन्यानि शुद्धात्-णिजन्तात्-सन्नन्तात्-यङन्ताच्च जायमानानि रूपाणि भौवादिकसेचनार्थकगृधातुवत् (420) बोध्यानि । [2]घर्मः[A] ।

(477) "घृ प्रस्रवणे" (X-चुरादिः-1651. सक. अनि. उभ.)

स्रावणे इत्येके । संप्रस्रवणे इति मा. धा. वृत्तौ ।

'यद्दीप्तौ क्षरणे जिघर्त्ति तदिदं केचिद् विदुः छान्दसम् ॥' (श्लो. 33) इति देवः।

घारकः-रिका, घारयिता-त्री, घारयन्-न्ती, [B]घारितम्, इत्यादीनि रूपाणि सेचनार्थकगृधातुवत् (420) बोध्यानि । ण्यन्तात् सनि तु इमानि रूपाणि—जिघारयिषकः-षिका, जिघारयिषिता-त्री;

जिघारयिषन्-न्ती, जिघारयिषिष्यन्-न्ती-ती, जिघारयिषमाणः, जिघारयिषिष्यमाणः, जिघारयिट् - जिघारयिषौ - जिघारयिषः, जिघारयिषितः-तवान्, जिघारयिषः, जिघारयिषितव्यम्, जिघारयिषणीयम्, जिघारयिष्यम्, ईषद्जिघारयिषः-दुर्जिघारयिषः-सुजिघारयिषः, जिघारयिष्यमाणः, जिघारयिषः, जिघारयिषितुम्, जिघारयिषा, जिघारयिषणम्, जिघारयिषित्वा, प्रजिघारयिष्य, जिघारयिषम् २, जिघारयिषित्वा २. इति ।

---

1. 'श्लौ' (6-1-10) इति द्वित्वम् । उत्तरखण्डे यण् । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः ।

2. 'घर्मः' [द. उ. 7-36] इति सूत्रेणास्माद्धातोः मक्प्रत्यये, निपातनात् गुणः । घर्मः=निदाघः ।

A. 'घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधने प्रवीणैः ॥' धा. का. 2-55.

B. 'इत्थं सुगाजितमृदङ्गविमार्जनानि संवार्य मर्चयति घारितशङ्कमस्मिन् ।' धा. का. 3.28.

(478) " घृणि ग्रहणे " (I-भ्वादिः-436. सक. सेट्. आत्म.)

घृण्णकः-ण्णिका, घृण्णकः-ण्णिका, जिघृण्णिषकः-षिका, जरीघृण्णकः-ण्णिका, घृण्णिता-त्री, घृण्णयिता-त्री, जिघृण्णिषिता-त्री, जरीघृण्णिता-त्री, घृण्णयन्-न्ती, घृण्णयिष्यन्-न्ती-ती, घृण्णमानः, जिघृण्णिषमाणः, जरीघृण्ण्यमानः, घृण्णिष्यमाणः, घृण्णयिष्यमाणः, जिघृण्णिषिष्यमाणः, जरीघृण्णिष्यमाणः, [1]घृन्-घृण्णौ-घृण्णः, प्रघृण्ण्य, [A]इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकक्लिन्दतिवत् (284) बोध्यानि ।

(479) " घृणु दीप्तौ " (VIII-तनादिः-1469. अक. सेट्. उभ.)

| | | | |
|---|---|---|---|
| [2]घर्णकः-र्णिका, | घर्णकः-र्णिका, | जिघर्णिषकः-षिका, | [3]जरीघृणकः-णिका ; |
| घर्णिता-त्री, | घर्णयिता-त्री, | जिघर्णिषिता-त्री, | जरीघृणिता-त्री ; |
| [4]घृण्वन्-ती, | घर्णयन्-न्ती, | जिघर्णिषन्-न्ती ; | — |
| घर्णिष्यन्-न्ती-ती, | घर्णयिष्यन्-न्ती-ती, | जिघर्णिषिष्यन्-न्ती-ती ; | — |
| घृण्वानः, | घर्णयमानः, | जिघर्णिषमाणः, | जरीघृण्यमानः ; |
| घर्णिष्यमाणः, | घर्णयिष्यमाणः, | जिघर्णिषिष्यमाणः, | जरीघृणिष्यमाणः ; |
| [5]घृण्-घृणौ-घृणः ; | — | — | — |
| [6]घृतम्-तः, | घर्णितः, | जिघर्णिषितः, | जरीघृणितः-तवान् ; |
| घृणः, | घर्णः, | जिघर्णिषुः, | जरीघृणः ; |
| घर्णितव्यम्, | घर्णयितव्यम्, | जिघर्णिषितव्यम्, | जरीघृणितव्यम् ; |

1. 'पदान्तस्य' (8-4-37) इति णत्वनिषेधः ।
2. 'पुगन्तलघूपधस्य च' (7-3-86) इति ऋकारस्य गुणः ।
3. 'रीगृदुपधस्य च' (7-4-90) इत्यभ्यासस्य रीगागमः । एवं यङन्ते सर्वत्र ज्ञेयम् ।
4. 'तनादिकृञ्भ्य उः' (3-1-79) इति उः विकरणप्रत्ययः । 'इको यणचि' (6-1-77) इति यण् । एवं 'घृण्वानः' इत्यत्रापि ज्ञेयम् ।
5. विचि प्रत्यये रूपमेवम् । क्विपि तु अनुनासिकस्य, 'गमादीनामिति वक्तव्यम्' (वा. 6-4-40) इत्यनेन लोपे, 'ह्रस्वस्य—' (6-1-71) इति तुकि 'घृत्-घृतौ-घृतः' इति रूपं भवति ।
6. उदित्त्वेन क्त्वायामिड्विकल्पनात्, 'यस्य विभाषा' (7-2-15) इति निष्ठायां इण्णिषेधे, 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (6-4-37) इत्यनुनासिकलोपे च रूपम् ।

A. 'प्रघिण्य भूषाः परिघुण्य मालिकाः प्रघृण्य घोणापुटघूर्णिचन्दनम् ।'
धा. का. 1.57.

घर्णनीयम्, घर्णनीयम्, जिघर्णिषणीयम्, जरीघृणनीयम्;
[1]घृण्यम्, घर्ण्यम्, जिघर्णिष्यम्, जरीघृण्यम्;
ईषद्घर्णः-दुर्घर्णः-सुघर्णः; — —
घृण्यमानः, घर्ण्यमानः, जिघर्णिष्यमाणः, जरीघृण्यमानः;
घर्णः, घर्णः, जिघर्णिषः, जरीघृणः;
घर्णितुम्, घर्णयितुम्, जिघर्णिषितुम्, जरीघृणितुम्;
[2]घृणा, [3]घृणिः[A], घर्णना, जिघर्णिषा, जरीघृणा;
घर्णनम्, घर्णनम्, जिघर्णिषणम्, जरीघृणनम्;
[4]घर्णित्वा-घृत्वा, घर्णयित्वा, जिघर्णिषित्वा, जरीघृणित्वा;
[5]संघृत्य, संघर्ण्य, सञ्जिघर्णिष्य, सञ्जरीघृण्य;
घर्णम् २, घर्णित्वा २-घृत्वा २, } घर्णम् २, घर्णयित्वा २, } जिघर्णिषम् २, जिघर्णिषित्वा २, } जरीघृणम् २; जरीघृणित्वा २. }

(480) "घृषु सङ्घर्षे" (I-भ्वादिः-708. सक., सेट्. पर.)

घर्षकः-र्षिका, घर्षकः-र्षिका, जिघर्षिषकः-षिका, जरीघृषकः-षिका;
घर्षिता-त्री, घर्षयिता-त्री, जिघर्षिषिता-त्री, जरीघृषिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि दैवादिकगृधुधातुवद् (424) ऊह्यानि। अस्य भ्वादिपाठात् शतरि परं—घर्षन्-न्ती, इति विशेषः। क्विपि, घृट्-घृड्-घृषौ-घृषः, इति रूपम्। [B]परघर्षी (णिनिः)। नन्द्यादित्वात्, कर्तरि ल्युः, सङ्घर्षणः।

---

1. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति क्यप्।
2. भिदादेः (3-3-104) आकृतिगणत्वात् स्त्रियाम् अङ्।
3. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति स्त्रियां इक्। घृणिः=दीप्तिः।
4. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणः। इडभावपक्षेऽनुनासिकलोपः।
5. 'वा ल्यपि' (6-4-38) इत्यत्र व्यवस्थितविभाषाश्रयणेन तनोत्यादीनां नित्यमनुनासिकलोपो भवति ल्यपि परतः। अनन्तरं तुक्।

A. 'कंसस्तृणीकृतरिपुर्घृणिमान् वतासिं मन्वान एकमथ मल्लमलञ्चकार॥' धा. का. 3.4.
B. 'सामर्ष परघर्षिणोऽपि हंषितास्त्वां नोपयान्त्याहवे तोषह्रासविहीनशङ्कजनितह्रासाद्रवद्दिक्तटम्॥' धा. का. 1-88.

(481) "घ्रा गन्धोपादाने" (I-भ्वादिः-926. सक. अनि. पर.)

[1]घ्रायकः-यिका, [2]घ्रापकः-पिका, जिघ्रासकः-सिका, [3]जेघ्रीयकः-यिका ;
घ्राता-त्री, घ्रापयिता-त्री, जिघ्रासिता-त्री, जेघ्रीयिता-त्री ;
[4]जिघ्रन्-[A]न्ती, घ्रापयन्-न्ती, जिघ्रासन्-न्ती, —
घ्रास्यन्-न्ती-ती, घ्रापयिष्यन्-न्ती-ती, जिघ्रासिष्यन्-न्ती-ती ; —
— घ्रापयमाणः, घ्रापयिष्यमाणः, — जेघ्रीयमाणः, जेघ्रीयिष्यमाणः ;
संघ्राः-संघ्रौ-संघ्राः ; — — —
[5]घ्राणः-घ्राणम्-घ्राणवान्, घ्रातः,-तम्-तवान्, घ्रापितः, जिघ्रासितः,
जेघ्रीयितः-तवान् ;
[6]व्याघ्रः-व्याघ्री, [7]आजिघ्रः[B], [8]घ्रायः, [9]पुष्पसङ्घ्रायः, घ्रापः, जिघ्रासुः, [10]जाघ्राः ;

---

1. 'आतो युक् चिण्कृतोः' (7-3-33) इति युगागमः। एवं घञि, णमुलि च ज्ञेयम्।
2. 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ' (7-3-36) इति णौ पुगागमः। एवं ण्यन्ते सर्वत्र बोध्यम्।
3. 'ई घ्राध्मोः' (7-4-31) इति आकारस्य ईकारादेशः। अभ्यासे गुणः।
4. शपि, 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' (7-3-78) इत्यनेन प्रकृतेः जिघ्रादेशे रूपम्।
5. 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (8-2-56) इति निष्ठातकारस्य नकारविकल्पः। नत्वपक्षे णत्वम्।
6. 'आतश्चोपसर्गे' (3-1-1-36) इति कर्तरि कः। स्त्रियां, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (परिभाषा 77) इति सुबुत्पत्तेः प्राक् समासे, अदन्तत्वेन प्राप्तं टापं बाधित्वा जातिलक्षणो ङीष् भवति।
7. सोपसर्गात् 'पाघ्राध्माधेट्दृशः शः' (3-1-137) कर्तरि शप्रत्ययः। 'पाघ्राध्मास्थाम्नादाण्—' (7-3-78) इत्यादिना जिघ्रादेशः। मध्ये विकरणप्रत्ययः शप्। '‹उ›पमितं व्याघ्रादिभिः—' (2-1-56) इति निर्देशात् संज्ञायाम् उपसृष्टेऽपि जिघ्रादेशो न।
8. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इत्यादिना आदन्तलक्षणे णप्रत्यये युगागमः।
9. 'आतोऽनुपसर्गे कः' (3-2-3) इत्यत्र, 'अनुपसर्गे' इत्युक्तत्वात्—सोपसृष्टात् 'कर्मण्यण्' (3-2-1) इत्यण्।
10. यङन्तात् अचि, 'यङोऽचि च' (2-4-74) इति यङो लुकि, यङ्परकत्वाभावादीत्वाभावे, 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घे च रूपम्।

A. 'स्नातावदातः स पिबंस्तदाभाज्जिघ्रन् सुगन्धं विधमन्नघानि।' धा. का. 2-33.
B. 'ध्वनीनामुद्भमैरेभिर्मधूनामुद्धयैर्भृशम्।
आजिघ्रैः पुष्पगन्धानां पतङ्गैरर्लपिता वयम्॥' भ. का. 6-77.

घ्रातव्यम्, घ्रापयितव्यम्, जिघ्रासितव्यम्, जेघ्रीयितव्यम्;
घ्राणीयम्, घ्रापणीयम्, जिघ्रासनीयम्, जेघ्रीयणीयम्;
[1]घ्रेयः, आघ्रेयः, घ्राप्यम्, जिघ्रास्यम्, जेघ्रीय्यम्;
[2]ईषद्घ्राणः-दुर्घ्राणः-सुघ्राणः; — —
घ्रायमाणः, घ्राप्यमाणः, जिघ्रास्यमानः, जेघ्रीय्यमाणः;
घ्रायः, घ्रापः, जिघ्रासः, जेघ्रीयः;
घ्रातुम्, घ्रापयितुम्, जिघ्रासितुम्, जेघ्रीयितुम्;
घ्रातिः, [3]आघ्रा, घ्रापणा, जिघ्रासा, जेघ्रीया;
[4]प्रणिघ्राणम्-प्रनिघ्राणम्, घ्रापणम्, जिघ्रासनम्, जेघ्रीयणम्;
घ्रात्वा, घ्रापयित्वा, जिघ्रासित्वा, जेघ्रीयित्वा;
घ्रायम् २, घ्रात्वा २, } घ्रापम् २. घ्रापयित्वा २, } जिघ्रासम् २, जिघ्रासित्वा २, } जेघ्रीयम् २; जेघ्रीयित्वा २. }

(482) "ङुङ् शब्दे" (I-भ्वादिः-954. अक. अनि. आत्म.)

ङावकः-विका, ङावकः-विका, [5]ञुङूषकः-षिका, ञोङूयकः-यिका;
ङोता-त्री, ङावयिता-त्री, ञुङूषिता-त्री, ञोङूयिता-त्री;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकशब्दार्थक-कवति (198) वद्-बोध्यानि।

(483) "चक तृप्तौ प्रतीघाते च" (I-भ्वादिः-93. अक. सेट्. आत्म.)

"प्रतीघाते च तृप्तौ च चकते, चकतीति तु।

तृप्तिमात्रे चकेरस्य मित्त्वात् चकयतीति णौ॥" (श्लो. 40) इति देवः।

चाककः-किका, चाककः-किका, चिचकिषकः-षिका, चाचककः-किका;
चकिता-त्री, चकयिता-त्री, चिचकिषिता-त्री, चाचकिता-त्री;
—चाकयन्-न्ती, चाकयिष्यन्-न्ती-ती; — —

1. 'ईद्यति' (6-4-65) इति धात्वाकारस्य ईकारे गुणः।
2. 'आतो युच्' (3-3-128) खलपवादो युच्।
3. 'आतश्चोपसर्गे' (3-3-106) इति स्त्रियां अङ् भवति।
4. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वं वा।
5. सन्नन्ते यङन्ते चाभ्यासे 'कुहोश्चुः' (7-4-32) इत्यनेन चवर्गादेशो न भवति

चकमानः, चाकयमानः, चिचकिषमाणः, चाचक्यमानः;
चकिष्यमाणः, चाकयिष्यमाणः, चिचकिषिष्यमाणः, चाचकिष्यमाणः;
चक्-चग्-चकौ-चकः; — —
इत्यादीनि सर्वाण्यपि रूपाणि ककधातुवत् (139) बोध्यानि।

(484) "चक तृप्तौ" (I-भ्वादिः-783 अक. सेट्. पर.) घटादिः।

"प्रतीघाते च तृप्तौ च चकते, चकतीति तु।
तृप्तिमात्रे चकेरस्य मित्त्वात् चकयतीति णौ॥" (श्लो. 40) इति देवः।

पूर्वम् अनुदात्तेत्सु पठितस्यास्य धातोः तृप्तिरूपेऽर्थे मित्त्वार्थं परस्मैपदिनां मध्ये पुनः पाठः कृतः। अतः चकन्-न्ती, चकिष्यन्-न्ती-ती, चिचकिषन्-न्ती, चिचकिषिष्यन्-न्ती-ती; इत्यादीनि रूपाणि अस्य धातोः भवन्ति। णौ परतः 'मितां ह्रस्वः' (6-4-92) इति उपधायाः ह्रस्वविधानात् चककः-किका, चकयिता-त्री, चकयमानः, चकयिष्यमाणः, इत्यादीनि रूपाणि बोध्यानि। णमुलि—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति उपधायाः दीर्घविकल्पेन चकम् २---चाकम् २, चकयित्वा २, इति रूपाणीति विशेषः। अन्यानि सर्वाण्यपि रूपाणि ककधातुवत् (139) ज्ञेयानि। [1]चकोरः[A]।

(485) "चकासृ दीप्तौ" (II-अदादिः-1074. अक. सेट्. पर.) [अ] जक्षित्यादिः।

चकासकः-सिका, चकासकः-सिका, चिचकासिषकः-षिका;
चकासिता-त्री, चकासयिता-त्री, चिचकासिषिता-त्री;
[2]चकासत्[B]-चकासतौ-चकासतः-ती, चकासयन्-न्ती, चिचकासिषन्-न्ती;

---

1. 'कठिचकिभ्यामोरः' [द. उ. 8-29] इत्योरप्रत्ययः। चकतीति चकोरः=ज्योत्स्नापायिपक्षी।

2. 'जक्षित्यादयः षट्' (6-1-6) इत्यभ्यस्तसंज्ञायाम्, 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः। स्त्रियामुगित्वान्ङीप्।

[अ] अस्य धातोरनेकाच्त्वात्, 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (3-1-22) इति विहितो यङ् न भवति।

A. 'वृकान्वृतान् मुग्धचकोरकूजितानुड्डीनकङ्कानयमत्यवङ्कत॥' धा. का 1.13.

B. 'तं जाग्रतं दीनदरिद्रपोषे चकासतं शासतमप्रशान्तान्।
देवं स्फुरद्दीधितिमम्बुजाक्ष्यो वेव्यानमालोक्य विमोहमापुः॥' धा. का. 2. 52.

चकासिष्यन्-न्ती-ती, चकासयिष्यन्-न्ती-ती, चिचकासिषिष्यन्-न्ती-ती ;

— चकासयमानः, चकासयिष्यमाणः ; —

[1]विचकात्-विचकाद्-विचकासौ-विचकासः ; —

[2]चकासितम्-तः, चकासितः, चिचकासिषितः-तवान् ;

चकासः, चकासः, चिचकासिषुः ;

चकासितव्यम्, चकासयितव्यम्, चिचकासिषितव्यम् ;

चकासनीयम्, चकासनीयम्, चिचकासिषणीयम् ;

चकास्यम्, चकास्यम्, चिचकासिष्यम् ;

ईषच्चकासः-दुश्चकासः-सुचकासः ; —

चकास्यमानः, चकास्यमानः, चिचकासिष्यमाणः ;

चकासः, चकासः, चिचकासिषः ;

चकासितुम्, चकासयितुम्, चिचकासिषितुम् ;

[3]चकासा, चकासना, चिचकासिषा ;

चकासनम्, चकासनम्, चिचकासिषणम् ;

चकासित्वा, चकासयित्वा, चिचकासिषित्वा ;

विचकास्य, विचकास्य, विचिचकासिष्य ;

चकासम् २, } चकासम् २, } चिचकासिषम् २ ; }
चकासित्वा २, } चकासयित्वा २, } चिचकासिषित्वा २. }

## (486) " चक्क व्यथने " (X-चुरादिः-1595. सक. सेट्. उभ.)

चक्ककः-क्किका, चिचक्कयिषकः-षिका, चक्कयिता-त्री, चिचक्कयिषिता-त्री ;

इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-कुट्टधातुवत् (207) बोध्यानि।

क्विपि Aचक्क्-चक्कौ-चक्कः ; इति रूपम् ।

---

1. 'झलां जशोऽन्ते' (8-2-39) इत्यनेन पदान्ते जश्त्वम् । 'वाऽवसाने' (8-4-56) इति चर्त्वविकल्पः ।
2. दीप्त्यर्थकत्वात् 'गत्यर्थाकर्मक—' (3-4-72) इत्यादिना कर्तरि अधिकरणे च क्तप्रत्ययो ज्ञेयः ।
3. 'गुरोश्च हलः' (3-3-103) इति अकारप्रत्ययः ।

A. 'दुर्दान्तचक्क् पशुपचुक्कनमप्यरौत्सीत् प्रक्षालितक्षितितलांतुलवर्षरोधी ।'

धा. का. 3-21

## (487) "चक्षिङ् व्यक्तायां वाचि"

( II-अदादिः-1017. सक. सेट्. आत्म. )

"अयं दर्शनकर्मा च; यथा—'विश्वा रूपाऽभिचष्टे शचीभिः।' इति। प्रायेणायमाङ्पूर्वः।" इति माधवधातुवृत्तिः।

[1]ख्यायकः-[A]यिका-क्शायकः-यिका, [2]ख्यापकः-पिका, क्शापकः-पिका, [3]चिख्यासकः-सिका, चिक्शासकः-सिका, चाख्यायकः-यिका, चाक्शायकः-यिका;

ख्याता-क्शाता-त्री, ख्यापयिता-क्शापयिता-त्री, चिख्यासिता-चिक्शासिता-त्री चाख्यायिता-चाक्शायिता-त्री;

—ख्यापयन्-क्शापयन्-न्ती, [4]चिख्यासन्-चिक्शासन्-न्ती; — ,

ख्यास्यन्-क्शास्यन्-न्ती-ती, ख्यापयिष्यन्-क्शापयिष्यन्-न्ती-ती, चिख्यासिष्यन्-चिक्शासिष्यन्-न्ती-ती;

[5]आचक्षाणः, ख्यापयमानः-क्शापयमानः, चिख्यासमानः-चिक्शासमानः, चाख्यायमानः-चाक्शायमानः;

ख्यास्यमानः-क्शास्यमानः, ख्यापयिष्यमाणः-क्शापयिष्यमाणः, चिख्यासिष्यमाणः-चिक्शासिष्यमाणः, चाख्यायिष्यमाणः-चाक्शासिष्यमाणः;

आख्याः-आख्यौ-आख्याः; — —

---

1. 'आर्धधातुके' (2-4-35) इत्यधिकृत्य, 'चक्षिङः ख्याञ्' (2-4-54) इति ख्याञादेशो विधीयते। भाष्यकृता 'ख्शादिरयमादेशः', असिद्धकाण्डे णत्वप्रकरणानन्तरं, 'शस्य यो वा' (वा 8-4-39) इति वचनमभ्युपगतम्। ततश्च यत्वं वैकल्पिकम्। यत्वपक्षे, 'आतो युक्—' (7-3-33) इति युगागमे इदं रूपम्। यत्वाभावपक्षे, खकारस्य 'खरि च' (8-4-55) इति ककारे क्शायकः इति रूपम्। एवमार्धधातुकप्रत्ययेषु सर्वत्र रूपद्वयं बोध्यम्।
2. आदन्तलक्षणः पुक्। एवं ण्यन्ते सर्वत्र ज्ञेयम्।
3. आदेशभूतस्य ख्याञोऽजन्तत्वेन, 'एकाच उपदेशेऽनुदात्तात्' (7-2-10) इतीण्निषेधः। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
4. सनः प्रकृतिभूतस्य ख्याञः ञित्करणात् सन्नन्तात् शतृशानचौ भवतः।
5. शानचः शित्त्वेन सार्वधातुकत्वात्, ख्याञादेशो न। शपः 'अदिप्रभृतिभ्यः—' (2-4-72) इति लुक्।

A. 'क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद् वृद्धतमोऽपि राजा। आख्यायकेभ्यः श्रुतसूनुवृत्तिरक्लानयानो मिथिलामगच्छत्॥' भ. का. 2.44.

[1]ख्यातम्-क्शातम्-तः-तवान्, ख्यापितः-क्शापितः, चिख्यासितः-चिक्शासितः, चाख्यायितः-चाक्शायितः-तवान्;
[2]गोप्रख्यायः-गोप्रक्शायः, [3]गोसङ्ख्यः, [4]गोख्यः, [5]ख्यायः, [6]गोख्यायः, [7]आख्यायको[A] [वा व्रजति], [8]सुप्रख्यः[B] प्रख्यः, [9]स्त्र्याख्यः, [10]विचक्षणः;
ख्यापः-क्शापः, चिख्यासुः-चिक्शासुः, चाख्याः-चाक्शाः;
ख्यातव्यम्-क्शातव्यम्, ख्यापयितव्यम्-क्शापयितव्यम्, चिख्यासितव्यम्-चिक्शासितव्यम्, चाख्यायितव्यम्-चाक्शायितव्यम्;

---

1. 'ख्शाञः शस्य यो वा' (वा. 8-4-40) इति वचनस्यासिद्धकाण्डस्थत्वात् 'संयोगादेरातो धातोर्यण्वतः' (8-2-43) इति निष्ठानत्वे कर्तव्ये तस्यासिद्धतया—यण्वत्ताविरहात् निष्ठानत्वं न। 'न ध्याख्यापॄमूर्छिमदाम्' (8-2-57) इत्यत्र ख्याग्रहणेन नास्य ग्रहणम्; 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (परिभाषा-115) इति न्यायेन 'ख्या प्रकथने' इत्यस्यैव तत्र ग्रहणात्। इदं तु लाक्षणिकम्।
2. 'कर्मण्यण्' (3-2-1) इत्यणि रूपम्।
3. 'समि ख्यः (3-2-7) इति कर्तरि कप्रत्ययः। 'आतो लोप इटि च' (6-4-64) इत्याकारलोपः। अत्रापि 'गोसङ्क्शः' इत्युदाहार्यम्। एवमुत्तरत्रापि ख्शादिरादेशो बोध्यः।
4. 'आतोऽनुपसर्गे कः' (3-2-3) इति कर्तरि कः। आकारलोपः।
5. 'श्याऽऽद्व्यधास्रु—' (3-1-141) इत्यादिना कर्तरि णप्रत्ययः। युगागमः।
6. 'अण् कर्मणि च' (3-3-12) इति भविष्यत्यर्थे क्रियाफलकक्रियायामण्। सूत्रे चकारात् ण्वुल्प्युक्तार्थे भवति।
7. 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (3-3-10) इति क्रियाफलकक्रियायां ण्वुल्।
8. शोभनं प्रचष्टे इति सुप्रख्यः। 'आतश्चोपसर्गे' (3-1-136) इति कः। आकारलोपः।
9. स्त्रियमाचष्टे स्त्र्याख्यः। 'मूलविभुजादिभ्य उपसङ्ख्यानम्' (वा. 3-1.135) इति कः। आकारलोपः। कर्मण्यणोऽपवादः। 'यू स्त्र्याख्यौ नदी' (1-4-3) इति सूत्रमत्र ज्ञेयम्।
10. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति ताच्छीलिको युच्। 'असनयोश्च' (वा. 2-4-54) इति वचनेन ख्याञादेशाभावः।

A. 'वैदेहीं दृष्टवान् कर्म कृत्वाऽन्यैरपि दुष्करम्।
यशो यास्याम्युपादाता वार्तामाख्यायकः प्रभोः॥' भ. का. 8.128.

B. 'प्रस्कन्दितामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान्।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन्॥' भ. का. 7.74.

ख्यानीयम्-क्शानीयम्, ख्यापनीयम्-क्शापनीयम्, चिख्यासनीयम्-चिक्शासनीयम्, चाख्यायनीयम्-चाक्शायनीयम्;

[1]ख्येयम्-क्शेयम्, [2]सञ्चक्ष्यः[दुर्जनः], ख्याप्यम्-क्शाप्यम्, चिख्यास्यम्-चिक्शास्यम्, चाख्याय्यम्-चाक्शाय्यम्;

[3]ईषत्ख्यानः- [4]दुष्ख्यानः-सुख्यानः; ईषत्क्शानः-दुष्क्शानः-सुक्शानः;

ख्यायमानः-क्शायमानः, ख्याप्यमानः-क्शाप्यमानः, चिख्यास्यमानः-चिक्शास्यमानः, चाख्याय्यमानः-चाक्शाय्यमानः;

ख्यायः-क्शायः, ख्यापः-क्शापः, चिख्यासः-चिक्शासः, चाख्यायः-चाक्शायः;

ख्यातुम्-क्शातुम्, ख्यापयितुम्-क्शापयितुम्, चिख्यासितुम्-चिक्शासितुम्, चाख्यायितुम्-चाक्शायितुम्;

ख्यातिः-क्शातिः, [5]आख्या-सङ्ख्या, आक्शा-सङ्क्शा, ख्यापना-क्शापना, चिख्यासा-चिक्शासा, चाख्याया-चाक्शाया;

पुंख्यानम्-प्रख्यानम्, क्शानम्, ख्यापनम्-क्शापनम्, चिख्यासनम्-चिक्शासनम्, चाख्यायनम्-चाक्शायनम्;

ख्यात्वा-क्शात्वा, ख्यापयित्वा-क्शापयित्वा, चिख्यासित्वा-चिक्शासित्वा, चाख्यायित्वा-चाक्शायित्वा;

आख्याय-आक्शाय, आख्याप्य-आक्शाप्य, आचिख्यास्य-आचिक्शास्य, आचाख्याय्य-आचाक्शाय्य;

ख्यायम् २-क्शायम् २, } ख्यापम् २-क्शापम् २, } चिख्यासम् २-चिक्शासम् २, } चाख्यायम् २-चाक्शायम् २; }
ख्यात्वा २-क्शात्वा २, } ख्यापयित्वा २-क्शापयित्वा २, } चिख्यासित्वा २-चिक्शासित्वा २, } चाख्यायित्वा २-चाक्शायित्वा २; }

[6]चक्षुः.

---

1. 'ईद्यति' (7-4-65) इत्याकारस्य ईकारः। गुणः।
2. चक्षिङो ण्यति रूपम्। सञ्चक्ष्यः=वर्जनीय इत्यर्थः। 'वर्जने प्रतिषेधः' (वा. 2-4-54) इति ख्याञादेशनिषेधः।
3. 'आतो युच्' (3-3-128) इति ईषदाद्युपपदेषु खलपवादो युच्। 'युवोरनाकौ' (7-1-1) इत्यनादेशः।
4. 'इदुदुपधस्य चाप्रत्ययस्य' (8-3-41) इति षत्वमत्र।
5. 'आतश्चोपसर्गे (3-3-106) इति स्त्रियामङ्।
6. 'चक्षेः शिच्च' (द. उ. 9.41) इत्युसिप्रत्ययः। शिद्वद्भावस्याप्यतिदेशात् ख्याञादेशो न। चष्टे रूपमिति-चक्षुः=लोचनम्।

(488) "चट भेदने" (X-चुरादिः-1722. सक. सेट्. उभ.)

| | |
|---|---|
| चाटकः-टिका, | चिचाटयिषकः-षिका ; |
| चाटयिता-त्री, | चिचाटयिषिता-त्री ; |
| उच्चाटयन्-न्ती, [1]विचटन्[A]-न्ती, | उच्चिचाटयिषन्-न्ती ; |
| चाटयिष्यन्-न्ती-ती, | चिचाटयिषिष्यन्-न्ती-ती ; |
| चाटयमानः, | चिचाटयिषमाणः ; |
| चाटयिष्यमाणः, | चिचाटयिषिष्यमाणः ; |
| उच्चाट्-उच्चाटौ-उच्चाटः ; | — |
| उच्चाटितम्-तः, | चिचाटयिषितः-तवान् ; |
| चाटः, | चिचाटयिषुः ; |
| चाटयितव्यम्, | चिचाटयिषितव्यम् ; |
| चाटनीयम्, | चिचाटयिषणीयम् ; |
| चाट्यम्, | चिचाटयिष्यम् ; |
| ईषच्चाटः-दुश्चाटः-सुचाटः ; | — |
| चाट्यमानः, | चिचाटयिष्यमाणः ; |
| चाटः, | चिचाटयिषः ; |
| चाटयितुम्, | चिचाटयिषितुम् ; |
| चाटना, | चिचाटयिषा ; |
| चाटनम्, | चिचाटयिषणम् ; |
| चाटयित्वा, | चिचाटयिषित्वा ; |
| उच्चाट्य, | उच्चिचाटयिष्य ; |
| चाटम् २, चाटयित्वा २, | चिचाटयिषम् २ ; चिचाटयिषित्वा २. |

---

1. 'अनित्यण्यन्ताः चुरादयः' इति वचनात् णिजभावपक्षे शतरि रूपम् ।

A. 'द्रागामयन् विचटदस्थिकयाऽथ मुष्टया
प्रास्फोटयत् तमजितोऽपि स घादिताङ्गम् ।' धा. का. 3-39.

(488-A) "चटे वर्षावरणयोः" (I-भ्वादिः-294. सक. सेट्. पर.)

'कटे वर्षावरणयोः' (147) इत्यस्य पाठभेदोऽयम्।

चाटकः-टिका, चाटकः-टिका, चिचटिषकः-षिका, चाचटकः-टिका; इत्यादीनि सर्वाण्यपि रूपाणि, भौवादिककखतिवत् (141) ज्ञेयानि। [1]चटकः-चटका।

(489) "चडि कोपे" (I-भ्वादिः-278. अक. सेट्. आत्म.)

[2]चण्डकः-ण्डिका, चण्डकः-ण्डिका, चिचण्डिषकः-षिका, चाचण्डकः-ण्डिका; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककण्ठतिवत् (149) ज्ञेयानि। [3]चण्डः-[A] चण्डा-चण्डी, [4]चण्डनः, [5]चण्डा, [6]चण्डालः—

इति रूपाण्यस्य धातोर्भवन्तीति विशेषः।

(490) "चण दाने च" (I-भ्वादिः-796. सक. सेट्.पर.) घटादिः। [अ]

चकाराद् गतावपि।

चाणकः-णिका, चिचणिषकः-षिका, चञ्चणकः-णिका;

इत्यादीनि सर्वाण्यपि रूपाणि शुद्धात्, सन्नन्तात्, यङन्ताच्च भौवादिककणतिवत् (157) बोध्यानि। घटादित्वेन मित्त्वाण्णौ उपधाह्रस्वे, चणकः-णिका, चणयिता-त्री, इत्यादिकानि ण्यन्तरूपाणि घाटादिककणतिवत् (158) ज्ञेयानि। [B]चणन्-न्ती।

---

1. 'क्वुन् शिल्पिसंज्ञयोः' (द. उ. 3. 5) इति क्वुन्। अजादिषु पाठात् स्त्रियां टाप्। 'प्रत्ययस्थात्—' (7-3-44) इतीत्त्वं न। चटकः=पक्षिविशेषः।
2. 'इदितो नुम् धातोः' (7-1-58) इति नुम्।
3. पचाद्यचि (3-1-134) रूपम्। 'अजाद्यतष्टाप्' (4-1-4) इति स्त्रियां टाप्। गौरादिपाठात् (4-1-41) ङीषि चण्डी इत्यपि भवति।
4. 'क्रुधमण्डार्थेभ्यश्च' (3-2-151) इति तच्छीलादिषु कर्तृषु युच्।
5. 'गुरोश्च हलः' (3-3-103) इति स्त्रियां भावादौ अकारप्रत्ययः।
6. 'पतिचण्डिभ्यामालञ्' (द. उ. 8-116) इत्यालञ् प्रत्ययः।

A. 'अभुण्डितोच्चण्डगतीनशण्डनान् कुमार्गवैतण्डिकपण्डिताघृतान्।' धा. का. 1-37.

B. 'चणन् विषादं विशणन् विचिन्तां श्रणन् विमोहं श्रथितोऽस्तु सद्यः॥' धा.का.2-9.

[अ] माधवधातुवृत्तिपर्यालोचनया चुरादावपि कश्चन चणधातुरस्तीति ज्ञायते। क्षीरतरङ्गिणी-सिद्धान्तकौमुद्यादिषु तस्यानुपलम्भात् न तस्य रूपाणि लिखितानि। तस्य सत्त्वे तु चाणकः-णिका, चिचाणयिषकः-षिका; इत्यादीनि रूपाणि चौरादिककणधातुवत् (159) ज्ञेयानि।

## (491) "चते याचने" (I-भ्वादिः-865. सक. सेट्. उभ.) [अ]

| | | | |
|---|---|---|---|
| [1]चातकः[A]-तिका, | चातकः-तिका, | चिचतिषकः-षिका, | चाचतकः-तिका ; |
| चतिता-त्री, | चातयिता-त्री, | चिचतिषिता-त्री, | चाचतिता-त्री ; |
| चतन्-न्ती, | चातयन्-न्ती, | चिचतिषन्-न्ती ; | — |
| चतिष्यन्-न्ती-ती, | चातयिष्यन्-न्ती-ती, | चिचतिषिष्यन्-न्ती-ती ; | — |
| चतमानः, | चातयमानः, | चिचतिषमाणः, | चाचत्यमानः ; |
| चतिष्यमाणः, | चातयिष्यमाणः, | चिचतिषिष्यमाणः, | चाचतिष्यमाणः ; |
| चत्-चद्-चतौ-चतः ; | — | — | — |
| चतितम्-तः, | चातितः, | चिचतिषितः, | चाचतितः-तवान् ; |
| चतः, | चातः, | चिचतिषुः, | चाचतः ; |
| चतितव्यम्, | चातयितव्यम्, | चिचतिषितव्यम्, | चाचतितव्यम् ; |
| चतनीयम्, | चातनीयम्, | चिचतिषणीयम्, | चाचतनीयम् ; |
| [2]चत्यम्, | चात्यम्, | चिचतिष्यम्, | चाचत्यम् ; |
| ईषच्चतः-दुश्चतः-सुचतः ; | | — | — |
| चत्यमानः, | चात्यमानः, | चिचतिष्यमाणः, | चाचत्यमानः ; |
| चातः, | चातः, | चिचतिषः, | चाचतः ; |
| चतितुम्, | चातयितुम्, | चिचतिषितुम्, | चाचतितुम् ; |
| चत्तिः, | चातना, | चिचतिषा, | चाचता ; |
| चतनम्, | चातनम्, | चिचतिषणम्, | चाचतनम् ; |
| चतित्वा, | चातयित्वा, | चिचतिषित्वा, | चाचतित्वा ; |
| प्रचत्य, | प्रचात्य, | प्रचिचतिष्य, | प्रचाचत्य ; |
| चातम् २, चतित्वा २, | चातम् २, चातयित्वा २, | चिचतिषम् २, चिचतिषित्वा २, | चाचतम् २ ; चाचतित्वा २ ; |

---

[अ] 'चते चदे च याचने' इति क्षीरस्वामिसम्मतः पाठः। चकारः 'परिभाषणे' इति पूर्वधात्वर्थस्याप्यनुवृत्तिसूचकः।

1. 'अत उपधायाः' (7-2-116) इति वृद्धिः।

2. 'तकिशसिचतियतिजनीनामुपसंख्यानम्' (वा. 3-1-97) इति यत्।

A. 'रेटत्तटा या खलु चातकैश्च चाचं जलं प्रोथति दातुमुर्व्याम्॥' धा. का. 2. 25.

[1]चतुरः, [2]चत्वरम्.

(492) " चदि आह्लादने दीप्तौ च " (I-भ्वादिः-68. सक. सेट्. पर.)
चन्दकः-न्दिका, चन्दकः-न्दिका, चिचन्दिषकः-षिका, चाचन्दकः-न्दिका ;
इत्यादीनि सर्वाण्यपि रूपाणि, भौवादिककन्दतिवत् (163) ज्ञेयानि ।
[3]चन्द्रः, [4]चन्दिरः ।

(493) " चदे याचने " ( I-भ्वादिः-866. सक. सेट्. उभ. )
चादकः-दिका, चादकः-दिका, चिचदिषकः-षिका, चाचदकः-दिका ;
इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचतधातुवत् (491) बोध्यानि ।
ण्यति-चाद्यम्[A] ।

(494) " चन च " (I-भ्वादिः-803. सक. सेट्. पर.) घटादिः । [अ]
चकारात् हिंसायामिति पूर्वधातुगतं सम्बध्यते ।
चानकः-निका, [5]चनकः-निका, चिचनिषकः-षिका, [6]चञ्चनकः-निका,
चंचनकः-निका ;

---

1. 'मन्दिवाशि—' [द. उ. 8. 21] इत्यादिनोरच्प्रत्ययः । चत्यतेऽसौ जनैरिति चतुरः=प्रभुर्जनः ।
2. औणादिके [द. उ. 8. 47] ष्वरच् प्रत्यये रूपम् । चतन्तेऽस्मिन् भूतानीति चत्वरम्=चतुष्पथम् । चत्वरी=वेदिः ।
3. 'स्फायितञ्चि—' [द. उ. 8-31] इत्यादिना रक्प्रत्ययः । चन्द्रः=सोमः ।
4. 'इषिमदिमुदि—' [द.उ. 8-26] इत्यादिना किरच् प्रत्ययः । प्राणिनः चन्दयतीति चन्दिरः=शीतकिरणः ।
5. 'घटादयो मितः' (गणसूत्रं भ्वादौ) इति मित्त्वम् । तेन, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाया ह्रस्वः । एवं ण्यन्ते सर्वत्र ज्ञेयम् ।
6. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति, यङन्तेऽभ्यासस्य नुगागमः । 'स च पदान्तवद्वाच्यः' (वा. 7-4-85) इति वचनात् परसवर्णविकल्पः । एवं यङन्ते सर्वत्र रूपद्वयं बोध्यम् ।

A. 'रेटत्तटा या खलु चातकैश्च चाद्यं जलं प्रोथति दातुमुर्व्याम् ॥' धा. का. 2-25.

[अ] अत्र सिद्धान्तकौमुद्याम्, 'चन च' इति घटादिषु पठ्यते । स च न प्रामाणिकः पाठः । 'चन च' इत्येव भाव्यम् । अत एव, क्षीरस्वामि-माधव-नारायणभट्टादिभिः हिंसार्थकत्वेन चनधातुः घटादौ पठितः, व्याख्यातश्च । " तञ्जावूर् सरस्वतीमहाल् " ग्रन्थालये मुद्रिते पाणिनीय-धातुपाठनामके कोशेऽपि, 'चन च' इत्येव दृश्यते । अतः बहुकोशप्रमाणानु-सारेण हिंसार्थकचनधातो रूपाणि प्रदर्शितानि । 'चनु च' इति क्षीरस्वामि-पाठः । तदानीमुदित्त्वेन क्त्वायामिड्विकल्पः । तेन चनित्वा-चान्त्वा, इति रूपद्वयमिति विशेषः ।

चनिता-त्री, चनयिता-त्री, चिचनिषिता-त्री, चञ्चनिता-त्री ;

चनन्-न्ती, चनयन्-न्ती, चिचनिषन्-न्ती ; —

चनिष्यन्-न्ती-ती, चनयिष्यन्-न्ती-ती, चिचनिषिष्यन्-न्ती-ती ; —

— चनयमानः, चनयिष्यमाणः, — चञ्चन्यमानः, चञ्चनिष्यमाणः ;

[1]विचान्-विचानौ-विचानः, — — —

चनितम्-तः, चनितः, चिचनिषितः, चञ्चनितः-तवान् ;

चनः, चनः, चिचनिषुः, चञ्चनः ;

चनितव्यम्, चनयितव्यम्, चिचनिषितव्यम्, चञ्चनितव्यम् ;

चननीयम्, चननीयम्, चिचनिषणीयम्, चञ्चननीयम् ;

चान्यम्, चन्यम्, चिचनिष्यम्, चञ्चन्यम् ;

ईषच्चनः-दुश्चनः-सुचनः ; — —

चन्यमानः, चन्यमानः, चिचनिष्यमाणः, चञ्चन्यमानः ;

चानः, चनः, चिचनिषः, चञ्चनः ;

चनितुम्, चनयितुम्, चिचनिषितुम्, चञ्चनितुम् ;

[2]चान्तिः, चनना, चिचनिषा, चञ्चना ;

चननम्, चननम्, चिचनिषणम्, चञ्चननम् ;

चनित्वा, चनयित्वा, चिचनिषित्वा, चञ्चनित्वा ;

प्रचन्य, [3]प्रचनय्य, प्रचिचनिष्य, प्रचञ्चन्य ;

चानम् २, चनित्वा २, } [4]चनम् २, चानम् २, चनयित्वा २, } चिचनिषम् २, चिचनिषित्वा २, } चञ्चनम् २ ; चञ्चनित्वा २. }

## (495) "चन श्रद्धोपहननयोः"

(X-चुरादिः-1841. सक. सेट्. उभ.) आधृषीयः ।

"तनु श्रद्धोपकरणयोः, उपसर्गात् दैर्घ्ये च" इत्यस्य पाठान्तरमिदम् । अस्य, आधृषीयत्वेन णिचो वैकल्पिकत्वात्, णिजभावपक्षे शुद्धात्-सन्नन्तात्

---

1. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घः ।
2. 'अनुनासिकस्य—' (6-4-15) इति दीर्घे, 'तितुत्रत—' (7-2-9) इतीण्णिषेधः ।
3. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
4. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति ण्यन्ताण्णमुलि दीर्घविकल्पः ।

दङन्ताच्च भौवादिकचनधातुवत् (494) रूपाणि ज्ञेयानि। ण्यन्तात्, ण्यन्तप्रकृतिकसन्नन्ताच्च इमानि रूपाणि —

चानकः-निका, चिचानयिषकः-षिका; चानयिता-त्री, चिचानयिषिता-त्री;
चानयन्-न्ती, चिचानयिषन्-न्ती; चानयिष्यन्-न्ती-ती, चिचानयिषिष्यन्-न्ती-ती;
चानयमानः, चिचानयिषमाणः; चानयिष्यमाणः, चिचानयिषिष्यमाणः;
विचान्-विचानौ-विचानः; — —
चानितः, चिचानयिषितः-तवान्; चानः, चिचानयिषुः;
चानयितव्यम्, चिचानयिषितव्यम्; चाननीयम्, चिचानयिषणीयम्;
चान्यम्, चिचानयिष्यम्; ईषच्चानः-दुश्चानः-सुचानः;
चान्यमानः, चिचानयिष्यमाणः; चानः, चिचानयिषः;
चानयितुम्, चिचानयिषितुम्; चानना, चिचानयिषा;
चाननम्, चिचानयिषणम्; चानयित्वा, चिचानयिषित्वा;
प्रचान्य, प्रचिचानयिष्य; चानम् २, } चिचानयिषम् २; }
चानयित्वा २, } चिचानयिषित्वा २. }

## (496) "चन्चु गतौ" (I-भ्वादिः-190. सक. सेट्. पर.)

[1]चञ्चकः-ञ्चिका, चञ्चकः-ञ्चिका, चिचञ्चिषकः-षिका, [2]चाचचकः-चिका;
चञ्चिता-त्री, चञ्चयिता-त्री, चिचञ्चिषिता-त्री, चाचचिता-त्री;
चञ्चन्-न्ती चञ्चयन्-न्ती, चिचञ्चिषन्-न्ती; —
चञ्चिष्यन्-न्ती-ती, चञ्चयिष्यन्-न्ती-ती, चिचञ्चिषिष्यन्-न्ती-ती; —
— चञ्चयमानः, चञ्चयिष्यमाणः, — चाचच्यमानः, चाचचिष्यमाणः;
[3]चक्-चग्-चचौ-चचः; — —
[4]चक्तम्-चक्तः-चक्तवान्, चञ्चितः, चिचञ्चिषितः, चाचचितः-तवान्;

---

1. उपदेशी नकारोपधोऽयं धातुः। नकारस्य, 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारः। तस्य, 'अनुस्वारस्य ययि परसवर्णः' (8-4-58) इति परसवर्णो ञकारः। एवं सर्वत्र ज्ञेयम्।
2. अन्तरङ्गत्वेन यङ्निमित्तकः धातोरुपधाभूतनकारस्य लोपः। अनन्तरं यलोपाल्लोपौ। एवं यङन्ते सर्वत्र बोध्यम्।
3. क्विपि, उपधानकारलोपे, कुत्वे चर्त्वविकल्पे च रूपम्।
4. उदित्त्वेन क्त्वायामिड्विकल्पनात्, निष्ठायाम्, 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः। 'अनिदितां हल उपधायाः क्ङिति' (6-4-24) इत्युपधानकारलोपः। धातोर्गत्यर्थत्वेन, 'क्तोऽधिकरणे च' (3-4-76) इति, 'गत्यर्थाकर्मक—(3-4-72) इत्यनेन चाधिकरणे, कर्तरि च क्तप्रत्ययो ज्ञेयः।

चञ्चः-[1]चञ्चा, चञ्चः, चिचञ्चिषुः, चाचञ्चः ;
चञ्चितव्यम्, चञ्चयितव्यम्, चिचञ्चिषितव्यम्, चाचचितव्यम् ;
चञ्चनीयम्, चञ्चनीयम्, चिचञ्चिषणीयम्, चाचचनीयम् ;
[2]चङ्क्यम्, चञ्च्यम्, चिचञ्चिष्यम्, चाचच्यम् ;
ईषच्चञ्चः-दुश्चञ्चः-सुचञ्चः ; — —
[3]चच्यमानः, चञ्च्यमानः, चिचञ्चिष्यमाणः, चाचच्यमानः ;
चङ्कः, चञ्चः, चिचञ्चिषः, चाचचः ;
चञ्चितुम्, चञ्चयितुम्, चिचञ्चिषितुम्, चाचचितुम् ;
चक्तिः, चञ्चना, चिचञ्चिषा, चाचचा ;
चञ्चनम्, चञ्चनम्, चिचञ्चिषणम्, चाचचनम् ;
[4]चञ्चित्वा-चक्त्वा, चञ्चयित्वा, चिचञ्चिषित्वा, चाचचित्वा ;
प्रचच्य, प्रचञ्च्य, प्रचिचञ्चिष्य, प्रचाचच्य ;
चञ्चम् २, चञ्चित्वा २, चक्त्वा २, } चञ्चम् २, चञ्चयित्वा २, } चिचञ्चिषम् २, चिचञ्चिषित्वा २, } चाचचम् २ ; चाचचित्वा २. }

## (497) " चप सान्त्वने " (I-भ्वादिः-399. सक. सेट्. पर.)

चापकः-पिका, चापकः-पिका, चिचपिषकः-षिका, चाचपकः-पिका ;
चपिता-त्री, चापयिता-त्री, चिचपिषिता-त्री, चाचपिता-त्री ;
चपन्-न्ती, चापयन्-न्ती, चिचपिषन्-न्ती ; —
चपिष्यन्-न्ती-ती, चापयिष्यन्-न्ती-ती, चिचपिषिष्यन्-न्ती-ती ; —
— चापयमानः, चापयिष्यमाणः, — चाचप्यमानः, चाचपिष्यमाणः ;
सुचप्-सुचपौ-सुचपः ; — — —

---

1. पचाद्यचि (3-1-134) स्त्रियां टाप्। 'चञ्चा तृणमयः पुमान्' इति मेदिनीकोशः।
2. निष्ठायामनिट्त्वात्, 'चजोः कु घिण्यतोः' (7-3-52) इति कुत्वम्। एवं घञ्यपि कुत्वं बोध्यम्।
3. 'अनिदिताम्—' (6-4-24) इत्युपधानकारलोपः।
4. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे, 'न क्त्वा सेट्' (1-2-18) इति सेटः क्त्वायाः कित्त्वनिषेधात् नकारलोपो न।

चपितम्-तः, चापितः, चिचपिषितः, चाचपितः-तवान् ;
[1]चपः, चापः, चिचपिषुः, चाचपः ;
चपितव्यम्, चापयितव्यम्, चिचपिषितव्यम्, चाचपितव्यम् ;
चपनीयम्, चापनीयम्, चिचपिषणीयम्, चाचपनीयम् ;
[2]चप्यम्, चाप्यम्, चिचपिष्यम्, चाचप्यम् ;
ईषच्चपः-दुश्चपः-सुचपः ; — —
चप्यमानः, चाप्यमानः, चिचपिष्यमाणः, चाचप्यमानः ;
चापः, चापः, चिचपिषः, चाचपः ;
चपितुम्, चापयितुम्, चिचपिषितुम्, चाचपितुम् ;
चप्तिः, चापना, चिचपिषा, चाचपा ;
चपनम्, चापनम्, चिचपिषणम् ; चाचपनम् ;
चपित्वा, चापयित्वा, चिचपिषित्वा, चाचपित्वा ;
प्रचप्य, प्रचाप्य, प्रचिचपिष्य, प्रचाचप्य ;
चापम् २, चपित्वा २, } चापम् २, चापयित्वा २, } चिचपिषम् २, चिचपिषित्वा २, } चाचपम् २ ; चाचपित्वा २. }

## (498) " चप परिकल्कने " (X-चुरादिः-1627. सक. सेट्. उभ.)

### मित् । ज्ञपादिः ।

'चह परिकल्कने' इत्यस्य मैत्रेयरक्षितसम्मतं पाठान्तरमिदम् ।

[3]चपकः-पिका, चिचपयिषकः-षिका ; चपयिता-त्री, चिचपयिषिता-त्री ;
चपयन्-न्ती, चिचपयिषन्-न्ती; चपयिष्यन्-न्ती-ती, चिचपयिषिष्यन्-न्ती-ती ;
चपयमानः, चिचपयिषमाणः ; चपयिष्यमाणः, चिचपयिषिष्यमाणः ;
सुचप्-सुचपौ-सुचपः ; — चपितम्-तः, चिचपयिषितः-तवान् ;
चपः, चिचपयिषुः ; चपयितव्यम्, चिचपयिषितव्यम् ;
चपनीयम्, चिचपयिषणीयम् ; चप्यम्, चिचपयिष्यम् ;

---

1. चपः=वृक्षविशेषः इति मैत्रेयरक्षितः । वेणुविशेष इति दण्डनाथः । चपस्य विकारः चापम् । 'तालादिभ्योऽण्' (4-3-152) इति विकारार्थेऽण् ।
2. 'पोरदुपधात्' (3-1-98) इति यत् ।
3. 'ज्ञपादयो मितः' (गणसूत्रम् चुरादौ) इति मित्संज्ञायाम्, 'अत उपधायाः' (7-2-116) इति वृद्धौ सत्यां 'मितां ह्रस्वः' (6-4-92) इति णावुपधाया ह्रस्वः ।

ईषच्चपः-दुश्चपः-सुचपः ; — चप्यमानः, चिचपयिष्यमाणः ;
चपः, चिचपयिषः; चपयितुम्, चिचपयिषितुम् ;
चपना, चिचपयिषा ; चपनम्, चिचपयिषणम् ;
चपयित्वा, चिचपयिषित्वा ; [1]प्रचपय्य, प्रचिचपयिष्य ;
[2]चपम् २, चापम् २, चपयित्वा २, } चिचपयिषम् २ ; चिचपयिषित्वा. }

## (499) "चपि गत्याम्" (X-चुरादिः-1620. सक. सेट्. उभ.)

[3]चम्पकः-म्पिका; [4]चिचम्पयिषकः-षिका, [5]चम्पकः-म्पिका, चिचम्पिषकः-षिका, [6]चाचम्पकः-म्पिका ;
चम्पयिता-त्री, चिचम्पयिषिता-त्री, चम्पिता-त्री, चिचम्पिषिता-त्री. चाचम्पिता-त्री ;
चम्पयन्-न्ती, चिचम्पयिषन्-न्ती [7]चम्पन्-न्ती, चिचम्पिषन्-न्ती ; —
चम्पयिष्यन्-न्ती-ती, चिचम्पयिषिष्यन्-न्ती-ती चम्पिष्यन्-न्ती-ती, चिचम्पिषिष्यन्-न्ती-ती ; —
चम्पयमानः, चिचम्पयिषमाण; — चाचम्प्यमानः ;
चम्पयिष्यमाणः, चिचम्पयिषिष्यमाणः, — चाचम्पिष्यमाणः ;
[8]चन्-चम्पौ-चम्पः ; — — — —
चम्पितम्-तः, चिचम्पयिषितः, चम्पितः, चिचम्पिषितः, चाचम्पितः-तवान् ;
चम्पः, चिचम्पयिषुः, चम्पः, चिचम्पिषुः, चाचम्पः ;
चम्पयितव्यम्, चिचम्पयिषितव्यम्, चम्पितव्यम्, चिचम्पिषितव्यम्, चाचम्पितव्यम् ;

---

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
2. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।
3. 'इदितो नुम् धातोः' (7-1-58) इति नुम् । 'णेरनिटि' (6-4-51) इति णिलोपः ।
4. ण्यन्तात् सनि, द्वित्वे, णेर्गुणायादेशौ । एवमुत्तरत्रापि बोध्यम् ।
5. इदित्त्वेन णिचो वैकल्पिकत्वात्, णिजभावपक्षे रूपाणि लिखितानि ।
6. अस्य धातोरिदित्त्वेन, 'अनिदिताम्—' (6-4-24) इति यङ्निमित्तकः नलोपो न ।
7. णिजभावपक्षे, 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदमेव ।
8. पदान्तनिमित्तके संयोगान्तलोपे रूपम् ।

चम्पनीयम्, चिचम्पयिषणीयम्, चम्पनीयम्, चिचम्पिषणीयम्, चाचम्पनीयम्;
चम्प्यम्, चिचम्पयिष्यम्, चम्प्यम्, चिचम्पिष्यम्, चाचम्प्यम्;
ईषच्चम्पः-दुश्चम्पः-सुचम्पः; — — —
चम्प्यमानः, चिचम्पयिष्यमाणः, चम्प्यमानः, चिचम्पिष्यमाणः, चाचम्प्यमानः;
[A]प्रचम्पः, चिचम्पयिषः, चम्पः, चिचम्पिषः, चाचम्पः;
चम्पयितुम्, चिचम्पयिषितुम्, चम्पितुम्, चिचम्पिषितुम्, चाचम्पितुम्;
चम्पना, चिचम्पयिषा, चम्पा, चिचम्पिषा, चाचम्पा;
चम्पनम्, चिचम्पयिषणम्, चम्पनम्, चिचम्पिषणम्, चाचम्पनम्;
चम्पयित्वा, चिचम्पयिषित्वा, चम्पित्वा, चिचम्पिषित्वा, चाचम्पित्वा;
प्रचम्प्य, प्रचिचम्पयिष्य, प्रचम्प्य, प्रचिचम्पिष्य, प्रचाचम्प्य;
चम्पम् २, चम्पयित्वा २, } चिचम्पयिषम् २, चिचम्पयिषित्वा २, } चम्पम् २, चम्पित्वा २, } चिचम्पिषम् २, चिचम्पिषित्वा २, } चाचम्पम् २; चाचम्पित्वा २. }

## (500) " चमु अदने " (I-भ्वादिः-469. सक. सेट्. पर.)

[1]आचामकः-चमकः-विचमकः-मिका, [2]चामकः-विचामकः-मिका, चिचमिषकः-षिका, [3]चञ्चमकः-चंचमकः-मिका;
चमिता-त्री, चामयिता-त्री, चिचमिषिता-त्री, चञ्चमिता-त्री;

---

1. 'अत उपधायाः' (7-2-116) इति प्राप्तायाः वृद्धेः, 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति निषेधो न; 'अनाचमेः' इति पर्युदासात्। अन्यत्र निषेधो भवत्येव। एवं घञि, णमुलि च ज्ञेयम्।

2. अमन्तत्वेन प्राप्तस्य मित्त्वस्य, 'न कम्यमिचमाम्' (गणसूत्रं भ्वादौ) इति निषेधात्, उपधाह्रस्वो न। एवं ण्यन्ते सर्वत्र ज्ञेयम्।

3. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति अभ्यासस्य नुगागमः। यलोपाल्लोपौ। 'स च पदान्तवद् वाच्यः' (वा. 7-4-85) इति वचनात् 'वा पदान्तस्य' (8-4-59) इति परसवर्णविकल्पः। एवं यङन्ते सर्वत्र ज्ञेयम्।

A. 'सुभ्राजितेन मनसा परिमार्ग्य एषां तोषं व्यधुलक्रयदसौ नयनप्रचम्पैः॥'
धा. का. 3-23.

चमन्-विचमन्-[1]आचामन्-न्ती, [2]चामयन्-न्ती, चिचमिषन्-न्ती ; —
चमिष्यन्-न्ती-ती, चामयिष्यन्-न्ती-ती, चिचमिषिष्यन्-न्ती-ती ;
— — चञ्चम्यमानः, चञ्चमिष्यमाणः ;
[3]आचान्-आचामौ-आचामः ; — —
[4]आचान्तम्[A]-आचान्तः-आचान्तवान्, चामितः, चिचमिषितः,
चञ्चमितः-तवान् ;
चमः, [5]आचामी, चामः, चिचमिषुः, चञ्चमः ;
चमितव्यम्, चामयितव्यम्, चिचमिषितव्यम्, चञ्चमितव्यम् ;
चमनीयम्, चामनीयम्, चिचमिषणीयम्, चञ्चमनीयम् ;
[6]आचाम्यम्,[B] विचम्यम्-चम्यम्, चाम्यम्, चिचमिष्यम्, चञ्चम्यम् ;
ईषच्चमः-दुश्चमः-सुचमः ; — —
चम्यमानः, चाम्यमानः, चिचमिष्यमाणः, चञ्चम्यमानः ;
आचामः-विचमः-सुचमः, चामः, चिचमिषः, चञ्चमः ;

---

1. 'ष्ठिवुक्लमुचमां शिति' (7-3-75) इत्यत्र, 'आङि चम इति वक्तव्यम्' (वा. 7-3-75) इति वचनात् आङुपसृष्टे शतरि दीर्घः । अन्योपसृष्टस्य, शुद्धस्य च धातोर्दीर्घो न ।
2. 'निगरणचलनार्थेभ्यश्च' (1-3-87) इति ण्यन्तात् परस्मैपदमेव ।
3. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-51) इत्यनेन दीर्घे, 'मो नो धातोः' (8-2-64) इति पदान्ते नकारः ।
4. उदित्वेन क्त्वायां विकल्पितेट्कत्वात्, 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधः । 'अनुनासिकस्य—' (6-4-15) इति दीर्घे, 'नश्चापदान्तस्य झलि' (8-3-24) इत्यनुस्वारे, 'अनुस्वारस्य ययि—' (8-4-58) इति परसवर्णे च रूपम् । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (3-4-76) इति अधिकरणे, कर्तरि, भावकर्मणोश्च क्तप्रत्ययः यथासम्भवं भवति ।
5. 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।
6. 'आसुयुवपिरपिलपित्रपिचमश्च' (3-1-126) इति ण्यत् । 'पोरदुपधात्' (3-1-98) इति प्राप्तस्य यतोऽपवादः । 'अत उपधायाः' (7-2-116) इति वृद्धिः । 'विचम्यम्-चम्यम्' इत्यत्र, 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिनिषेधः ।

A. 'चान्तामिषश्छान्तजलः फलावलीं जान्त्वा क्षमञ्जमनमक्रमीद् गुहाम् ॥'
धा. का. 1. 60.

B. 'आचाम्यं सन्ध्ययोः कच्चित् सम्यक् ते न प्रहीयते ।
कच्चिदग्निमिवानाय्यं काले सम्मन्यसेऽतिथिम् ॥' भ. का. 6-66.

चमितुम्, चामयितुम्, चिचमिषितुम्, चञ्चमितुम्;
[1]चान्तिः, चामना, चिचमिषा, चञ्चमा;
आचमनम्, चामनम्, चिचमिषणम्, चञ्चमनम्;
[2]चमित्वा-चान्त्वा, चामयित्वा, चिचमिषित्वा, चञ्चमित्वा;
आचम्य, आचाम्य, आचिचमिष्य, आचञ्चम्य;

चमम् २, आचामम् २, चमित्वा २, चान्त्वा २, } चामम् २, चामयित्वा २, } चिचमिषम् २, चिचमिषित्वा २, } चञ्चमम् २; चञ्चमित्वा २; }

[3]चमूः,[A] [4]चमटः, [5]चमसः.

**(501) "चमु भक्षणे"** (V-स्वादिः-1274. सक. सेट्. प.) छान्दसः।

चमकः-आचामकः-मिका, चामकः-मिका, चिचमिषकः-षिका, चञ्चमकः-चञ्चमकः-मिका;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकभक्षणार्थकचमुधातुवत् (500) बोध्यानि। [6]चम्नुवन्-चम्नुवती, इति शतरि परं विशेषः। [7]मखचमी[B]।

---

1. 'तितुत्रतथ—' (7-2-9) इतीण्णिषेधे, दीर्घे, अनुस्वारे, परसवर्णे च रूपम्।
2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इडभावपक्षे दीर्घानुस्वारपरसवर्णा बोध्याः।
3. 'कृषिचमितनि—' [द. उ. 1-164] इति ऊप्रत्ययः। चमूः=सेना।
4. 'शकादिभ्योऽटन्' [द. उ. 5-2] इत्यटन् प्रत्ययः। चमतीति चमटः=घस्मरः।
5. 'अत्यविचमि—' [द. उ. 9-44] इत्यादिना असच् प्रत्ययः। चमति अस्मिन् इति चमसः=यज्ञीयपात्रविशेषः।
6. 'स्वादिभ्यः श्नुः' (3-1-73) इति श्नुः विकरणप्रत्ययः। संयोगपूर्वकत्वात्, 'अचि श्नुधातुभ्रुवाम्—' (6-4-77) इत्युवङादेशः। अस्य धातोः छान्दसत्वात् 'छन्दसि दृष्टानुविधिः' इति न्यायोऽनुसन्धेयः।
7. मखं चम्नोतीति मखचमी। 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः। 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिप्रतिषेधः।

A. 'अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः।
मेजे दिशः परित्यक्तमहेष्वासा च सा चमूः॥' किरातार्जुनीये-15-1.

B. 'क्ष्मां दघ्नुवन् मखचमिव्यसनानि रिण्वन्
ऋक्षिण्वतां चिरयणैरपथं जिरिण्वन्।' धा. का. 2-71.

(502) " चय गतौ " (1-भ्वादिः-478. सक. सेट्. आत्म.)

| | | | |
|---|---|---|---|
| चायकः-यिका, | चायकः-यिका, | चिचयिषकः-षिका, | चाचयकः-यिका ; |
| चयिता-त्री | चाययिता-त्री, | चिचयिषिता-त्री, | चाचयिता-त्री ; |
| — | चाययन्-न्ती, | चाययिष्यन्-न्ती-ती ; | — |
| चयमानः, | चाययमानः, | चिचयिषमाणः, | चाचय्यमानः ; |
| चयिष्यमाणः, | चाययिष्यमाणः, | चिचयिषिष्यमाणः, | चाचयिष्यमाणः ; |
| [1]प्रचत्-प्रचतौ-प्रचतः ; | | — | — |
| [A]आचयितम्-तः, | चायितः, | चिचयिषितः, | चाचयितः-तवान् ; |
| चयः, [2]चयिता, [3]प्रचायी, | चायः, | चिचयिषुः, | चाचयः ; |
| चयितव्यम्, | चाययितव्यम्, | चिचयिषितव्यम्, | चाचयितव्यम् ; |
| चयनीयम्, | चायनीयम्, | चिचयिषणीयम्, | चाचयनीयम् ; |
| चाय्यम्, | चाय्यम्, | चिचयिष्यम्, | चाचय्यम् ; |
| ईषच्चयः-दुश्चयः-सुचयः ; | | — | — |
| चय्यमानः, | चाय्यमानः, | चिचयिष्यमाणः, | चाचय्यमानः ; |
| चायः, | चायः, | चिचयिषः, | चाचयः ; |
| चयितुम्, | चाययितुम्, | चिचयिषितुम्, | चाचयितुम् ; |
| [4]चतिः, | चायना, | चिचयिषा, | चाचया ; |
| चयनम्, | चायनम्, | चिचयिषणम्, | चाचयनम् ; |
| चयित्वा, | चाययित्वा, | चिचयिषित्वा, | चाचयित्वा ; |
| प्रचय्य, | प्रचाय्य, | प्रचिचयिष्य, | प्रचाचय्य ; |
| चायम् २, चयित्वा २, | चायम् २, चाययित्वा २, | चिचयिषम् २, चिचयिषित्वा २, | चाचयम् २ ; चाचयित्वा २. |

1. प्रकर्षेण चयते=गच्छतीति विग्रहे प्रचत् । क्विपि, 'लोपो व्योर्वलि' (6-1-66) इति यकारलोपे, 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक् ।
2. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति विहितस्य युचः, 'न यः' (3-2-152) इति निषेधात् ताच्छीलिकः 'तृन्' (3-2-135) इति तृन्नेव ।
3. 'सुप्यजातौ—' (3-2-78) इति ताच्छीलिको णिनिप्रत्ययः ।
4. क्तिनि, 'तितुत्रतथ—' (7-2-9) इतीण्णिषेधे, 'लोपो व्योर्वलि' (6-1-66) इति यकारलोपे रूपम् ।

A. 'अन्तस्थया कौतुकमूर्च्छया व्रजं तदायतासौ वयमानवात्सकम् ।
पयः प्रदोहादिरताः प्रमथ्य तं प्रैक्षन्त नूत्नाचयितं कुतूहलात् ॥' धा. का. 1-61.

(503) " चर गत्यर्थः " (I-भ्वादिः-559. सक. सेट्. पर.) [अ]

अयं धातुर्भक्षणार्थेऽपि प्रयुज्यते ।

'संशये चारयेत्, गत्यां चरति—' (श्लो. 153) इति देवः ।

चारकः-रिका, चारकः-रिका, चिचरिषकः-षिका, [1]चञ्चुरकः-रिका;
चरिता-त्री, चारयिता-त्री, चिचरिषिता-त्री, चञ्चुरिता-त्री;
चरन्-न्ती, [2]चारयन्-न्ती, चिचरिषन्-न्ती; —
चरिष्यन्-न्ती-ती, चारयिष्यन्-न्ती-ती, चिचरिषिष्यन्-न्ती-ती; —
[3][गुरुवचनं][A] उच्चरमाणः, [4] [रथेन] [B]सञ्चरमाणः, चारयमाणः,
[5][गुरुवचनं] उच्चिचरिषमाणः, [5][हयेन] सञ्चिचरिषमाणः, [6]चञ्चूर्यमाणः[C];
उच्चरिष्यमाणः, सञ्चरिष्यमाणः, चारयिष्यमाणः, उच्चिचरिषिष्यमाणः;

---

1. गर्हितं चरतीत्यर्थे, 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' (3-1-24) इति भावगर्हायां यङि, द्वित्वे, 'चरफलोश्च' (7-4-87) इत्यभ्यासस्य नुगागमे, 'उत् परस्यातः' (7-4-88) इत्युत्तरखण्डस्योत्वे, 'हलि च' (8-2-77) इति दीर्घस्य त्रैपादिकत्वेनासिद्धत्वात् अल्लोपयलोपयोः एवं रूपम्। हलादिप्रत्ययभिन्ने यङन्ते सर्वत्र एवमेव बोध्यम्।

2. भक्षणार्थत्वे, 'निगरणचलनार्थेभ्यः—' (1-3-87) इति ण्यन्तात् परस्मैपदमेव। गत्यर्थकत्वे तु ण्यन्तात् शानजपि भवतीति विशेषः।

3. 'उदः चरः सकर्मकात्' (1-3-53) इति शानच्। गुरुवचनमतिलङ्घते इत्यर्थः। अतः सकर्मकत्वम्।

4. 'समस्तृतीयायुक्तात्' (1-3-54) इति शानच्।

5. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात् शानच्।

6. 'हलि च' (8-2-77) इति दीर्घः। एवं यङन्ताद् यति, ल्यपि च दीर्घो ज्ञेयः।

A. 'इदं वचोऽनुच्चरमाणं इते तस्मिन् स्वमादाय शिशुं निकाय्यम्।
आनाय्यपूज्यो, मधुरां प्रणाय्यस्तां नारदः स्मायति लोकपान्थः॥' वा. वि. 2-20.

B. 'अग्रेण खे सञ्चरमाण आराद् विलेशयद्वेषिसमानजूतिः।
प्राह्णेतनादित्यकरोपतप्तः पुरीं ददृश्वान् गजताव्रतां सः॥' वा. वि. 2-23.

C. 'ध्वजपल्लविता सेना शस्त्रपुष्पा परागिणी।
बभौ चञ्चूर्यमाणेव मृत्योरुपवनस्थली॥' यादवाभ्युदये. 22-74.

[अ]. 'यथा तु भक्षणेऽपि प्रयुज्यते चरिः' इति मैत्रेयरक्षितः, तथा नायं पाठोऽस्ति। अपि तु अर्थवशेन केनचित् प्रक्षिप्त इति गम्यते।" इति पुरुषकारग्रन्थोऽत्रानुसन्धेयः।

सञ्चिचरिषिष्यमाणः, चञ्चुरिष्यमाणः ;
[1]ग्रामचः-ग्रामचरौ-ग्रामचरः ; — —
चरितम्-तः, चारितः, चिचरिषितः, चञ्चुरितः-तवान् ;
[2]चरः-[A]सहचरी, [3]चराचरः, [4]शुभाचारः-शुभाचारा [B]व्रताचारा, [5]कुरुचरः-कुरुचरी, [C]क्षणदाचरः, [D]वनेचरः, [E]निशाचरः, [6]भिक्षाचरः-सेनाचरः, [F]दुराचारः, आदायचरः, [7]चरिष्णुः,[G] [8]ब्रह्मचारी,[H]

---

1. 'क्विप् च' (3-2-76) इति क्विपि, सर्वलोपे, रेफस्य पदान्तत्वनिमित्तकः 'खरवसानयोः—' (8-3-15) इति विसर्गः।
2. पचादिषु (3-1-134) '**चरट्**' इति पाठात् अच्। टित्त्वात् स्त्रियां ङीप्।
3. '**चरि**चलिपतिवदीनां वा द्वित्वम् अचि, आक् चाभ्यासस्य—' (वा. 3-1-134) इति अच्प्रत्यये, द्वित्वे, अभ्यासस्यागागमे च रूपम्।
4. 'शीलिकामिभक्ष्या**चरिभ्यो** णः' (वा. 3-2-21) इति कर्मण्युपपदेऽणपवादो ण-प्रत्ययः। अदन्तत्वेन स्त्रियां टाप्।
5. '**चरेष्टः**' (3-2-16) इति अधिकरणे टः। एवं **क्षणदाचरः वनेचरः निशाचर** इत्यादिष्वपि बोध्यम्।
6. 'भिक्षासेनादायेषु च' (3-2-17) इति टः। अनधिकरणे उपपदेऽयं टः। **आदाय-चरः** इत्यत्र 'आदाय' इति ल्यबन्तम्। 'अस्य च कर्मसापेक्षत्वेऽपि वचनसामर्थ्यात् प्रत्ययः।' इति **प्रक्रियाकौमुदीव्याख्यायाम्**।
7. 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसह**चर** इष्णुच्' (3-2-36) इत्यनेन तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययः।
8. 'व्रते' (3-2-80) इति णिनिः। **ब्रह्म**=वेदः। तदध्ययनार्थं व्रतमपि **ब्रह्म**; तच्चरतीत्यर्थे णिनिः।

A. 'सौमित्रे मामुपायंस्था कम्रामिच्छुर्वशंवदाम्।
त्वद्भोगीनां **सहचरी**मशङ्कः पुरुषायुषम् ॥' भ. का. 4-20.
B. 'स्तुतिशीला हरिकामा फलभक्षा कानने **व्रताचारा**।
तदनुग्रहप्रतीक्षा वसति द्वन्द्वक्षमा मुनिश्रेणी ॥' **प्रक्रियासर्वस्वम्**।
C. 'तेऽभाषिषत राजा त्वां दिदृक्षुः **क्षणदाचर**।' भ. का. 15-6.
D. 'द्विषन् **वनेचरा**ग्र्याणां त्वमा**दायचरो** वने।' भ. का. 5-97.
E. 'बाहूपपीडमाश्लिष्य जगाहे वां **निशाचरः** ॥' भ. का. 5-94.
F. 'मामपापं **दुराचार** किं निहत्याभिधास्यसि ॥' भ. का. 6-127.
G. 'अलङ्करिष्णवो भान्तस्तडित्वन्त**श्चरिष्णवः** ॥' भ. का. 7-3.
H. 'आजन्म**ब्रह्मचारी** विपुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः।' **अनर्घराघवे**—4-18.

[1]गूढचारी.[A] [2]रात्रिञ्चर:-[B] रात्रिचरः, [3]अतिचारी-अपचारी, [4]चारः, [5]चरमाणः,[C] [6]चरणः, [7]पाटच्चरः-पटच्चरः, [8]वार्चः[हंसः], चारः, चिचरिषुः, चञ्चुरः ;

चरितव्यम्, चारयितव्यम्, चिचरिषितव्यम्, चञ्चुरितव्यम् ;
चरणीयम्, चारणीयम्, चिचरिषणीयम्, चञ्चुरणीयम् ;
[9]चर्यम्, उपचार्यम् [10]आचर्यः [देशः], आचार्यः [गुरुः], [11]आचार्यानी, आचार्या, [12]आश्चर्यम् [अनित्यम्], चार्यम्, चिचरिष्यम्, चञ्चूर्यम् ;
ईषच्चरः-दुश्चरः-सुचरः ; — — —

---

1. 'सुप्यजातौ—' (3-2-78) इति ताच्छीलिको णिनिः । गूढचारी=चारः ।
2. रात्रौ चरतीति, अधिकरणे टः । 'रात्रेः कृति विभाषा' (6-3-72) इति वा मुम् ।
3. 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च' (3-2-142) इति घिनुण् ।
4. पचाद्यचि (3-1-134) प्रज्ञादित्वात् (5-4-38) स्वार्थेऽण् । चारः गूढपुरुषः ।
5. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति सूत्रेण ताच्छील्ये चानश् ।
6. 'चलनशब्दार्थादकर्मकात्—(3-2-148) इति ताच्छीलिकः युच् ।
7. पाटयन्=छिन्दन्-चरतीति पाटच्चरः=तस्करः । पृषोदरादित्वात् (6-3-109) साधुः । एवं पटच्चरः इत्यपि ।
8. वारि चरतीति वार्चः=हंसः । 'अन्येष्वपि दृश्यते' (3-2-101) इति डप्रत्यये साधुः—इति प्रक्रियासर्वस्वे ।
9. 'गदमदचरयमश्चानुपसर्गे' (3-1-100) इति यति रूपम् । 'अनुपसर्गे' इत्युक्तत्वात् सोपसर्गात् 'उपचार्यम्' इत्येव ।
10. 'चरेराङि चागुरौ' (वा. 3-1-100) इति यत् । गुरौ तु 'आचार्यः' इति ण्यत् ।
11. आचार्यस्य स्त्री आचार्यानी । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' (4-1-49) इति ङीप् आनुगागमश्च । 'आचार्यादणत्वं च' (वा. 4-1-49) इति णत्वनिषेधः । यथा तु स्वयं व्याख्यात्री, तत्र आचार्या इत्येव भवति ।
12. 'आश्चर्यमनित्ये' (6-1-174) इति आङ्पूर्वकात् चरेर्यति प्रत्यये, अद्भुतत्वेनार्थे विवक्षिते सुडागमो निपात्यते । अन्यत्र आचर्यः ।

A. 'सन्नमाय निशि गूढचारिणं चारदूतिकथितं पुरोगता ।' रघुवंशे—19-33.
B. 'तं रत्नदायं जितमृत्युलोका रात्रिञ्चराः कान्तिमृतोऽन्वसर्पन् ।' भ. का. 12-11.
C. 'सहैव चरमाणौ द्वौ वहमानौ मितं धनुः ।
जयमानौ च रक्षांसि राघवौ मुनिमन्वितौ ॥' प्रक्रियासर्वस्वे ।

चर्यमाणः, चार्यमाणः, चिचरिष्यमाणः, चञ्चूर्यमाणः ;
आचारः, [A]सञ्चारः, प्रचारः, [1]गोचरः-[B]सञ्चरः, चिचरिषः, सञ्चुरः;
चरितुम्, चारयितुम्, चिचरिषितुम्, चञ्चुरितुम् ;
[2]चूर्तिः, [3]परिचर्या, परिचर्या-[C]चर्या, चारणा, चिचरिषा, चञ्चुरा,
चरणम्, [4]चरित्रम्,[D] चारित्रम्, चारणम्, चिचरिषणम्, चञ्चुरणम् ;
चरित्वा, चारयित्वा, चिचरिषित्वा, चञ्चुरित्वा ;
आचर्य, प्रचार्य, सञ्चिचरिष्य, विचञ्चूर्य ;
चारम् २, चरित्वा २, } चारम् २, चारयित्वा २, } चिचरिषम् २, चिचरिषित्वा २, } चञ्चुरम् २ ; चञ्चुरित्वा २; }
[5]चारुः, [6]चरुः, [7]चरकः, [8]चर्म, [9]चरमः.

---

1. '**गोचरसंचर—**' (3-3-119) इत्यादिनाऽधिकरणे घप्रत्ययो निपातनात्। गावः=इन्द्रियाणि चरन्त्यस्मिन् इति **गोचरः**=विषयः। सञ्चरन्ते अनेन इति करणे घः, **सञ्चरः**=अध्वा।
2. 'ति च' (7-4-89) इत्युत्वे, 'हलि च' (8-2-77) इति दीर्घः।
3. '**परिचर्या**परिसर्या—' (वा. 3-3-101) इति स्त्रियां भावादौ शे यकि टाप्। 'परि' इत्युपसर्गस्याविवक्षितत्वात् '**चर्या**' इत्यपि साधुः।
4. 'अर्तिलूधूसूखनसहचर इत्रः' (3-2-184) इति करणे इत्रः। **चरित्रमेव चारित्रम्**। स्वार्थिकः प्रज्ञादित्वात् (5-4-38) अण्।
5. 'दृसनिजनि**चरि**—' [द. उ. 1-88] इत्यादिना ञुण् प्रत्ययः। चरन्ति नेत्राण्यत्रेत्यधिकरणे प्रत्ययः। **चारुः**=दर्शनीयः।
6. 'भृमृशीतॄ**चरि**—' [द. उ. 1-92] इत्यादिना उप्रत्ययः। चरन्ति अस्मात् देवर्षिपित्रादयः इति 'भीमादयोऽपादाने' (3-4-74) इत्यपादाने कारके प्रत्ययः। **चरुः**=देवाद्युद्देशक उपहारः।
7. 'कृञादिभ्यः संज्ञायां वुन्' [द. उ. 3-48.] इति संज्ञायां वुन्। **चरकः**=कश्चन ऋषिः।
8. 'मनिन्' [द. उ. 6-73] इति मनिन्। चरितं=**चर्म** त्वक्। 'भूतेऽपि दृश्यन्ते' (3-2-3) इति भूतेऽर्थे प्रत्ययः।
9. '**चरेश्च**' [द. उ. 7-47] इति अमच्प्रत्ययः।. **चरमः**=अन्त्यः।

A. '**सञ्चार**निष्ठ्यूतनखेन्दुचन्द्रिकं लोके जयन्तं सकलैकजीवनम्।' धा. का. 1-72.
B. 'पापगो**चर**मात्मानमशोचन् वानरा मुहुः॥' भ. का. 7-80.
C. 'पाप**चर्यो** मुनेः शापात् जात इत्यवदत् स तम्॥' भ. का. 6-48.
D. 'चित्रं **चरित्रं** जगतीतलेऽस्य न श्लाघयामास नरेषु को वा।
स यत् स्वयं पाण्डुरपि स्वकेन गुणेन रक्तानकरोत् समस्तान्॥' **चम्पूभारते** 1-13.

(504) " चर संशये " (X-चुरादिः-1746. सक. सेट्. उभ.)

'संशये चारयेत्, गत्यां चरति ।—' (श्लो. 153) इति देवः ।

चारकः-रिका, चिचारयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि चौरादिकचाटयतिवत् (488) ज्ञेयानि । घञि[A] चारः ।

(505) " चर्च परिभाषणहिंसातर्जनेषु "

(I-भ्वादिः-717. सक. सेट्. पर) [अ]

परिभाषणम्=सनिन्दोपालम्भः ।

'—हिंसायां, तर्जने परिभाषणे ॥

चर्चत्यध्ययने त्वर्थे भवेच्चर्चयतीति णौ ।' (श्लो. 54) इति देवः ।

चर्चकः-र्चिका, चर्चकः-र्चिका, चिचर्चिषकः-षिका, चाचर्चकः-र्चिका ;
चर्चिता-त्री, चर्चयिता-त्री, चिचर्चिषिता-त्री, चाचर्चिता-त्री ;
चर्चन्-न्ती, चर्चयन्-न्ती, चिचर्चिषन्-न्ती ; —
चर्चिष्यन्-न्ती-ती, चर्चयिष्यन्-न्ती-ती, चिचर्चिषिष्यन्-न्ती-ती ; —
चर्चयमानः, चर्चयिष्यमाणः, चाचर्च्यमानः, चाचर्चिष्यमाणः ;
[1]चर्क्-चर्ग्-चर्चौ-चर्चः ; — —
चर्चितम्-तः, चर्चितः, चिचर्चिषितः, चाचर्चितः-तवान् ;
चर्चः, [2]जीमूतचर्ची,[B] चर्चः, चिचर्चिषुः, चाचर्चः ;
चर्चितव्यम्, चर्चयितव्यम्, चिचर्चिषितव्यम्, चाचर्चितव्यम् ;
चर्चनीयम्, चर्चनीयम्, चिचर्चिषणीयम्, चाचर्चनीयम् ;
चर्च्यम्, चर्च्यम्, चिचर्चिष्यम्, चाचर्च्यम् ;
ईषच्चर्चः-दुश्चर्चः-सुचर्चः ; — —

---

1. 'रात् सस्य' (82-2-4) इति नियमात्, चकारस्य न संयोगान्तलोपः ।
2. जीमूतं चर्चितुं=भर्त्सितुं शीलमस्येत्यर्थे, 'सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।

A. 'निर्यातितप्रहृतिमीशमतिप्रहृत्य मल्लोऽथ वासितविचारमचुच्यवत् सः ।'
धा. का. 3-41.

B. 'जीमूतचर्चिरवझर्झरवाद्यहृद्यं तेनैव चानुपिपिसितो निलयं पिपेस ॥'
धा. का. 1-89.

[अ] 'र्जन्स [जर्त्स ?] इति चन्द्रदुर्गौ । वर्च इत्येके । जर्ज इत्यन्ये । झर्च इत्यपरे । किमत्र सत्यम् ? देवा ज्ञास्यन्ति ।' इति क्षीरस्वामी ।

चर्च्यमानः, चर्च्यमानः, चिचर्चिष्यमाणः, चाचर्च्यमानः;
चर्चः, चर्चः, चिचर्चिषः, चाचर्चः;
चर्चितुम्, चर्चयितुम्, चिचर्चिषितुम्, चाचर्चितुम्;
चर्चा, विचर्चिका,[1] [2]व्यावचर्ची, चर्चना, चिचर्चिषा, चाचर्चा;
चर्चनम्, चर्चनम्, चिचर्चिषणम्, चाचर्चनम्;
चर्चित्वा, चर्चयित्वा, चिचर्चिषित्वा, चाचर्चित्वा;
प्रचर्च्य, प्रचर्च्य, प्रचिचर्चिषिष्य, प्राचाचर्च्य;
चर्चम् २, चर्चित्वा २, } चर्चम् २, चर्चयित्वा २, } चिचर्चिषम् २, चिचर्चिषित्वा २, } चाचर्चम् २; चाचर्चित्वा २. }

## (506) "चर्च परिभाषणभर्त्सनयोः"

(VI-तुदादिः-1299. सक. सेट्. पर.)

'—अध्ययने चर्चयेत्, चर्चतीति तु ।

हिंसायां तर्जने शे तु तथैव परिभाषणे ॥' (श्लो. 54) इति देवः ।

चर्चकः-र्चिका, चर्चकः-र्चिका, चिचर्चिषकः-षिका, चाचर्चकः-र्चिका;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचर्चधातुवत् (505) बोध्यानि । शत्रन्ताच्चु स्त्रियाम्, अस्य धातोः चर्चन्ती-[A]चर्चती इति द्वे रूपे इति विशेषः । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम्विकल्पः । स्वरभेदादपि तुदादौ पुनः पाठ इति बोध्यम् ।

## (507) "चर्च अध्ययने" (X-चुरादिः-1713. सक. सेट्. उभ.)

—'अध्ययने चर्चयेत् चर्चतीति तु ।

हिंसायां तर्जने शे तु तथैव परिभाषणे ॥' (श्लो. 54) इति देवः ।

---

1. धातोर्हिंसार्थत्वे, 'रोगाख्यायाम् ण्वुल्—' (3-3-108) इति ण्वुलि रूपम् । इति प्र. कौमुदी ।

2. 'कर्मव्यतीहारे णच् स्त्रियाम्' (3-3-43) इति णच् । युजपवादः । 'णचःस्त्रियामञ्' (5-4-14) इति अञ् । ङीप् ।

A. 'चर्चन्ती कटु झर्झती बुधजनं दोषं त्वचि त्वर्चती
नित्यं भूपतिमुब्जनोज्झितमना यत्रास्त खल्या सुखम् ॥' धा. का. 2-73.

अस्य धातोः ण्यन्ते सर्वाणि रूपाणि भौवादिकचर्चतिवत् (505) बोध्यानि। शतरि [A]सञ्चर्चयन्-न्ती। क्तिन्विषये तु 'ण्यासश्रन्थो युच्' (3-3-107) इति युजपवादः, 'चिन्तिपूजिकथिकुम्बिचर्चेश्च' (3-3-105) इत्यादिना अङ् भवति, इति विशेषः। ण्यन्तात् सनि तु रूपाणि लिख्यन्ते—

चिचर्चयिषकः-षिका, चिचर्चयिषिता-त्री, चिचर्चयिषन्-न्ती, चिचर्चयिषिष्यन्-न्ती-ती; चिचर्चयिषमाणः, चिचर्चयिषिष्यमाणः, चिचर्चयिट्-यिषौ-यिषः, चिचर्चयिषितः-तवान्, चिचर्चयिषुः, चिचर्चयिषितव्यम्, चिचर्चयिषणीयम्, चिचर्चयिष्यम्, ईषच्चिचर्चयिषः इत्यादि, चिचर्चयिष्यमाणः, चिचर्चयिषः, चिचर्चयिषितुम्, चिचर्चयिषा, चिचर्चयिषणम्, चिचर्चयिषित्वा, प्रचिचर्चयिष्य, चिचर्चयिषम् २; चिचर्चयिषित्वा २.

— —

(508) "चर्ब गतौ" (I-भ्वादिः-425. सक. सेट्. पर.)

चर्बकः-र्बिका, चर्बकः-बिंका, चिचर्बिषकः-षिका, चाचर्बकः-र्बिका, इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककर्बधातुवत् (173) ज्ञेयानि।

(509) "चर्व अदने" (I-भ्वादिः-579. सक. सेट्. पर.)

अस्यापि धातोः सर्वाण्यपि रूपाणि कर्वतिवत् (173) बोध्यानि। अस्य धातोः भक्षणार्थत्वेन ण्यन्तात् 'निगरणचलनार्थेभ्यश्च' (1-3-87) इति शतैव। न तु शानजिति विशेषः।

(510) "चल कम्पने" (I-भ्वादिः-832. अक. सेट्. पर.)

घटादिः। ज्वलादिः।

'— भृत्यां चालयेत् कंपने चलेत्।' (श्लो. 158) इति देवः।

चालकः-लिका, चालकः-लिका-[1]चलकः-लिका, चिचलिषकः-षिका, चाचलकः-लिका;

---

1. 'कम्पने चलिः' इति घटादौ पाठात् कम्पनार्थे मित्त्वम्। 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाया ह्रस्वः। कम्पनादन्यार्थे तु मित्त्वं न। शीलं चालयन् = अन्यथा कुर्वन् इत्यर्थः। एवं ण्यन्ते रूपद्वयमर्थभेदेन बोध्यम्।

A. 'सञ्चर्चयन् अपनयानथ वृक्षयिष्णुः श्वेवोप्रशब्दनपरः करदक्षाणः। मल्लो जिजङ्गिषुरसूदितवीर्यमीर्शं मुष्ट्या जजास बहु पाशितवांश्च दोष्णा॥' धा. का. 3-38

चलिता-त्री, चालयिता-चलयिता-त्री, चिचलिषिता-त्री, चाचलिता-त्री ;

चलन्-न्ती, चालयन्-चलयन्[A]-न्ती, चिचलिषन्-न्ती ; —

चलिष्यन्-न्ती-ती, चालयिष्यन्-चलयिष्यन्-न्ती-ती, चिचलिषिष्यन्-न्ती-ती ;

व्यतिचलमानः, व्यतिचलिष्यमाणः, — चाचल्यमानः, चाचलिष्यमाणः ;

चल्-चलौ-चलः ; — --- —

चलितम्-तः, चालितम्-चलितम्-तः, चिचलिषितः, चाचलितः-तवान् ;

[B]चलः-[1]चालः, [2]चलनः, [3]चलाचलः, [4]चाचलिः, चालः-चलः, चिचलिषुः, चाचलः ;

चलितव्यम्, चालयितव्यम्-चलयितव्यम्, चिचलिषितव्यम्, चाचलितव्यम् ;

चलनीयम्, चालनीयम्-चलनीयम्, चिचलिषणीयम्, चाचलनीयम् ;

चाल्यम्, चाल्यम्-चल्यम्, चिचलिष्यम्, चाचल्यम्,

ईषच्चलः-दुश्चलः-सुचलः ; — —

चल्यमानः, चाल्यमानः-चल्यमानः, चिचलिष्यमाणः, चाचल्यमानः ;

चालः, चालः-चलः, चिचलिषः, चाचलः ;

चलितुत्, चालयितुम्-चलयितुम्, चिचलिषितुम्, चाचलितुम् ;

[5]चलितिः, चालना-चलना, चिचलिषा, चाचला ;

चलनम्, चालनम्-चलनम्, चिचलिषणम्, चाचलनम् ;

चलित्वा, चालयित्वा-चलयित्वा, चिचलिषित्वा, चाचलित्वा ;

प्रचल्य, प्रचाल्य-[6]प्रचलय्य, प्रचिचलिष्य, प्रचाचल्य ;

---

1. 'ज्वलितिकसन्तेभ्यो णः' (3-1-140) इति कर्तरि वा णः, पक्षे पचाद्यच् ।
2. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छीलिको युच् ।
3. 'चरिचलिपतिवदीनां द्वित्वमचि, आक् चाभ्यासस्य' (वा. 3-1-134) इति द्वित्वम्, अभ्यासस्य आगागमः । पक्षे चलः इत्यपि साधुः ।
4. 'सासहिवावहिपापतिचाचलीनामुपसंख्यानम्' (वा. 3-2-171) इति वचनात् किः, किन् वा प्रत्ययः । द्वित्वादिकं बोध्यम् ।
5. 'तितुत्रेष्वग्रहादीनाम्—' (वा. 7-2-9) इति वचनात् भणितिरित्यत्रेव इड् भवति ।
6. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।

A. 'तां प्राविशत् कपिव्याघ्रस्तरूनचलयन् शनैः ।' भ. का. 8-60.

B. 'ज्वालेन तापेन चला जडाङ्गीरटालशोकट्वलितप्रतापाः ॥' धा. का. 2-21.

चालम् २, चलित्वा २, } चालम् २-[1]चलम् २-चालम् २, चालयित्वा-२, चलयित्वा २, } चिचलिषम् २, चिचलिषित्वा २, } चाचलम् २ ; चाचलित्वा २. }

(511) " चल विलसने " (VI-तुदादिः-1356. अक. सेट्. पर.)

'—भृत्यां चालयेत्, कम्पने चलेत् ।' (श्लो. 158) इति देवः ।

चालकः-लिका, चालकः-लिका, चिचलिषकः-षिका, चाचलकः-लिका ;

इत्यादीनि सर्वाण्यपि रूपाणि भौवादिकचलतिवत् (511) बोध्यानि । [A]चलन्-न्ती-ती, इति शतरि स्त्रियां रूपद्वयम् ।

(512) " चल भृतौ " (X-चुरादिः-1608. सक. सेट्. उभ.)

भृतिः=भरणम्, पोषणमिति यावत् ।

'—भृत्यां चालयेत्, कम्पने चलेत् ।' (श्लो. 158) इति देवः ।

चालकः-लिका, [B]चाल्यम्, इत्यादीनि रूपाणि सर्वाण्यपि ण्यन्तात् भौवादिकचलतिवत् (510) ऊह्यानि । ण्यन्तात् सनि तु—

चिचालयिषकः-षिका, चिचालयिषिता-त्री, चिचालयिषन्-न्ती,
चिचालयिषिष्यन्-न्ती-ती, चिचालयिषमाणः, चिचालयिषिष्यमाणः,
चिचालयिट्-यिषौ-यिषः, चिचालयिषितम्-तः-तवान् ; चिचालयिषुः,
चिचालयिषितव्यम्, चिचालयिषणीयम् ; चिचालयिष्यम्,

ईषच्चिचालयिषः-
दुश्चिचालयिषः-
सुचिचालयिषः } चिचालयिष्यमाणः, चिचालयिषः, चिचालयिषितुम् ;

चिचालयिषा, चिचालयिषणम्, चिचालयिषित्वा, प्रचिचालयिष्य ;

चिचालयिषम् २ ; चिचालयिषित्वा २. } इति रूपाणीति विशेषः ।

---

1. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ उपधाया दीर्घविकल्पः ।

A. 'चिलितपीतपटेन चलन् इलन् अविलितोरुकृपां परितो दशम् ॥' धा. का. 2-78.

B. 'काल्यप्रवेदनकरोऽयमवेलयद् द्राग् अन्याश्च तेलितकृपः खलु कंसचाल्यान् ।' कंसचाल्यान्=कंसपोष्यान् इत्यर्थः । धा. का. 3-22.

## (511) "चष भक्षणे" (I-भ्वादिः-889. सक सेट्. उभ.)

चाषकः-षिका, चाषकः-षिका, चिचषिषकः-षिका, चाचषकः-षिका ;
चषिता-त्री, चाषयिता-त्री, चिचषिषिता-त्री, चाचषिता-त्री ;
चषन्-न्ती, [1]चाषयन्-न्ती, चिचषिषन्-न्ती, —
चषिष्यन्-न्ती-ती, चाषयिष्यन्-न्ती-ती, चिचषिषिष्यन्-न्ती-ती ;
चषमाणः, —, चिचषिषमाणः, चाचष्यमाणः ;
चषिष्यमाणः, —, चिचषिषिष्यमाणः, चाचषिष्यमाणः ;
[2]सञ्चट्-सञ्चड्-सञ्चषौ-सञ्चषः ; —, —
चषितम्-तः, चाषितः, चिचषिषितः, चाचषितः-तवान् ;
चषः, चाषः, चिचषिषुः, चाचषः ;
चषितव्यम्, चाषयितव्यम्, चिचषिषितव्यम्, चाचषितव्यम् ;
चषणीयम्, चाषणीयम्, चिचषिषणीयम्, चाचषणीयम् ;
चाष्यम्, चाष्यम्, चिचषिष्यम्, चाचष्यम् ;
ईषच्चषः-दुश्चषः-सुचषः ; —, —
चष्यमाणः, चाष्यमाणः, चिचषिष्यमाणः, चाचष्यमाणः ;
[A]चाषः, चाषः, चिचषिषः, चाचषः ;
चषितुम्, चाषयितुम्, चिचषिषितुम्, चाचषितुम् ;
[3]चष्टिः, चाषणा, चिचषिषा, चाचषा ;
चषणम्, चाषणम्, चिचषिषणम्, चाचषणम् ;
चषित्वा, चाषयित्वा, चिचषिषित्वा, चाचषित्वा ;
विचष्य, विचाष्य, विचिचषिष्य, विचाचष्य ;

---

1. भक्षणार्थकत्वादस्य धातोः 'निगरणचलनार्थेभ्यश्च' (1-3-87) इत्यनेन ण्यन्तात् शतैव, न तु शानच् ।
2. 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वेन डः ।
3. 'तितुत्र—' (7-2-9) इत्यादिना इण्निषेधः । तकारस्य 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारः ।

A. 'लाषेण चाषांश्छषिताञ्झषैश्च प्रभक्ष्य भक्षन्ति यदम्बु नीचाः ।'
धा. का. 2-28

चाषम् २, चषित्वा २, } चाषम् २, चाषयित्वा २, } चिचषिषम् २, चिचषिषित्वा २, } चाचषम् २ ; चाचषित्वा २ ; }

[1]चषकः, [2]चषालम्.

## (514) "चह परिकल्कने" (I-भ्वादिः-729. सक. सेट्. पर.)

परिकल्कनम्=शाठ्यम्, दम्भो वा।

'चहयेच्चहतीत्येते चहेः स्तां परिकल्कने॥' (श्लो. 196) इति देवः।

| | | | |
|---|---|---|---|
| चाहकः-हिका, | [3]चाहकः-हिका, | चिचहिषकः-षिका | चाचहकः-हिका ; |
| चहिता-त्री, | चाहयिता-त्री, | चिचहिषिता-त्री, | चाचहिता-त्री ; |
| चहन्-न्ती, | चाहयन्-न्ती, | चिचहिषन्-न्ती ; | — |
| चहिष्यन्-न्ती-ती, | चाहयिष्यन्-न्ती-ती, | चिचहिषिष्यन्-न्ती-ती ; | |
| — | चाहयमानः, चाहयिष्यमाणः, | चाचह्यमानः, | चाचहिष्यमाणः ; |
| [4]प्रचट्-प्रचड्-प्रचहौ-प्रचहः ; | — | — | — |
| चहितम्-तः, | चाहितः, | चिचहिषितः, | चाचहितः-तवान् ; |
| चहः, | चाहः, | चिचहिषुः, | चाचहः ; |
| चहितव्यम्, | चाहयितव्यम्, | चिचहिषितव्यम्, | चाचहितव्यम् ; |
| चहनीयम्, | चाहनीयम्, | चिचहिषणीयम्, | चाचहनीयम् ; |
| चाह्यम्, | चाह्यम्, | चिचहिष्यम्, | चाचह्यम् ; |
| ईषच्चहः-दुश्चहः-सुचहः ; | | — | — |
| चह्यमानः; | चाह्यमानः, | चिचहिष्यमाणः, | चाचह्यमानः ; |
| [A]चाहः, | चाहः, | चिचहिषः, | चाचहः ; |
| चहितुम्, | चाहयितुम्, | चिचहिषितुम् ; | चाचहितुम् ; |

---

1. 'क्वुन् शिल्पिसंज्ञयोः' [द. उ. 3-5] इति क्वुन्। चषकः=पक्षिविशेषः।
2. औणादिके [द. उ. 10-17] आलप्रत्यये रूपम्। चषन्ति तस्मिन् इति चषालः=यज्ञभाण्डम्।
3. धातुपाठेऽर्थनिर्देशस्योपलक्षणतया, परिकल्कनभिन्नेऽर्थे ण्यन्तात् इमानि रूपाणि लिखितानि। परिकल्कनेऽर्थे चुरादिपठितस्य घटादिषु पाठात्, मित्त्वप्रयुक्तानि कार्याणि उत्तरत्र (516 धातौ) प्रदर्श्यन्ते।
4. 'हो ढः' (8-2-31) इति ढत्वे, अवसाने चर्त्वविकल्पः।

A. 'चाहेनामहितस्य चास्य निभृतोद्योगं रहस्यूचिवान्
गन्तव्यं खलु रंहसेति च दृढामाज्ञां प्रभोरभ्यधात्॥' धा. का. 1-61.

[1]चाढिः, चाहना, चिचहिषा, चाचहा ;
चहनम्, चाहनम्, चिचहिषणम्, चाचहनम् ;
चहित्वा, चाहयित्वा, चिचहिषित्वा, चाचहित्वा ;
प्रचह्य, प्रचाह्य, प्रचिचहिष्य, प्रचाचह्य ;
चाहम् २, चहित्वा २, } चाहम् २, चाहयित्वा २, } चिचहिषम् २, चिचहिषित्वा २, } चाचहम् २ ; चाचहित्वा. }

(515) "चह परिकल्कने" (X-चुरादिः-1627. सक. सेट्. उभ.) ज्ञपादिः ।

'चप—' इति दुर्गसम्मतः पाठः ।

'चहयेच्चहतीत्येते चहेः स्तां परिकल्कने ॥' (श्लो. 196) इति देवः ।

[A]चहकः[2]-हिका, चिचहयिषकः-षिका ; चहयिता-त्री, चिचहयिषिता-त्री ;
चहयन्-न्ती, चिचहयिषन्-न्ती ; चहयिष्यन्-न्ती-ती, चिचहयिषिष्यन्-न्ती-ती;
चहयमानः, चिचहयिषमाणः ; चहयिष्यमाणः, चिचहयिषिष्यमाणः ;
[3]प्रचट्-प्रचड्-प्रचहौ-प्रचहः ; — —
चहितम्-तः, चिचहयिषितः-तवान् ; चहः, चिचहयिषुः ;
चहयितव्यम्, चिचहयिषितव्यम् ; चहनीयम्, चिचहयिषणीयम् ;
चह्यम्, चिचहयिष्यम् ; ईषच्चहः-दुश्चहः-सुचहः ; —
चह्यमानः, चिचहयिष्यमाणः ; चहः, चिचहयिषः ;
चहयितुम्, चिचहयिषितुम् ; [4]चहना, चिचहयिषा ;
चहनम्, चिचहयिषणम् ; चहयित्वा, चिचहयिषित्वा ;
[5]प्रचहय्य, प्रचिचहयिष्य ; — —
[6]चहम् २, चाहम् २, चहयित्वा २, } चिचहयिषम् २, चिचहयिषित्वा २. }

1. 'सितुश्र—' (7-2-9) इतीण्णिषेधः । अनन्तरम्, ढत्वधत्वष्टुत्वढलोपदीर्घेषु रूपमेवं भवति ।

---

2. ज्ञपादिषु अस्य पाठात् मित्वेन, 'मितां ह्रस्वः' (6-4-92) इति णौ उपधाया ह्रस्वः । एवमेव ण्यन्तात् सन्यपि उपधाह्रस्वो बोध्यः ।
3. 'हो ढः' (8-2-31) इति ढत्वे, अवसाने चर्त्वविकल्पः ।
4. 'ण्यासश्रन्थो युच्' (3-3-107) इति युच् ।
5. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
6. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुल्परे णौ दीर्घविकल्पः ।
A 'चाणूर एनमथ विज्ञपयन् नृपाज्ञां चण्डातकं सुयमयंश्चहको बभाषे ।'
धा. का. 3-25.

## (516) "चह परिकल्कने" (X-चुरादिः-1867. सक. सेट्. उभ.)

कथादिरदन्तश्च ।

'चहयेच्चहतीत्येते चहेः स्तां परिकल्कने ॥' (श्लो. 196) इति देवः ।

चहकः-हिका, चिचहयिषकः-षिका ; इत्यादीनि सर्वाण्यपि रूपाणि पूर्वलिखितचौरादिकचहयतिवत् (516) ज्ञेयानि । चहम् २, चहयित्वा २, इति णमुलि एकमेव रूपम् । 'चिण्णमुलोः—' (6-4-93) इति नात्र प्रवर्तते । अस्यादन्तेषु पाठादल्लोपस्य स्थानिवद्भावेन व्यवधानात्, णित्परत्वाभावात्, 'अत उपधायाः' (7-2-116) इति वृद्धिर्न भवति । अतः रूपेषु न विशेषः । चुरादावेव पुनः पाठस्य फलं तु—अस्य धातोः चङि अचचहत्—इति, पूर्वपठितस्य (516) धातोः अचीचहत् इति च रूपभेद इति ज्ञेयम् ।

## (517) "चायृ पूजानिशामनयोः" (I-भ्वादिः-880. सक. सेट्. उभ.)

चायकः-यिका, चायकः-यिका, चिचायिषकः-षिका, [1]चेकीयकः-यिका ;
चायिता-त्री, चाययिता-त्री, चिचायिषिता-त्री, चेकीयिता-त्री ;
चायन्-न्ती, चाययन्-न्ती, चिचायिषन्-न्ती ; —
चायिष्यन्-न्ती-ती, चाययिष्यन्-न्ती-ती, चिचायिषिष्यन्-न्ती-ती ; —
चायमानः, चाययमानः, चिचायिषमाणः, चेकीयमानः ;
चायिष्यमाणः, चाययिष्यमाणः, चिचायिषिष्यमाणः ; चेकीयिष्यमाणः ;
[2]प्रचाः-प्रचौ-प्रचाः ; — — —

---

1. 'चायः की' (6-1-21) इति यङि कीभावः। द्वित्वे, अभ्यासस्य चुत्वे, 'गुणो यङ्लुकोः' (7-4-82) इति गुणः।

2. क्विपि, 'लोपो व्योर्वलि' (6-1-66) इति वलि लोपे, सुपि रुत्वविसर्गौ। आकारान्तोऽयं शब्दः।

| [1]अपचितः- [A]अपचायितः-तम्, | चायितः, | चिचायिषितः, | चेकीयितः-तवान्; |
|---|---|---|---|
| चायः, | चायः, | चिचायिषुः, | [2]चेक्यः; |
| चायितव्यम्, | चाययितव्यम्, | चिचायिषितव्यम्, | चेकीयितव्यम्; |
| चायनीयम्, | चायनीयम्, | चिचायिषणीयम्, | चेकीयनीयम्; |
| [B]चाय्यम्, | चाय्यम्, | चिचायिष्यम्, | चेकीय्यम्; |
| ईषच्चायः-दुश्चायः-सुचायः; | | — | — |
| चाय्यमानः, | चाय्यमानः, | चिचायिष्यमाणः, | चेकीय्यमानः; |
| चायः, | चायः, | चिचायिषः, | चेकीयः; |
| चायितुम्, | चाययितुम्, | चिचायिषितुम्, | चेकीयितुम्; |
| [3]अपचितिः, | चायना, | चिचायिषा, | चेकीया; |
| चायनम्, | चायनम्, | चिचायिषणम्, | चेकीयनम्; |
| चायित्वा, | चाययित्वा, | चिचायिषित्वा, | चेकीयित्वा; |
| निचाय्य, | प्रचाय्य, | प्रचिचायिष्य, | प्रचेकीय्य; |
| चायम् २, चायित्वा २, | चायम् २, चाययित्वा २, | चिचायिषम् २, चिचायिषित्वा २, | चेकीयम् २; चेकीयित्वा २. |

---

1. 'अपचितश्च' (7-2-30) इति निष्ठायां, प्रकृतेश्चिभावः, प्रत्ययस्य इडभावश्च वा निपात्यते। पक्षे अपचायितः इत्यपि भवति। बालमनोरमायां तु चिञो ण्यन्तस्य 'अपचितः' इति निपातनम्—इत्युक्तम्। भाष्ये तु चायतेरेव निपातनं कृतं दृश्यते।
2. यङो लुकि, 'एरनेकाचः—' (6-4-82) इति यणि रूपमेवम्।
3. 'क्तिनि नित्यं चिभावो वक्तव्यः' (वा. 7-2-30) इति वचनात्, 'गुरोश्च हलः (3-3-103) इत्यस्यापवादः क्तिनि चिभावः।

A. 'भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः [त्विषः]।
क्षणेन क्षीणविक्रान्ताः कपिनाऽनेषत क्षयम् ॥' भ. का. 9-22.

B. चाय्या व्ययद्दाशविलोकमेषप्रेषज्झषा यासदघं स्पशन्ती ॥' धा. का. 2-27.

# शुद्धिपत्रिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 251 | 1 | क्र्गी | क्वि |
| 252 | 1 | 112 | 252 |
| 254 | 27 | ....मागमः। | ....मागमो वा। |
| 255 | 22 | ण्यन्ताम् | ण्यन्तात् |
| 257 | 25 | रुत्वविसर्गौ। | दीर्घ विसर्गः 1 |
| 263 | 8 | उक्रीर्तिः | उक्रीर्तः |
| 274 | 12 | क्मर्यमाणः, चि.... | क्मार्यमाणः, चि.... |
| 275 | 20 | चिक्रथित्वा 2 | चिक्रथिषित्वा |
| 280 | 7 | न्ती-न्ती | न्ती-ती |
| 286 | 19 | क्रीडम् 2 | क्रीडित्वा 2 |
| 290 | 9 | बान्धव.... | बान्धवा... |
| 293 | 14 | दिवादिः- | दिवादिः 1207. |
| 299 | 13 | क्लेशः- | क्लेशकः- |
| 303 | 5 | चेक्लेवि...चिक्ले.... | चिक्लेवि....चेक्ले... |
| 304 | 13 | विक्लशौ | विक्लेशौ- |
| ,, | 15 | शेनः | क्लेशनः, |
| 308 | 32 | मर्णुवानः | मर्णवानः |
| 313 | 13 | (6-3-93) | (6-4-93) |
| 318 | 13 | 1047 | 1407 |
| 320 | 28 | मविक्षित | मविक्षत |
| ,, | 32 | मर्णुवानः | मर्णवानः |
| ,, | 30 | केऽण्यल्प | केऽप्यल्प |
| 336 | 8 | and 9 मध्ये-क्षोटनम्, चुक्षोटयिषणम्; | |
| 338 | 7 | क्षमायः, चि- | क्षमापः, चि... |
| 342 | 18 | भ्वादिः 88 | भ्वादिः 120 |
| 352 | 11-12 | मध्ये-खादः, खादः चिखादिषः, | चाखादः; |
| 353 | 16 | चेखिदः; | चेखेदः; |
| 358 | 8 | प्रखौ-प्रखः; | प्रखौ-प्रखाः; |
| 359 | 27 | 'खोड्ड' | 'खोड्' |
| 363 | 31 | गल | गलत् |
| 364 | 8 | चिगडिष्यम्, | जिगडिष्यम्, |
| 367 | 25 | माण शब्दः | माणः शब्दः |
| 372 | 24 | सशिष्यम् ॥ | सशिष्यम् ॥' |
| ,, | 31 | ये स | ये च |
| 373 | 30 | पत्राणा | पात्राणा |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 375 | 1 | गर्ज | गर्ब |
| ,, | 26 | अषच् | अभच् |
| 381 | 26 | पङ्क्तयनन्तरम् उत्तरपुटे (382) टिप्पण्याः प्रथमपङ्क्तिरत्र भाव्या । | |
| 382 | 26 | सुप्यजादौ | सुप्यजातौ |
| 383 | 30 | वनिन्- | वनिब्- |
| 387 | 27 | क्त्वायामिड्विक.... | इड्विकल्प ... |
| 388 | 29 | तद्धुवत् | तद्ध्रुवत् |
| ,, | 30 | धा. का. 8-82 | धा. का. 2-82. |
| 391 | 23 | किर कः...क्लीब ... | किरः कः....क्लीब... |
| 396 | 13 | ईषज्जुप्सः | ईषज्जुगुप्सः |
| 397 | 2 | सेट्र | अक. सेट्. |
| 399 | 32 | युतात् | युतान् |
| 401 | 6 | प्रगोपायित्वा | गोपायित्वा |
| 403 | 2 | अत्र[1]गोरकः इत्यत्र विद्यमाना संख्या उत्तरपङ्क्तौ गुरिता इत्यत्र योज्या । | |
| ,, | 7 | सङ्गूरौ | सङ्गुरौ |
| 407 | 3 | सञ्जुघुक्षः | सञ्जुघुक्षुः |
| 408 | 16 | दुगूरः | दुर्गूरः |
| 415 | 17 | सेट्र. अद.... | सेट्र. आत्म. अद.... |
| 416 | 26 | ष्णुसु च' | ष्णुसु' |
| 419 | 24 | शविकरण... | शः विकरण... |
| 420 | 23 | ...पदे...1-4-2 | पपदो...3-2-1 |
| 422 | 6 | भवत्येव । | वा भवत्येव । |
| 433 | 14 | सङ्ग्रथ्य, | सङ्ग्रन्थ्य, |
| 441 | 13 | जुग्रुचिषितव्यम् | जुग्लुचिषितव्यम् |
| 445 | 20 | जाग्लायक | जाग्लायकः |
| 449 | 27 | रूपञ् | रूपम् । |
| 455 | 14 | (467) | (466) |
| ,, | 27 and 31, | प्रघिण्य परिघृण्य प्रघृण्य, | प्रघिण्ण्य...परिघृण्ण्य ...प्रघृण्ण्य |
| 460 | 1 | घूण | घूर्ण |
| 463 | 13 | जिघर्णिषिषिष्यन् | जिघर्णिषिष्यन् |
| 469 | 28 | ... शानजौ | ...शानचौ |
| 476 | 2 | चनिना | चनिता |
| 480 | 4 | चपनन् | चपनम् |
| 482 | 31 | झमझमन.... | झमझेमन..., |